**शेषे, शयाथे, शेध्वे; शये, शेवहे, शेमहे** । **ब्रूञ्** व्यक्तायां वाचि; लडादयः; **ब्रुव ईट्** (VII. 3. 93.)—ब्रुव उत्तरस्य हलादेः पितस्सार्वधातुकस्य ईडागमो भवति ; **ब्रवीति** । सार्वधातुकमपित् ( I. 2. 4.) इति ङित्त्वे, क्ङिति च ( I. 1. 5. ) इति गुणप्रतिषेधः ; **ब्रूतः** । अचि श्नुधातुभ्रुवामित्यादिना (VI. 4. 77.) उवङादेशः; **ब्रुवन्ति** । एवमेव—**ब्रवीषि, ब्रूथः, ब्रूथ; ब्रवीमि, ब्रूवः, ब्रूमः**—इति भवन्ति । आत्मनेपदे—**ब्रूते, ब्रुवाते, ब्रुवते; ब्रूषे, ब्रुवाथे, ब्रूध्वे; ब्रुवे, ब्रूवहे, ब्रूमहे** । **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः** (III. 4. 82.), **विदो लटो वा** ( III. 4. 83. ), इति वर्तमाने, **ब्रुवः पञ्चानामादित आहो ब्रुवः** ( III. 4. 84. )—ब्रुवः परस्य लडादेशानां परस्मैपदानामादिभूतानां पञ्चानां पञ्चैव णल् अतुस् उस् थल् अथुस् इत्येते आदेशा भवन्ति, ब्रुव आहश्च भवति । इति—**आह, आहतुः, आहुः** । **झलो झलि** (VIII. 2. 26.) इत्यनुवर्तमाने, **आहस्थः** (VIII. 2. 35.)—आहो हकारस्य थकारादेशो भवति झलि परतः पदान्ते च । ततः—खरि च ( VIII. 4. 55.) इति चर्त्वम् ; **आत्थ, आहथुः** ॥

2. **हन** हिंसागत्योः, **हन्ति** । सार्वधातुकमपिदिति (I. 2. 4. ) ङित्त्वे, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (VI. 4. 37.)—अनुदात्तोपदेशानां धातूनां वनतेः तनोत्यादीनां च अनुनासिकस्य लोपो भवति झलादौ किति ङिति प्रत्यये परतः; **हतः** । **गमहनजनखनघसां लोपः क्ङित्यनङि** ( VI. 4. 98. )—

गम्लृ गतौ, हन हिंसागत्योः, जनी प्रादुर्भावे जन जनने—द्वयोरपि ग्रहणम् —खन खनने, घस्लृ अदने—अदादेशश्च घस्लृ—इत्येतेषां धातूनामुपधाया लोपो भवति अजादौ क्ङिति अङ्वर्जे प्रत्यये परतः। अनङि इति किम्? अगमत्, अवसत्। अत्र पुषादि ( III. 1. 55. ) इत्यादिना अङ्।
**हो हन्तेर्ञ्णिन्नेषु** ( VII. 3. 54. )—हन्तेर्धातोर्हकारस्य कवर्गादेशो भवति ञिति णिति प्रत्यये परतो नकारे च। संवारनादमहाप्राणवानिति हकारस्य घकारः। आदेशविधानसामर्थ्यात् **अचः परस्मिन्पूर्वविधौ** (I. 1. 57.) इति स्थानिवद्भावो न; **घ्नन्ति**। एवमेव-**हंसि, हथः, हथ; हन्मि, हन्वः, हन्मः**। **हन्तेरत्पूर्वस्य** ( VIII. 4. 22.) इत्यनुवर्तमाने, **वमोर्वा** ( VIII. 4. 23. )—वकारमकारयोः परतः हन्तेरुपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो वा भवति; **प्रहण्मि प्रहन्मि, प्रहण्वः प्रहन्वः, प्रहण्मः प्रहन्मः**। **आङो यमहनः** ( I. 3. 28. )—आङ्पूर्वाभ्यां यम् हन् इत्येताभ्यामकर्मकक्रियावचनाभ्यामात्मनेपदं भवति; **आहते, आघ्नाते**। आत्मनेपदेष्वनतः ( VII. 1. 5. ) इत्यदादेशः; हो हन्तेर्ञ्णिन्नेषु (VII. 3. 54.) इति हकारस्य घकारः;**आघ्नते**। एवमेव—**आहसे, आघ्नाथे, आहध्वे; आघ्ने, आहन्वहे, आहन्महे**। अकर्मकादिति किम्? आहन्ति वृषलं पादेन। **स्वाङ्गकर्मकाच्चेति वक्तव्यम्** (वा)—इति **आहते शिरः स्वमङ्गम्**। स्वाङ्गकर्मकादिति किम्? तेनेह न भवति—आहन्ति शिरः परकीयम्॥

3. **द्विष** अप्रीतौ; अकारः स्वरितञितः (I. 3. 72.) इति विशेषणार्थः; ष्टुना ष्टुः (VIII. 4. 41.) इति ष्टुत्वम्; **द्वेष्टि, द्विष्टः, द्विषन्ति**। **षढोः कः सि** ( VIII. 2. 41. )—षकारढकारयोः ककारादेशो भवति सकारे परतः। आदेशप्रत्यययोः ( VIII. 3. 59. ) इति

षत्वम् ; गुणः ; **द्वेक्षि** । **द्विष्टः, द्विष्ट ; द्वेष्मि, द्विष्वः, द्विष्मः । द्विष्टे, द्विषाते, द्विषते ; द्विक्षे, द्विषाथे** ; ष्टुत्वेन धस्य ढः— **द्विड्ढ्वे ; द्विषे, द्विष्वहे, द्विष्महे** । **दुह** प्रपूरणे; स्वरितेत्; प्रपूरणं त्याजनं, पूरणाभावः, रिक्तीकरणमिति यावत्। तिपि शपो लुक्; पित्सु वचनेषु पुगन्तलघूपधस्य च ( VII. 3. 86. ) इति गुणः ; दादेर्धातोर्घः ( VIII. 2. 32. ) इति हकारस्य घकारः । **झषस्तथोर्धोऽधः** (VIII. 2. 40.)— दधातिं वर्जयित्वा झष उत्तरस्य तकारस्य थकारस्य च धकारः। इति—**दोग्धि, दुग्धः, दुहन्ति** । **एकाचो बशो भष् झषन्तस्य स्ध्वोः** ( VIII. 2. 37. )— एकाचो धातोः झषन्तस्य बशः स्थाने भषादेशो भवति सकारादौ प्रत्यये ध्वे च परतः, पदान्ते च । इति दस्य धः ; सस्य षः ; **धोक्षि** । **दुग्धः, दुग्ध ; दोह्मि, दुह्वः, दुह्मः । दुग्धे, दुहाते, दुहते** । **दिह** उपचये ; **देग्धि, दिग्धः, दिहन्ति ; धेक्षि, दिग्धः, दिग्ध ; देह्मि, दिह्वः, दिह्मः । सन्दिग्धे, सन्दिहाते, सन्दिहते ; सन्धिक्षे, सन्दिहाथे, सन्धिग्ध्वे ;** इत्यादि । प्रपूर्वो निपूर्वश्च ; **नेर्गद-नद-पत-पद-घु-मा-स्यति-हन्ति-याति-वाति-द्राति-प्साति-वपति-वहति-शाम्यति-चिनोति-देग्धिषु च** (VIII. 4. 17. )—उपसर्गस्थान्निमित्तादुत्तरस्य नेर्नकारस्य णकारः स्यात् गदादौ परे । इति णत्वम् ; गुणः ; **प्रणिदेग्धि, प्रणिदिग्धे,** इत्यादि । **लिह** आस्वादने; हो ढः (VIII. 2. 31.) इति ढत्वम् ; झषस्तथोर्धोऽधः ( VIII. 2. 40. ) इति धत्वम् ; ष्टुत्वम् ; ढो ढे लोपः ( VIII. 2. 31. ) इति ढकारस्य लोपः ; **लेढि** । ढ्रलोपे पूर्वस्य दीर्घोऽणः ( VI. 3. 111. ) इति दीर्घः ;

लीढः। लिहन्ति ; लेक्षि, लीढः, लीढ ; लेह्मि, लिह्वः; लिह्मः।
लीढे, लिहाते, लिहते ; लिक्षे, लिहाथे, लीढ्वे ; लिहे, लिह्वहे,
लिह्महे ॥

4. **चक्षिङ्** व्यक्तायां वाचि । ङकारः **चक्षिङः ख्याञ्** (II. 4. 54.) इति विशेषणार्थः ; आत्मनेपदार्थश्च । **स्कोस्संयोगाद्योरन्ते च** ( VIII. 2. 29. )—पदान्ते झलि परतो यस्संयोगः तदाद्योस्सकारककारयोर्लोपो भवति । इति ककारलोपः ; ष्टुत्वम् ; प्रायेणायमाङ्पूर्वः ; **आचष्टे, आचक्षाते, आचक्षते ; आचक्षे, आचक्षाथे, आचड्ढ्वे ; आचक्षे, आचक्ष्वहे, आचक्ष्महे । ईड** स्तुतौ ; ष्टुत्वचर्त्वाभ्यां पूर्वपरयोः टकारः—**ईट्टे, ईडाते, ईडते । ईडजनोर्ध्वे च** (VII. 2. 78.)—ईड जन इत्येताभ्यामुत्तरस्य ध्वे इत्येतस्य सार्वधातुकस्य से इत्येतस्य च इडागमो भवति ; **ईडिषे। ईडाथे, ईडिध्वे ; ईडे, ईड्वहे ईड्महे । ईश** ऐश्वर्ये ; व्रश्चादिना (VIII. 2. 36.) षत्वम् ; ष्टुत्वम् ; **ईष्टे, ईशाते, ईशते । ईशस्से** (VII. 2. 77. )—ईश उत्तरस्य से इत्येतस्य सार्वधातुकस्य इडागमो भवति ; **ईशिषे । ईशाथे, ईड्ढ्वे**—इडागमो यदीष्यते—**ईशिध्वे ; ईशे, ईश्वहे, ईश्महे । आस** उपवेशने ; **आस्ते, आसाते, आसते ; आस्से, आसाथे । धि च** ( VIII. 2. 25. )—धकारादौ प्रत्यये परतः सकारस्य लोपो भवति ; **आध्वे । आसे, आस्वहे, आस्महे । णिसि** चुम्बने ; णो नः ( VI. 1. 65. ) इति नत्वम् ; इदितो नुम् धातोः ( VII. 1. 58. ) इति नुमागमः ; **निंस्ते, निंसाते,**

**निंसते ; निंस्से, निंसाथे, निन्ध्वे ; निंसे, निंस्वहे, निंस्महे ।** प्रपूर्वः ; **वा निंसनिक्षनिन्दाम्** ( VIII. 4. 33. )—निंस निक्ष निन्द इत्येतेषां नकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य वा णकारादेशो भवति ; **प्रणिंस्ते प्रनिंस्ते** इत्यादि । चक्षिङादयो णिसिपर्यन्ता अनुदात्तेत इत्यात्मनेभाषाः ॥

5. **द्यु** अभिगमने ; **यु** मिश्रणामिश्रणयोः ; **रु** शब्दे ; **णु** स्तुतौ । **नाभ्यस्तस्याचि पिति सार्वधातुके** ( VII. 3. 87. ) इत्यनुवर्तमाने, **उतो वृद्धिर्लुकि हलि** ( VII. 3. 89. )—उकारान्तस्याङ्गस्य वृद्धिर्भवति लुग्विषये हलादौ पिति सार्वधातुके परतः; **द्यौति, द्युतः, द्युवन्ति ; द्यौषि, द्युथः, द्युथ ; द्यौमि, द्युवः, द्युमः ।** एवमेव—**यौति, युतः, युवन्ति ; रौति, रुतः, रुवन्ति ; नौति, नुतः, नुवन्ति**—इत्यादि । **ष्टुञ्** स्तुतौ ; अभिपूर्वः ; उपसर्गात् सुनोतीत्यादिना ( VIII. 3. 65. ) मूर्धन्यादेशः ; **अभिष्टौति, अभिष्टुतः, अभिष्टुवन्ति ; अभिष्टौषि, अभिष्टुथः, अभिष्टुथ ; अभिष्टौमि, अभिष्टुवः, अभिष्टुमः।** एवं **परिष्टौति, परिष्टुतः,परिष्टुवन्ति;** इत्यादि । **ऊर्णुञ्** आच्छादने ; **ऊर्णोतेर्विभाषा** (VII. 3. 90.) —ऊर्णोतेर्धातोर्विभाषा वृद्धिर्भवति लुग्विषये हलादौ पिति सार्वधातुके परतः; **प्रोर्णौति प्रोर्णोति, प्रोर्णुतः, प्रोर्णुवन्ति ;** इत्यादि । ञित्त्वात्— **प्रोर्णुते, प्रोर्णुवाते, प्रोर्णुवते**—इत्यादि च भवति ॥

6. **इण्** गतौ ; शब्लुक् ; पित्सु गुणः ; **एति, इतः । इणो यण्** ( VI. 4. 81. )—इणोऽङ्गस्य यणादेशो भवति अजादौ प्रत्यये

परतः ; **यन्ति** । एवमेव—**एषि, इथः, इथ ; एमि, इवः, इमः** । **इङ्** अध्ययने ; इङिकावध्युपसर्गान्न व्यभिचरतः ; **अधीते** । अचि श्नुधात्वित्यादिना ( VI. 4. 77.) इयङादेशः ; सवर्णदीर्घः; **अधीयाते** । **अधीयते ; अधीषे, अधीयाथे, अधीध्वे ; अधीये, अधीवहे, अधीमहे** । **इक्** स्मरणे ; ककारलोपः ; प्रयोजनम् **अधीगर्थदयेशां कर्मणि** ( II. 3. 52. ) इति विशेषणम् । धातुसंज्ञायां लट्, तिप्, शप्, लुक् ; पित्सु गुणः ; यणादेशश्च । **अध्येति**, सवर्णदीर्घः— **अधीतः, अधीयन्ति ; अध्येषि, अधीथः, अधीथ ; अध्येमि, अधीवः, अधीमः** । **द्रा** कुत्सायां गतौ ; प्रपूर्वो निपूर्वश्च । नेर्गदेत्यादिना (VIII.4. 17. ) णकारादेशः । **प्रणिद्राति, प्रणिद्रातः, प्रणिद्रान्ति ; प्रणिद्रासि, प्रणिद्राथः, प्रणिद्राथ ; प्रणिद्रामि, प्रणिद्रावः, प्रणिद्रामः** । **विद्** ज्ञाने ; **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः** ( III. 4. 82. ) इत्यनुवर्तमाने, **विदो लटो वा** (III. 4. 83.)—विद उत्तरस्य लटः परस्मैपदानां वा णलादयः आदेशा भवन्ति । **वेद, विदतुः, विदुः ; वेत्थ, विदथुः, विद ; वेद, विद्व, विद्म** । पक्षे—**वेत्ति, वित्तः, विदन्ति**—इत्यादि भवति। सम्पूर्वः; **समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः** (I. 3, 29.) —सम्-पूर्वेभ्यो गमि ऋच्छि प्रच्छि स्वरति अर्ति श्रु विदि इत्येतेभ्य अकर्मकेभ्यो धातुभ्य आत्मनेपदं भवति ; **संवित्ते, संविदाते** । **वेत्तेर्विभाषा** ( VII. 1. 7. )—विदोऽज्ञादुत्तरस्य झादेशस्य अतो विभाषा रुडागमो भवति ; **संविद्रते** । पक्षे—**संविदते** । **संवित्से, संविदाथे, संविद्ध्वे ; संविदे, संविद्वहे, संविद्महे** ॥

7. **अस** भुवि ; **अस्ति**। **श्नसोरल्लोपः** ( VI. 4. 111.) —श्ना इत्येतस्य अस्तेश्च अकारस्य लोपो भवति सार्वधातुके क्ङिति परतः ; **स्तः, सन्ति** । **तासस्त्योर्लोपः** ( VII. 4. 50. )—तासेरस्तेश्च सकारस्य लोपो भवति, सकारादौ प्रत्यये परतः ; **असि** । **स्थः, स्थ ; अस्मि, स्वः, स्मः** । व्यतिपूर्वः; **कर्तरि कर्मव्यतिहारे** ( I. 3. 14. )—कर्मशब्दः क्रियावाची ; व्यतिहारो विनिमयः ; तस्मिन् कर्मव्यतिहारे वर्तमानाद्धातोरात्मनेपदं भवति ; **व्यतिस्ते**। **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः** ( VIII. 3. 87. )—उपसर्गस्थात् निमित्तात् प्रादुस्-शब्दाच्च उत्तरस्य यकारपरस्य अच्परस्य च अस्तिसकारस्य मूर्धन्यो भवति ; **व्यतिषाते, व्यतिषते** । **न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्** ( VIII. 3. 110. )इति न इति वर्तमाने, **सात्पदाद्योः** ( VIII. 3. 111. )—सादित्येतस्य पदादेश्च सकारस्य मूर्धन्यादेशो न भवति । इति आदेशप्रत्यययोः ( VIII. 3. 59. ) इति प्राप्तस्य षत्वस्य निषेधः ; तासस्त्योर्लोपः ( VII. 4. 50. ) इति सकारलोपः ; **व्यतिसे** । **व्यतिषाथे** ; धि चेति ( VII. 2. 25. ) सकारलोपः—**व्यतिध्वे** । **ह एति** ( VIII. 4. 52. )—तासेरस्तेस्सकारस्य हकारादेशो भवत्येति परतः ; **व्यतिहे** । अलोपः; **व्यतिस्वहे, व्यतिस्महे** ।

**मृजूष्** शुद्धौ; **मृजेर्वृद्धिः** ( VII. 2. 114. )—मृजेरङ्गस्येको वृद्धिर्भवति । गुणस्यापवादः ; रपरत्वम् ; व्रश्चादिना (VIII. 2. 36.) षत्वम् ; ष्टुत्वम् ; **मार्ष्टि, मृष्टः** । **मृजेरजादौ सङ्क्रमे विभाषा वृद्धिः** (भा. I. 1. 3.); सङ्क्रम इति गुणवृद्धिप्रतिषेधविषये

क्ङितां प्राचां संज्ञा; **मार्जन्ति, मृजन्ति। मार्क्षि, मृष्ठः, मृष्ठ; मार्ज्मि, मृज्वः, मृज्मः॥**

8. **रुदिर्** अश्रुविमोचने। पूर्ववल्लडादिकार्यम्। **रुदादिभ्यस्सार्वधातुके** ( VII. 2. 76. )—रुदादिभ्यः पञ्चभ्यो धातुभ्य उत्तरस्य वलादेस्सार्वधातुकस्य इडागमो भवति। पुगन्तलघूपधस्य च ( VII. 3. 86. ) इति गुणः; **रोदिति, रुदितः, रुदन्ति; रोदिषि, रुदिथः, रुदिथ; रोदिमि, रुदिवः, रुदिमः। ञिष्वप्** शये; **स्वपिति, स्वपितः, स्वपन्ति; स्वपिषि, स्वपिथः, स्वपिथ; स्वपिमि, स्वपिवः, स्वपिमः। अन** प्राणने; **अनिति**। प्रपूर्वः; **अनितेः** ( VIII. 4. 19. )—अनितेरुपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति; **प्राणिति, प्राणितः**, इत्यादि। **जक्ष** भक्षहसनयोः; **जक्षिति, जक्षितः। जक्षित्यादयष्षट्** ( VI. 1. 6. )—जक्षित्यादय इत्यत्र अतद्गुणसंविज्ञानो बहुव्रीहिः; अन्ये षड्धातवो जक्षितिश्च अभ्यस्तसंज्ञा भवन्ति। **अदभ्यस्तात्** ( VII. 1. 4. )—अभ्यस्ताज्झातपरस्य झस्य अत् इत्ययमादेशो भवति; **जक्षति। जक्षिषि, जक्षिथः, जक्षिथ; जक्षिमि, जक्षिवः, जक्षिमः।**

रोदितिस्स्वपितिश्चैव श्वसितिः प्राणितिस्तथा।
जक्षितिश्चेति विज्ञेयो रुदादिः पञ्चको गणः॥

9. **जागृ** निद्राक्षये; **जागर्ति, जागृतः, जाग्रति। दरिद्रा** दुर्गतौ; **दरिद्राति। इद्दरिद्रस्य** ( VI. 4. 114. )—दरिद्रा इत्येतस्य धातोरिकारादेशो भवति हलादौ क्ङिति सार्वधातुके परतः;

**दरिद्रितः** । **श्नाभ्यस्तयोरातः** ( VI. 4. 112. )—श्ना इत्येतस्य अभ्यस्तसंज्ञानाञ्च अङ्गानामाकारस्य लोपो भवति क्ङिति सार्वधातुके परतः ; **दरिद्रति** । **दरिद्रासि, दरिद्रिथः, दरिद्रिथ ; दरिद्रामि, दरिद्रिवः, दरिद्रिमः** । **शासु** अनुशिष्टौ ; **शास्ति** । **शास इदङ्हलोः** ( VI. 4. 34. )—शासेर्धातोरुपधाया इकारादेशो भवति अङि हलादौ क्ङिति परतः । **शासिवसिघसीनाञ्च** ( VIII. 3. 60. )—शास् वस् घस् इत्येतेषामिण्कवर्गाभ्यामुत्तरस्य मूर्धन्यादेशो भवति ; **शिष्टः** । **शासति ; शास्सि, शिष्ठः, शिष्ठ ; शास्मि, शिष्वः, शिष्मः** । **दीधीङ्** दीप्तिदेवनयोः ; **दीधीते** । एरनेकाचोऽसंयोगपूर्वस्य ( VI. 4. 82. ) इति यणादेशः ; **दीध्याते, दीध्यते । दीधीषे, दीध्याथे, दीधीध्वे ; दीध्ये, दीधीवहे, दीधीमहे** । **वेवीङ्** वेतिना तुल्ये ; **वेवीते, वेव्याते, वेव्यते ; वेवीषे, वेव्याथे, वेवीध्वे ; वेव्ये, वेवीवहे, वेवीमहे** । **चकासृ** दीप्तौ ; **चकास्ति, चकास्तः, चकासति ; चकास्सि, चकास्थः, चकास्थ ; चकास्मि, चकास्वः, चकास्मः** । एते जक्षित्यादयः ॥

जक्षि जागृ दरिद्रा शास् दीधी वेवी चकास् तथा ।
अभ्यस्तसंज्ञास्सप्तैते साभ्यासा ये च धातवः ॥

10. **वश** कान्तौ ; व्रश्चेति (VIII. 2. 36.) षत्वम् ; ष्टुत्वम् ; **वष्टि** । **ग्रहि-ज्या-वयि-व्यधि-वष्टि-विचति-वृश्चति-पृच्छति-भृज्जतीनां ङिति च** (VI. 1. 16.)—ग्रहादीनां धातूनां ङिति प्रत्यये परतः संप्रसारणं भवति ; चकारात् किति च । सम्प्रसारणाच्च

(VI. 1. 108.) इति पूर्वत्वम्; **उष्टः, उशन्ति** । **वश्मि, उष्ठः, उष्ठ; वश्मि, उश्वः, उश्मः** ॥

## इति लुग्विकरणे लट् ॥

---

## अथ जुहोत्यादौ श्लुविकरणे लट् ॥

1. **हु** दानादनयोः । धातुसंज्ञायां पूर्ववल्लट् । तस्य शपः **जुहोत्यादिभ्यः श्लुः** (II. 4. 75.)—जुहोत्यादिभ्यो धातुभ्य उत्तरस्य शपः श्लुर्भवति—इति श्लुः । **एकाचो द्वे प्रथमस्य** (VI. 1. 1.), **अजादेर्द्वितीयस्य** (VI. 1. 2.), **लिटि धातोरनभ्यासस्य** (VI. 1. 8.), इति वर्तमाने, **श्लौ** (VI. 1. 10.)—श्लौ सत्यनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचः, आदिभूतादचः परस्य तु द्वितीयस्य एकाचो वा, यथायोगं द्वे भवतः । **पूर्वोऽभ्यासः** (VI. 1. 4.)—अस्मिन् प्रकरणे ये द्वे विहिते तयोः पूर्वोऽवयवः अभ्याससंज्ञो भवति । **कुहोश्चुः** (VII. 4. 62.)—अभ्यासे वर्तमानयोः कवर्गहकारयोः चवर्गादेशो भवति । **अभ्यासे चर् च** (VIII. 4. 54.)—अभ्यासे वर्तमानानां झलां चरादेशो भवति, चकाराज्जश्त्वम् । तत्रापि प्रकृतिजशां प्रकृतिचरां च यथाक्रमं प्रकृतिजशः प्रकृतिचरश्च भवन्ति इति विवेकः । इति हस्य जः; पित्सु गुणः; **जुहोति** । सार्वधातुकमपित् (I. 2. 4.) इति ङित्त्वात्, क्ङिति च (I. 1. 5.) इति गुणस्य प्रतिषेधः; **जुहुतः** । **उभे अभ्यस्तम्** (VI. 1. 5.)—अस्मिन् षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे भवतः । इत्यभ्यस्तसंज्ञायाम्, अदभ्यस्तात् (VII. 1. 4.) इति झस्य अदादेशः । उवङादेशे प्राप्ते, **हुश्नुवोस्सार्वधातुके** (VI.

4. 87.)—हु इत्येतस्याङ्गस्य श्नुप्रत्ययान्तस्य च अनेकाचोऽसंयोगपूर्वस्य उवर्णस्याजादौ सार्वधातुके परतो यणादेशो भवति ; **जुह्वति** । **जुहोषि, जुहुथः, जुहुथ ; जुहोमि, जुहुवः, जुहुमः** ॥

2. **ओहाङ्** गतौ ; ओकारः **ओदितश्च** (VIII. 2. 45.) इति विशेषणार्थः ; ङकारः आत्मनेपदार्थः । धातुसंज्ञायां लट् ; तस्य आत्मनेपदम् ; शप् ; श्लुः ; द्विर्वचनम् ; अभ्यासकार्यञ्च । **णिजान्त्रयाणां गुणः श्लौ** (VII. 4. 75.) इति वर्तमाने, **भृञामित्** (VII. 4. 76.)—भृञ् माङ् ओहाङ् इति त्रयाणां धातूनामभ्यासस्य इकारादेशो भवति श्लौ । जिहा+ते इति स्थिते, **श्नाभ्यस्तयोरातः** (VI. 4. 112.) इत्यनुवर्तमाने, **ई हल्यघोः** (VI. 4. 113.)—श्ना इत्येतस्य अभ्यस्तसंज्ञानाञ्च अङ्गानां घुवर्जितानामाकारस्य ईकारादेशो भवति हलादौ सार्वधातुके क्ङिति परतः । इति ईकारः ; **जिहीते** । अजादौ तु क्ङिति, **श्नाभ्यस्तयोरातः** (VI. 4. 112.)—श्ना इत्येतस्य अभ्यस्तसंज्ञानां च आकारस्य लोपो भवति अजादौ क्ङिति ङिति ; **जिहाते, जिहते । जिहीषे, जिहाथे, जिहीध्वे ; जिहे, जिहीवहे, जिहीमहे** ॥

3. **डुधाञ्** धारणपोषणयोः ; अनुबन्धलोपः ; धातुसंज्ञायां तस्य लट् ; तिप् ; शप् ; श्लुः । **श्लौ** (VI. 1. 10.) इति द्विर्वचनम् । ततः अभ्यासकार्यञ्च । **अत्र लोपोऽभ्यासस्य** (VII. 4. 58.) इति वर्तमाने, **ह्रस्वः** (VII. 4. 59.)—अभ्यासस्य ह्रस्वो भवति । **अभ्यासे चर् च** (VIII. 4. 54.) इति प्राप्तेन जश्त्वेन धकारस्य दकारः ; **दधाति** । अत्र द्विवचने घुसंज्ञकत्वात् ईत्वं न भवति । **दाधा घ्वदाप्** (I. 1. 10.)—दारूपाश्चत्वारो धातवः धारूपौ च द्वौ घुसंज्ञा भवन्ति

दाप्दैपौ वर्जयित्वा । इति दधातेर्घुसंज्ञा । श्नाभ्यस्तयोरातः (VI. 4. 112.) इत्याकारलोपः । **एकाचो बशो भष् झषन्तस्य स्ध्वोः** (VIII. 2. 37.) इत्यनुवर्तमाने, **दधस्तथोश्च** (VIII. 2. 38.)—दध इति कृतद्विर्वचनो दधातिर्निर्दिश्यते ; दधातेर्धातोः झषन्तस्य बशः स्थाने भषादेशो भवति तकारथकारादौ प्रत्यये स्ध्वोश्च परतः । खरि चेति चर्त्वम् ; **धत्तः । दधति ; दधासि, धत्थः, धत्थ ; दधामि, दध्वः, दध्मः । धत्ते, दधाते, दधते ; धत्से, दधाथे, धद्ध्वे ; दधे, दध्वहे, दध्महे ॥**

4. **ञिभी** भये ; शपः श्लुः ; द्विर्वचनम् ; ह्रस्वः ; जश्च ; **बिभेति । इद्दरिद्रस्य** (VI. 4. 114.) इत्यनुवर्तमाने, **भियोऽन्यतरस्याम्** (VI. 4. 115.)—भी इत्येतस्य अन्यतरस्याम् इकारादेशो भवति हलादौ क्ङिति सार्वधातुके परतः ; **बिभितः बिभीतः ।** एरनेकाचोऽसंयोगपूर्वस्य (VI. 4. 82.) इति यणादेशः ; **बिभ्यति । बिभेषि, बिभिथः बिभीथः, बिभिथ बिभीथ ; बिभेमि, बिभिवः बिभीवः, बिभिमः बिभीमः । ह्री** लज्जायाम् ; लट्तिप्शप्श्लुद्विर्वचनम् ; ह्रस्वः । **हलादिश्शेषः** (VII. 4. 60.)—अभ्यासस्यादिर्हल् शिष्यते, अनादिर्हल्लुप्यते । कुहोश्चुरिति (VII. 4, 62.) चुत्वम् ; **जिह्रेति, जिह्रीतः ।** झेरदादेशः ; असंयोगपूर्वस्येति प्रतिषेधान्नास्ति यणादेशः ; इयङ् भवति ; **जिह्रियति । जिह्रेषि, जिह्रीथः, जिह्रीथ ; जिह्रेमि, जिह्रीवः, जिह्रीमः । डुदाञ्** दाने ; **ददाति ।** श्नाभ्यस्तयोराकारलोपः ; चर्त्वम् ; **दत्तः । ददति ; ददासि, दत्थः, दत्थ ; ददामि, दद्वः, दद्मः । आङो दोऽनास्यविहरणे** (I. 3. 20)

—अकर्त्रभिप्रायार्थोऽयमारम्भः; आङ्पूर्वात् ददातेरनास्यविहरणे वर्तमानादात्मनेपदं भवति; विद्याम् **आदत्ते, आददाते, आददते**; इत्यादि। अनास्यविहरणे इति किम्? आस्यं व्याददाति। **आस्यविहरणसमानक्रियादपि प्रतिषेधो भवति** (वा.)—इति विपादिकां **व्याददाति**। **स्वाङ्गकर्मकाच्चेति वक्तव्यम्** (वा.)—इति इह मा भूत् **व्यादत्ते** पिपीलिका पतङ्गमुखमिति॥

5. **णिजिर्** शौचपोषणयोः; **विजिर्** पृथग्भावे; **विषॢ** व्याप्तौ। शपश्श्लुः; द्विर्वचनम्। **णिजान्त्रयाणां गुणश्श्लौ** (VII. 4. 75.)—णिजिर् शौचपोषणयोरित्यादीनां त्रयाणान्धातूनामभ्यासस्य गुणो भवति श्लौ परतः। धातोः पित्सु गुणः; कुत्वन्त्वे; **नेनेक्ति, नेनिक्तः, नेनिजति; नेनेक्षि, नेनिक्थः, नेनिक्थ; नेनेज्मि, नेनिज्वः, नेनिज्मः। वेवेक्ति, वेविक्तः, वेविजति; वेवेक्षि, वेविक्थः, वेविक्थ; वेवेज्मि, वेविज्वः, वेविज्मः। वेवेष्टि, वेविष्टः, वेविषति; वेवेक्षि, वेविष्ठः, वेविष्ठ; वेवेष्मि, वेविष्वः, वेविष्मः। डुभृञ्** धारणपोषणयोः, **माङ्** माने शब्दे च, **ओहाङ्** गतौ। लट्; तिप्; शप्; श्लुः; श्लाविति द्विर्वचनम्; अभ्यासस्य भृञामित् (VII. 4. 76.) इति इत्वम्; रपरत्वम्; हलादिश्शेषः (VII. 4. 60.); अभ्यासे चर्चेति चर्त्वम्; पित्सु गुणः; **बिभर्ति, बिभृथः**, यणादेशः—**बिभ्रति; बिभर्षि, बिभृथः, बिभृथ; बिभर्मि, बिभृवः, बिभृमः**। माङ् माने इत्यत्र, ई हल्यघोः (VI. 4. 113.) इतीत्वम्; **मिमीते**। श्नाभ्यस्तयोरातः इत्याकारलोपः—**मिमाते, मिमते। मिमीषे, मिमाथे, मिमीध्वे; मिमे, मिमीवहे, मिमीमहे**। ओहाङ् गतौ इत्यत्रापि एवमेव द्रष्टम्॥

6. **ओहाक्** त्यागे; **जहाति**। **भियोऽन्यतरस्याम्** (VI. 4. 115.) इति वर्तमाने, **जहातेश्च** (VI. 4. 116.)—जहातेराकारस्यान्यतरस्याम् इकारादेशो भवति हलादौ क्ङिति सार्वधातुके परतः; **जहितः**। इत्वाभावे, ई हल्यघोः VI. 4. 113.) इति ईत्वम्—**जहीतः**। **जहति**; **जहासि, जहिथः जहीथः, जहिथ जहीथ; जहामि, जहिवः जहीवः, जहिमः जहीमः**। **ऋ** गतौ; शप्श्लुः; द्विर्वचनम्। **अर्तिपिपर्त्योश्च** (VII. 4. 77.)—अर्तिपिपर्त्योरभ्यासस्य इकारादेशो भवति श्लौ परतः। रपरत्वम्; हलादिश्शेषः। **अभ्यासस्यासवर्णे** (VI. 4. 78.)—अभ्यासस्य इवर्णोवर्णान्तस्याङ्गस्य असवर्णेऽचि परतः इयङ् उवङ् इत्येतावादेशौ भवतः। इत्यभ्यासस्य इयङादेशः; पित्सु गुणः; रपरत्वम्; **इयर्ति**; क्ङिति गुणप्रतिषेधः—**इयृतः**; झेरदादेशः, इको यणचीति यणादेशश्च—**इय्रति**। **इयर्षि, इयृथः, इयृथ; इयर्मि, इयृवः, इयृमः**। **पॄ** पालनपूरणयोः; अभ्यासस्य इत्वम्; रपरत्वम्; हलादिश्शेषः; पित्सु—**इत्वोत्वाभ्यां गुणवृद्धी पूर्वविप्रतिषेधेन** (वा. VII. 1. 102.) इति गुणो रपरः; **पिपर्ति**। **उदोष्ठ्यपूर्वस्य** (VII. 1. 102.)—ओष्ठ्यः पूर्वो यस्माद‍ृकारात् स ओष्ठ्यपूर्वः; तस्य धातोरङ्गस्य उकारादेशो भवति। रपरत्वम्; इकारादेशापवादः। हलि परतः, **र्वोरुपधाया दीर्घ इकः** (VIII. 2. 76.) इति अनुवर्तमाने, **हलि च** (VIII. 2. 77.)—रेफवान्तयोरुपधाया इकः दीर्घो भवति हलि परतः; **पिपूर्तः**। यणादेशः—**पिप्रति**। **पिपर्षि, पिपूर्थः, पिपूर्थ; पिपर्मि, पिपूर्वः, पिपूर्मः**। **सृ** गतौ; लट्; शपश्लुः; श्लाविति द्विर्वचनम्।

**उरत्** (VII. 4. 66.)—अभ्यासस्य ऋवर्णस्य अकारादेशो भवति। गुणस्य रपरत्वम्; हलादिश्शेषः; **ससर्ति, ससृतः, सस्रति** ॥

**इति श्लुविकरणे लट्** ॥

---

## अथ दिवादौ श्यन्विकरणे लट् ॥

---

1. **दिवु** क्रीडा-विजिगीषा-व्यवहार-द्युति-स्तुति-मोद-मद-स्वप्न-कान्ति-गतिषु। लट्; तिप्। कर्तरि शपि प्राप्ते, **दिवादिभ्यः श्यन्**(III. 1. 69.)—दिवादिभ्यो धातुभ्यः श्यन् प्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परतः। शपोऽपवादः । **र्वोरुपधाया दीर्घ इकः** (VIII. 2. 76.) इति वर्तमाने, **हलि च** (VIII. 2. 76.)—रेफवकारान्तस्याङ्गस्य धातोरुपधाया इको दीर्घो भवति हलि च परतः; **दीव्यति, दीव्यतः, दीव्यन्ति; दीव्यसि, दीव्यथः, दीव्यथ; दीव्यामि, दीव्यावः, दीव्यामः** । **षूङ्** प्राणिप्रसवे। **धात्वादेष्षस्सः**(VI. 1. 94.)—धात्वादेः षकारस्य सकारादेशो भवति । ततो लट्; ङित्त्वात् आत्मनेपदम्; श्यन्; **सूयते, सूयेते, सूयन्ते**; इत्यादि। **णह** बन्धने; णो नः (VI. 1. 65.) इति नत्वम्; **नह्यति, नह्यतः, नह्यन्ति**; इत्यादि । **नह्यते, नह्येते, नह्यन्ते**; इत्यादि च ॥

2. **षिवु** तन्तुसन्ताने। धात्वादेष्षस्सः (VI. 1. 64.) इति सत्वम्। हलि चेति (VIII. 2. 76.) दीर्घः; **सीव्यति, सीव्यतः, सीव्यन्ति; सीव्यसि, सीव्यथः, सीव्यथ; सीव्यामि, सीव्यावः, सीव्यामः**। **परिनिविभ्यस्सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्** (VIII. 3

70.)—परि निं वि इत्येभ्यः परतः सेवादीनां धातूनां सकारस्य सुडागमस्य च मूर्धन्यादेशो भवति; **परिषीव्यति, निषीव्यति, विषीव्यति**। **त्रसी** उद्वेजने। **वा भ्राश-भ्लाश-भ्रमु-क्रमु-क्लमु-त्रसि-त्रुटि-लषः** (III. 1. 70.)—टुभ्राशृ टुभ्लाशृ दीप्तौ, भ्रमु अवस्थाने भ्रमु चलने—द्वयोरपि ग्रहणम्, क्रमु पादविक्षेपे, क्लमु ग्लाने, त्रसी उद्वेजने, त्रुटी छेदने, लष कान्तौ, इत्येतेभ्यो धातुभ्यो वा श्यन् प्रत्ययो भवति; **भ्राशते भ्राश्यते, भ्लाशते भ्लाश्यते**। श्यनि शमादित्वाद्दीर्घः (VIII. 3. 74.); **भ्रमति भ्राम्यति**। क्रमः परस्मैपदेषु (VII. 3. 76.) इति दीर्घः; **क्रामति क्राम्यति**। ष्ठिवुक्लम्वाचमां शिति (VII. 3. 75.) इति दीर्घः; **क्लामति क्लाम्यति**। **त्रसति त्रस्यति**; त्रुटेः श्यनभावे तुदादिभ्यश्शः (III. 1. 77.) इति शः; **त्रुटति त्रुट्यति; लषति लष्यति**॥

3. **दो** अवखण्डने। **ओतः श्यनि** (VII. 3. 71.)—ओकारान्तस्याङ्गस्य लोपो भवति श्यनि प्रत्यये परतः; **द्यति**। **जनी** प्रादुर्भावे। **ज्ञाजनोर्जा** (VII. 3. 79.)—ज्ञा अवबोधने, जनी प्रादुर्भावे, एतयोर्धात्वोर्जा इत्यादेशो भवति शिति प्रत्यये परतः; **जायते**। वा **वृतु** वर्तने। वाग्रहणेनात्र विकल्पेन श्यन्—**वृत्यते**; पक्षे शपि **वर्तते**। **मृष** तितिक्षायाम्; **मृष्यति; मृष्यते**। **परेर्मृषः** (I. 3. 82.)—परिपूर्वान्मृषतेर्धातोः परस्मैपदं भवति; कर्त्रभिप्रायार्थोऽयमारम्भः; **परिमृष्यति**। परेरिति किम्? आमृष्यते। **शुचिर्** पूतीभावे। स्वरितेत्; इर् शब्दः इरितो वा (III. 1. 57.) इति विशेषणार्थः; **शुच्यति; शुच्यते**। **रञ्ज** रागे। **अनिदितां हल उपधायाः क्ङिति** (VI. 4. 24.)

—अनिदितामङ्गानां हलन्तानाम् उपधाया नकारस्य लोपो भवति क्विति ङिति प्रत्यये परतः; **रज्यति**; **रज्यते**। **राध साध** संसिद्धौ। **राधो-ऽकर्मकाद्वृद्धावेव** (ग. सू.) इति अकर्मकाद्राधः श्यन् प्रत्ययो भवति वृद्धावेव गम्यमानायाम्; **राध्यति**। अन्यत्र श्नुः—**राध्नोति**। **व्यध** ताडने। ग्रहि- ज्या - वयि - व्यधि - वष्टि - विचति - वृश्चति - पृच्छति-भृज्जतीनां ङिति च (VI. 1. 16.) इति संप्रसारणम्। संप्रसारणाच्च (VI. 1. 108.) इति पूर्वरूपम्; **विध्यति**। **शक** विभाषितो मर्षणे। शक् इत्ययं धातुः मर्षणे विभाष्यते; उभयविकरणीत्यर्थः; **शक्यति**। अन्यत्र श्नुः—**शक्नोति**। **शमामष्टानां दीर्घः श्यनि** (VII. 3. 74.)—शमादीनामष्टानां धातूनां दीर्घो भवति श्यनि प्रत्यये परतः। **शमु** उपशमे—**शाम्यति**। **तमु** काङ्क्षायाम्—**ताम्यति**। **दमु** उपशमे—**दाम्यति**। **श्रमु** तपसि खेदे च—**श्राम्यति**। **भ्रमु** अनवस्थाने—**भ्राम्यति**। **क्षमूष्** सहने—**क्षाम्यति**। **क्लमु** ग्लानौ—**क्लाम्यति**। **मदी** हर्षे—**माद्यति**। अष्टानामिति किम्? **असु** क्षेपणे—**अस्यति**। **उपसर्गादस्यत्यूह्योर्वा वचनम्** (वा. I. 3. 30.) इत्यात्मनेपदं विकल्पेन; **पर्यस्यते**, **पर्यस्यति**। **यसु** यत्ने; दैवादिकः। **यसोऽनुपसर्गात्** (III. 1. 71.)—यस्यतेर्नित्यं श्यनि प्राप्ते अनुपसर्गाद्विकल्प उच्यते; अनुपसर्गाद्यसो वा श्यन् प्रत्ययो भवति; **यस्यति**। पक्षे शप्—**यसति**। सोपसर्गान्नित्यं श्यन् प्रत्ययः; **आयस्यति**, **प्रयस्यति**। **संयसश्च** (III. 1. 72.)—सोपसर्गार्थोऽयमारम्भः; सम्पूर्वाच्च यसो वा श्यन् प्रत्ययो भवति; **संयस्यति**, **संयस-**

ति । **ञि मिदा** स्नेहने ; **मिदेर्गुणः** (VII.3.82.)—मिदेरङ्गस्य इको गुणो भवति सार्वधातुके परतः ; **मेद्यति** ॥

**इति श्यन्विकरणे लट् ॥**

---

**अथ स्वादौ श्नुविकरणे लट् ॥**

1. **षुञ्** अभिषवे । ञकारलोपः ; प्रयोजनं **सोमे सुञः** (III. 2. 90.) इति विशेषणम् । धात्वादेष्षस्सः (VI. 1. 64.) इति सत्वम् । धातुसंज्ञायां पूर्ववल्लडादयः । शपि प्राप्ते, **स्वादिभ्यः श्नुः** (III. 1. 73.)—स्वादिभ्यो धातुभ्यः श्नुप्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परतः । शपोऽपवादः ; सार्वधातुकमपित् (I. 2. 4.) इति ङित्त्वात् गुणाभावः । विकरणस्य सार्वधातुकार्धधातुकयोः (VII. 3. 84.) इति गुणः ; **सुनोति, सुनुतः**—हुश्नुवोस्सार्वधातुके (VI. 4. 87.) इति यणादेशः—**सुन्वन्ति ; सुनोषि, सुनुथः, सुनुथ ; सुनोमि**। **उतश्च प्रत्ययादसंयोगपूर्वात्** (VI. 4. 106.) इत्यनुवर्तमाने, **लोपश्चास्यान्यतरस्यां म्वोः** (VI. 4. 107.)—योऽयमुकारोऽसंयोगपूर्वः तदन्तस्य प्रत्ययस्यान्यतरस्यां लोपो भवति मकारवकारादोः प्रत्यययोः परतः ; **सुन्वः सुनुवः, सुन्मः सुनुमः** । एवमेव आत्मनेपदे—**सुनुते, सुन्वाते, सुन्वते ; सुनुषे, सुन्वाथे, सुनुध्वे ; सुन्वे, सुन्वहे सुनुवहे, सुन्महे सुनुमहे** ॥

2. **अशू** व्याप्तौ; **अश्नुते, अश्नुवाते, अश्नुवते**—इत्यादि । शात (VIII. 4. 44.) इति अत्र श्चुत्वप्रतिषेधः । **चिञ्** चयने; पूर्ववल्ल-

ङादयः ; **चिनोति, चिनुतः, चिन्वन्ति ; चिनोषि, चिनुथः, चिनुथ** ; इत्यादि । ञित्त्वात्—**चिनुते, चिन्वाते, चिन्वते**—इत्यादि च । **हि** गतौ ; पूर्ववल्लङादयः ; **हिनोति, हिनुतः, हिन्वन्ति** ; इत्यादि । प्रपूर्वः; **हिनुमीना** (VIII. 4. 15.)—हिनु मीना इत्येतयो-रुपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति ; **प्रहिणोति, प्रहिणुतः, प्रहिण्वन्ति** । **शकॢ** शक्तौ ; **शक्नोति, शक्नुतः** ; संयोगपूर्वत्वान्नास्ति यणादेशः; उवङादेशः—**शक्नुवन्ति** । **श्रु** श्रवणे । **श्रुवः शृ च** (III. 1. 74.)—श्रु इत्येतस्य श्नुप्रत्ययो भवति तत्सन्नि-योगेन शृ इति च आदेशः; **शृणोति, शृणुतः, शृण्वन्ति**; इत्यादि । **समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः** (I. 3. 29.)—सम्पूर्वेभ्यो गमि ऋच्छि प्रच्छि स्वरति अर्ति श्रु विदि इत्येतेभ्य आत्मनेपदं भवति ; **संशृणुते, संशृण्वाते, संशृण्वते** । **दन्भु** दम्भने । **अनिदितां हल उपधायाः क्ङिति** (VI. 4. 24.)—अनिदितामङ्गानां हलन्ताना-मुपधाया नकारस्य लोपो भवति किति ङिति प्रत्यये परतः । इत्यनुनासिक-लोपः ; **दभ्नोति, दभ्नुतः, दभ्नुवन्ति** ; इत्यादि । **ऋधु** वृद्धौ ; **ऋध्नोति, ऋध्नुतः, ऋध्नुवन्ति** । **अक्षू** व्याप्तौ ; भौवादिकः । **अक्षोऽन्यतरस्याम्** (III. 1. 75.)—अक्षः अन्यतरस्यां श्नुप्रत्ययो भवति ; **अक्ष्णोति** । पक्षे शप् ; **अक्षति** । **तक्षू त्वक्षू** तनूकरणे ; भौवादिकः । **तनूकरणे तक्षः** (III. 1. 76.)—तनूकरणे वर्तमानात् तक्षः अन्यतरस्यां श्नुप्रत्ययो भवति । अनेकार्थत्वात् धातूनां विशेषोपादा-

नम्; **तक्ष्णोति तक्षति** वा काष्ठम् । तनूकरणे इति किम्? सन्तक्षति वाग्भिः—तर्जयतीत्यर्थः ॥

**इति श्नुविकरणे लट्** ॥

---

## अथ तुदादौ शविकरणे लट् ॥

1. **तुद्** व्यथने । स्वरितेत्; पूर्ववल्लडादयः। **तुदादिभ्यश्शः** (III. 1. 77.)—तुदादिभ्यो धातुभ्यः शः प्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परतः । शपोऽपवादः; ङित्त्वात् गुणाभावः; **तुदति, तुदतः, तुदन्ति**। **मृङ्** प्राणत्यागे। **म्रियतेर्लुङ्लिङोश्च** (I. 3. 61.)—म्रियतेर्धातोर्लुङ्-लिङ्विषययोश्शिद्भाविनश्चैवात्मनेपदं भवति नान्यत्र । ङित्त्वं स्वरार्थम् । **रिङ् शयग्लिङ्क्षु** (VII. 4. 28.)—ऋकारान्तानामङ्गानां श यक् इत्येतयोर्लिङि च यकारादावार्धधातुके परतो रिङादेशो भवति । इयङादेशः; **म्रियते, म्रियेते, म्रियन्ते** ; इत्यादि । **भ्रस्ज** पाके। अनुबन्धलोपः; पूर्ववत् लडादयः। ग्रहि-ज्या- वयि-व्यधि वष्टि-विचतीत्यादिना (VI. 1. 16.) सम्प्रसारणम्; झलां जश् झशि (VIII. 4. 53.) इति सकारस्य दकारः;स्तोः श्चुना श्चुः (VIII. 4. 40.) इति दकारस्य जकारः। शिष्टोच्चारणम्; **भृज्जति, भृज्जतः, भृज्जन्ति** । आत्मनेपदे **भृज्जते, भृज्जेते, भृज्जन्ते** ॥

2. **ओ व्रश्च** छेदने; **व्यच** व्याजीकरणे । ग्रहिज्यावयीति सम्प्रसारणम् ; पूर्वत्वञ्च ; **वृश्चति, वृश्चतः, वृश्चन्ति** ; **विचति, विचतः, विचन्ति** । **उच्छि** उञ्छे ; इदितो

नुम्धातोः ( VII. 1. 58. ) इति नुमागमः ; **उम्भति** ।

**तृप तृम्फ** तृप्तौ ; **तृपति** । अनिदितामित्यनुनासिकलोपः ; **शे तृम्फादीनां नुम् वाच्यः** (वा. VII. 1. 59.) इति नुमागमः ; **तृम्फति** ।

**दृफ दृम्फ** उत्क्लेशने; **गुफ गुम्फ** ग्रन्थे ; **उभ उम्भ** पूरणे ; **शुभ शुम्भ** शोभार्थे ; इत्यत्र **दृफति दृम्फति, गुफति गुम्फति, उभति उम्भति, शुभति शुम्भति** । **इषु** इच्छायाम् ; इषुगमियमाञ्छः (VII. 3. 77.) इति षकारस्य छकारः ; **इच्छति** ।

**पृङ्** व्यायामे ; व्यायाम उद्योगः । रिङ् शयग्लिङ्क्षिवति (VII. 4. 28.) रिङ् इत्यादेशः; इयङादेशश्च; **प्रियते** । **षू** प्रेरणे; अभिपूर्वः परिपूर्वश्च; उवङादेशः; उपसर्गात् सुनोतीत्यादिना (VIII. 3. 65.) मूर्धन्यादेशः ; **अभिषुवति, परिषुवति** । **गॄ** निगरणे ; ॠत इद्धातोः ( VII. 1. 100. ) इति इत्वम् ; **गिरति** । **अवात् ग्रः** (I. 3. 51.)—अवपूर्वात् गिरतेरात्मनेपदं भवति; **अवगिरते** । **अचि विभाषा** (VIII. 2. 21.)—अचि परतो गिरतेः रेफस्य विभाषा लकारादेशो भवति ; **गिलति, गिलतः, गिलन्ति** । **समः प्रतिज्ञाने** (I. 3. 52.) —ग्रः इत्यनुवर्तते ; प्रतिज्ञानमभ्युपगमः प्रतिश्रवणमङ्गीकरणमिति अनर्थान्तरम् ; सम्पूर्वात् गिरतेर्धातोरात्मनेपदं भवति । शतं **सङ्गिरते**, सहस्रं, **सङ्गिरेते**, नित्यं शब्दं **सङ्गिरन्ते** वैयाकरणाः । **प्रच्छ** ज्ञीप्सायाम् ; सम्प्रसारणम् ; **पृच्छति** । **आङि नुप्रच्छ्योरुपसङ्ख्यानम्** (वा. I. 3. 21.) इति वचनादाङि आत्मनेपदं भवति; **आपृच्छते आपृच्छेते, आपृच्छन्ते** । **टु मस्जो** शुद्धौ ; अनुबन्धलोपः ; झलां

जश् झशि (VIII. 4. 53.) इति जश्त्वेन सस्य दः, तस्य श्चुत्वेन जकारः; **मज्जति, मज्जतः, मज्जन्ति** । **विश** प्रवेशने; **नेर्विशः** (I. 3. 17.)—निपूर्वाद्विशतेरात्मनेपदं भवति; **निविशते** ॥

3. **मुचॢ** मोक्षणे। ऌकारस्येत्संज्ञा; **पुषादिद्युताद्यॢदितः परस्मैपदेषु** (III. 1. 55.) इति विशेषणं प्रयोजनम्। पूर्ववल्लडादयः। **शे मुचादीनाम्** (VII. 1. 59.)—मुचादीनामङ्गानां नुमागमो भवति शे परतः; **मुञ्चति, मुञ्चतः, मुञ्चन्ति** । एवमेव **मुञ्चते, मुञ्चेते, मुञ्चन्ते** ।

मुञ्चतिर्लुम्पतिश्चैव विदिर्लिम्पतिरेव च ।
सिचिः कृतिः खिदिश्चैव पिशिश्चाष्टौ मुचादयः ॥

**लुप** छेदने; **विलुम्पति; विलुम्पते** । **विदॢ** लाभे; **विन्दति; विन्दते** । **लिप** उपदेहे; **लिम्पति; लिम्पते** **षिच** क्षरणे; **सिञ्चति; सिञ्चते** । **कृती** छेदने ; **कृन्तति** **खिद** परिघाते; **खिन्दति** । **पिश** अवयवे; **पिंशति** । कुटादिः दिवादौ अन्तर्गणः; कुङ् शब्दे—इति यावत् ॥

**इति शविकरणे लट् ॥**

---

**अथ रुधादौ श्नम्विकरणे लट् ॥**

1. **रुधिर्** आवरणे। इर इत्संज्ञा; तस्य लोपः; प्रयोजनम् **इरितो वा** (III. 1. 57.) इति विशेषणम् । रुधादितृदन्ताः नव स्वरितेतः । पूर्ववल्लडादयः । शपि प्राप्ते, **रुधादिभ्यः श्नम्** (III. 1. 78.)—रुधादिभ्यो

धातुभ्यः श्नम्प्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परतः । स प्रत्ययः मित्त्वात् अन्त्यादचः परः । अट्कुप्वाङ्नुम्व्यवायेऽपि (VIII. 4. 2.) इति णत्वम्; झषस्तथोर्धोऽधः ( VIII. 2. 40. ) इति धत्वम्; **रुणद्धि** । **श्नसोरल्लोपः** ( VI. 4.111. )—श्न इत्येतस्य अस्तेश्च अकारस्य लोपो भवति सार्वधातुके क्ङिति परतः । अनुस्वार-परसवर्णौ । **झरो झरि सवर्णे** ( VIII. 4. 65. )—हलः परस्य झरो लोपो भवति वा सवर्णे झरि परतः । पूर्वत्रासिद्धमित्यसिद्धत्वाण्णत्वा-भावः; **रुन्धः** । एवमेव— **रुन्धन्ति**। चर्त्वम्—**रुणत्सि, रुन्धः रुन्ध; रुणध्मि, रुन्ध्वः, रुन्ध्मः** । आत्मनेभाषायाम्—**रुन्धे, रुन्धाते, रुन्धते** ॥

2. **भुज** पालनाभ्यवहारयोः।**भुजोऽनवने** (I. 3.66.)—भुजे-र्धातोरनवने अपालनार्थे वर्तमानादात्मनेपदं भवति । चोः कुरिति कुत्वम्; खरि चेति चर्त्वम्; **भुङ्क्ते, भुञ्जाते, भुञ्जते; भुङ्क्षे, भुञ्जाथे, भुङ्ग्ध्वे; भुञ्जे, भुञ्ज्वहे, भुञ्ज्महे** । अवनार्थे तु परस्मैपदमेव; **भुनक्ति, भुङ्क्तः, भुञ्जन्ति**; इत्यादि । महीं भुनक्ति भूपालः, फलं भुङ्क्ते च वानरः। **युजिर्** योगे; **युनक्ति, युङ्क्तः, युञ्जन्ति ; युनक्षि, युङ्क्थः, युङ्क्थ; युनज्मि, युञ्ज्वः, युञ्ज्मः** । प्रपूर्वः; **प्रोपाभ्यां युजे-रयज्ञपात्रेषु**(I. 3. 64.)—प्र उप इत्येताभ्यामुत्तरस्य युजेर्धातोः अ-यज्ञपात्रप्रयोगविषयादात्मनेपदं भवति; **प्रयुङ्क्ते, प्रयुञ्जाते, प्रयुञ्जते ; उपयुङ्क्ते, उपयुञ्जाते, उपयुञ्जते**; इत्यादि । अयज्ञपात्रेषु इति किम्? द्वन्द्वं न्यञ्चि पात्राणि **प्रयुनक्ति** । **भिदिर्** विदारणे; **भिनत्ति, भिन्तः, भिन्दन्ति ; भिन्ते, भिन्दाते, भिन्दते;** इत्यादि ।

**छिदिर्** द्वैधीकरणे; **छिनत्ति, छिन्तः, छिन्दन्ति; छिन्ते, छिन्दाते, छिन्दते।** **रिचिर्** विरेचने: **रिणक्ति, रिङ्क्तः, रिञ्चन्ति; रिङ्क्ते, रिञ्चाते, रिञ्चते।** **विचिर्** पृथग्भावे; **विनक्ति, विङ्क्तः, विञ्चन्ति; विङ्क्ते, विञ्चाते, विञ्चते।** **क्षुदिर्** संपेषणे; **क्षुणत्ति, क्षुन्तः, क्षुन्दन्ति; क्षुन्ते, क्षुन्दाते, क्षुन्दते।** **उ छृदिर्** दीप्तिदेवनयोः; उकारश्चापि इत्; **छृणत्ति, छृन्तः, छृन्दन्ति; छृन्ते, छृन्दाते, छृन्दते।** **उ तृदिर्** हिंसानादरयोः; उकार इत्; **तृणत्ति तृन्ते;**; इत्यादि छृणत्तिवत्॥

3. **ञि इन्धी** दीप्तौ; **खिद** दैन्ये; **विद** विचारणे। त्रय एते अनुदात्तेतः; श्नसोरिति (VI. 4. 111.) अकारलोपः। इन्धीविषये, **श्नान्नलोपः** (VI. 4. 23.)—श्न इति उत्सृष्टमकारो गृह्यते; तत उत्तरस्य नकारस्य लोपो भवति। इति नलोपः; **इन्धे**। अन्यत्र—**खिन्ते, विन्ते**।

**शिष्ऌ** विशेषणे; ष्टुत्वम्; **विशिनष्टि**। **पिष्ऌ** सञ्चूर्णने; **पिनष्टि**। **भञ्जो** आमर्दने। ओकार इत्; श्नान्नलोपः (VI. 4. 23.) इति नकारलोपः; **भनक्ति, भङ्क्तः, भञ्जन्ति**। **तृह** हिंसायाम्। अस्य धातोः **तृणह इम्** (VII. 3. 92.)—तृणह इत्येतस्याङ्गस्य इमागमो भवति हलादौ पिति सार्वधातुके परतः। तृणह इति तृहिधातुनिर्देशः; हो ढः इति ढत्वम्; झषस्तथोर्धोऽधः इति धत्वम्; ढो ढे लोपः (VIII. 3. 13.) इति ढलोपः; ष्टुना ष्टुः इति ष्टुत्वम्; आद्गुणः; **तृणेढि, तृण्ढः, तृंहन्ति; तृणेक्षि, तृण्ढः, तृण्ढ; तृणेह्मि, तृंह्वः, तृंह्मः।** **हिसि** हिंसायाम्।

अत्र इदितो नुम्धातोः इति नुम्; श्नान्नलोपः इति नलोपः; **हिनस्ति, हिंस्तः, हिंसन्ति; हिनस्सि, हिंस्थः, हिंस्थ; हिनस्मि, हिंस्वः, हिंस्मः** ॥

इति श्नम्विकरणे लट् ॥

---

## अथ तनादौ उविकरणे लट् ॥

1. **तनु** विस्तारे। पूर्ववल्लडादयः। शपि प्राप्ते, **तनादिकृञ्भ्य उः** (III. 1. 79.)—तनु विस्तारे इत्येवमादिभ्यो धातुभ्यः कृञश्च उप्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परतः। शपोऽपवादः; तनादिपाठादेव सिद्धे उप्रत्यये करोतेरुपादानं नियमार्थम् अन्यत् तनादिकार्यं मा भूदिति। तेन इह अकृत इत्यत्र, **तनादिभ्यस्तथासोः** (II. 4. 79.) इति विभाषा सिचो लुक् न भवति। **तनोति, तनुतः, तन्वन्ति; तनोषि, तनुथः, तनुथ; तनोमि, तनुवः तन्वः, तनुमः तन्मः**। अत्र **लोपश्चास्यान्यतरस्यां म्वोः** (VI. 4.107.) इति विकल्पेन उकारलोपः। आत्मनेपदे—**तनुते, तन्वाते, तन्वते;** इत्यादि। **मनु** अवबोधने; **मनुते, मन्वाते, मन्वते; मनुषे, मन्वाथे, मनुध्वे; मन्वे, मन्वहे मनुवहे, मन्महे मनुमहे** ॥

2. **डुकृञ्** करणे। आर्धधातुकं शेषः (III. 4. 114.) इत्युप्रत्ययस्यार्धधातुकत्वात्, सार्वधातुकार्धधातुकयोः (VII. 3. 84.) इति गुणः; रपरत्वम्; पित्सु विकरणस्य च गुणः; **करोति**। **अत उत् सार्वधातुके** (VI. 4. 110.)—उप्रत्ययान्तस्य करोतेरकारस्य स्थाने उकारादेशो भवति सार्वधातुके क्ङिति परतः। तपरकरणं लघूपधगुणनिवृत्त्य-

र्थम् ; **कुरुतः**। यणादेशः; हलि च (VIII. 2. 77.) इति दीर्घत्वे प्राप्ते, **न भकुर्छुराम्** (VIII. 2. 79.)—रेफवकारान्तस्य भस्य कुर् छुर् इत्येतयोश्च दीर्घो न भवति ; **कुर्वन्ति**। **करोषि, कुरुथः, कुरुथ ; करोमि**। **नित्यं करोतेः** (VI. 4. 108.)—उप्रत्ययान्तस्य करोतेरुकारस्य नित्यं लोपो भवति वकारमकारादोः प्रत्यययोः परतः; **कुर्वः, कुर्मः**। एवमेव—**कुरुते, कुर्वाते, कुर्वते ; कुरुषे, कुर्वाथे, कुरुध्वे ; कुर्वे, कुर्वहे, कुर्महे**। **अनुपराभ्यां कृञः** (I. 3. 79.)—कर्त्रभिप्राये क्रियाफले गन्धनादिषु च करोतेरात्मनेपदमुक्तम् ; तदपवादत्वेन परस्मैपदं विधीयते ; अनुपराभ्यां पूर्वात् करोतेः परस्मैपदं भवति ; **अनुकरोति, पराकरोति**। अनुपराभ्यामिति किम् ? उपकुरुते ॥

3. **हिवि दिवि धिवि जिवि** प्रीणनार्थाः; **कृवि** हिंसाकरणयोश्च। उभयत्र इदितो नुम् धातोः इति नुमागमः। **धिन्विकृण्व्योर च** (III. 1. 8.)--धिन्विकृण्व्योः धात्वोरुप्रत्ययो भवति अकारश्चान्तादेशः। **अतो लोपः** (VI. 4. 48.)—अकारान्तस्याङ्गस्य लोपो भवत्यार्धधातुके परतः। इत्यकारलोपः ; तस्य स्थानिवद्भावात् धातोर्गुणो न भवति ; पित्सु विकरणस्य गुणः ; **धिनोति, धिनुतः, धिन्वन्ति**। एवमेव—**कृणोति, कृणुतः, कृण्वन्ति** ॥

**इति उविकरणे लट्** ॥

---

## अथ क्र्यादौ श्नाविकरणे लट् ॥

1. **डुक्रीञ्** द्रव्यविनिमये। अनुबन्धलोपः ; पूर्ववद्धातुसंज्ञायां लडादयः । अथ शपि प्राप्ते, **क्र्यादिभ्यश्श्ना** (III. 1. 81.)—

क्र्यादिभ्यो धातुभ्यः श्ना इति प्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परतः । शपोऽपवादः; णत्वम्; **क्रीणाति** । ई हल्यघोः (VI. 4. 113.) इति ईकारादेशः; **क्रीणीतः** । श्नाभ्यस्तयोरातः (VI. 4. 112.) इत्याकारलोपः; **क्रीणन्ति** । **क्रीणासि, क्रीणीथः, क्रीणीथ; क्रीणामि, क्रीणीवः, क्रीणीमः** । **परिव्यवेभ्यः क्रियः** (I. 3. 18.)—अकर्त्रभिप्रायार्थोऽयमारम्भः; परि वि अव इत्येतेभ्य उत्तरस्य क्रीणातेरात्मनेपदं भवति; **परिक्रीणीते, विक्रीणीते, अवक्रीणीते** । **वृङ्** सम्भक्तौ; **वृणीते, वृणाते, वृणते; वृणीषे, वृणाथे, वृणीध्वे; वृणे, वृणीवहे, वृणीमहे** । **ग्रह** उपादाने । **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च** (VI.1.16.)—ग्रह उपादाने, ज्या वयोहानौ, वेञ् तन्तुसन्ताने इत्यस्य वयिः, व्यध ताडने, वश कान्तौ, व्यच व्याजीकरणे, व्रश्चू छेदने, प्रच्छ ज्ञीप्सायाम्, भ्रस्ज पाके, इत्येतेषां धातूनां ङिति प्रत्यये परतः सम्प्रसारणं भवति; चकारात् किति च । सम्प्रसारणाच्चेति (VI. 1. 108.) परपूर्वत्वम्; **गृह्णाति, गृह्णीतः, गृह्णन्ति; गृह्णासि, गृह्णीथः, गृह्णीथ; गृह्णामि, गृह्णीवः, गृह्णीमः** । आत्मनेभाषायाम्—**गृह्णीते, गृह्णाते, गृह्णते; गृह्णीषे, गृह्णाथे, गृह्णीध्वे; गृह्णे, गृह्णीवहे, गृह्णीमहे** ॥

2. **मीञ्** हिंसायाम् । मीनातिः प्रपूर्वः । **हिनुमीना** (VIII. 4. 15.)—हिनु मीना इत्येतयोः धात्वोरुपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति; **प्रमीणाति, प्रमीणीतः, प्रमीणन्ति** । एवमेव **प्रमीणीते**-इत्यादि । **पूञ्** पवने । **प्वादीनां ह्रस्वः** (VII. 3. 80.)—पूञ् पवने इत्येवमादीनां ह्रस्वो भवति शिति प्रत्यये परतः; **पुनाति, पुनीते** ।

**लूञ्** छेदने ; **लुनाति, लुनीते** । **धूञ्** कम्पने ; **धुनाति, धुनीते** । **शॄ** हिंसायाम् ; **शृणाति, शृणीते** । **पॄ** पालनपूरणयोः ; **पृणाति, पृणीते** । **ज्या** वयोहानौ । ग्रहिज्यादिना सम्प्रसारणं पूर्वरूपत्वञ्च । **हलः** ( VI. 4. 2. )—अङ्गावयवाद्धलः परं यत् संप्रसारणं तदन्तस्य अङ्गस्य दीर्घो भवति । इति दीर्घः ; ततो ह्रस्वः ; **जिनाति, जिनीते** । **ज्ञा** अवबोधने । **ज्ञाजनोर्जा** ( VII. 3. 79. ) इति जादेशः; आदेशविधानसामर्थ्यात् प्वादीनां ह्रस्वो न भवति ; **जानाति, जानीते** । **सम्प्रतिभ्यामनाध्याने** ( I. 3. 46.)—सम् प्रति आभ्यामुत्तरस्य जानातेरात्मनेपदं भवति, न त्वाध्याने । आध्यानमुत्कण्ठापूर्वकस्मरणम् ; **सञ्जानीते, प्रतिजानीते** । कर्त्रभिप्राये क्रियाफले, **अनुपसर्गाज्ज्ञः** ( I. 3. 76. )—अनुपसर्गाज्जानातेरात्मनेपदं भवति कर्तारं चेत् क्रियाफलमभिप्रैति । इत्यात्मनेपदम् ; देवदत्तो **धर्मं जानीते** ॥

3. **स्तम्भु-स्तुम्भु-स्कम्भु-स्कुम्भु-स्कुञ्भ्यः श्नुश्च** (III. 1. 82. )—आद्याश्चत्वारः सौत्रा धातवः रोधनार्था इत्येके ; स्कुञ् आप्रवणे—क्र्यादिः ; एतेभ्यो धातुभ्यः श्नाप्रत्ययो भवति श्नुश्च । अनयोरुभयोः ङित्त्वात् सर्वत्र अनिदितामित्यादिना ( VI. 4. 24. ) नकारलोपः ; **स्तभ्नाति, स्तभ्नोति ; स्तुभ्नाति, स्तुभ्नोति ; स्कभ्नाति, स्कभ्नोति ; स्कुभ्नाति, स्कुभ्नोति ; स्कुनाति, स्कुनोति** ॥

**इति श्नाविकरणे लट्** ॥

## अथ चुरादौ णिज्विकरणे लट् ॥

1. चुरादयः स्वार्थण्यन्ताः । **चुर** स्तेये । अकार उच्चारणार्थः; चुर् इति स्थिते, धातुसंज्ञायां, **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** ( III. 1. 25. ) —सत्यादिभ्यश्चूर्णशब्दपर्यन्तेभ्यः प्रातिपदिकेभ्यः चुरादिभ्यो धातुभ्यश्च णिच्प्रत्ययो भवति । लघूपधगुणः । **सनाद्यन्ता धातवः** ( III. 1. 32.)—सन् क्यच् काम्यच् क्यङ् क्यष् आचार-क्विप् णिच् यङ् यक् आय ईयङ् णिङ् एतदन्ता ये तेऽपि धातवो भवन्ति ।

सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचार-क्विप् णिज्यङौ तथा ।
यगाय ईयङ् णिङ् चैते भवन्ति हि सनादयः ॥

इति धातुसंज्ञायां पूर्ववल्लडादयः । तिप्; शप्; गुणायादेशौ ; **चोरयति, चोरयतः, चोरयन्ति ; चोरयसि, चोरयथः, चोरयथ; चोरयामि, चोरयावः, चोरयामः । णिचश्च** ( I. 3. 74. )—णिजन्तादात्मनेपदं भवति कर्तारश्चेत् क्रियाफलमभिप्रैति ; **चोरयते, चोरयेते, चोरयन्ते** । **पाल** रक्षणे ; णिच् ; लडादिकार्यम् ; **पालयति, पालयते** । **अर्च** पूजायाम् ; **अर्चयति, अर्चयते** । **चिति** स्मृत्याम्; इदितो नुम् धातोरिति नुमागमः; **चिन्तयति, चिन्तयते** । **लक्ष** दर्शनाङ्कनयोः ; **लक्षयति, लक्षयते** । **लड** उपसेवायाम् । **जिह्वोन्मथने लडो मित्त्वं वाच्यम्** इति मित्त्वम्; पूर्ववण्णिच् । **अत उपधायाः** (VII. 2. 116.)—अङ्गोपधाया अकारस्य स्थाने ञिति णिति च प्रत्यये परतः वृद्धिर्भवति । इति वृद्धौ, **मितां ह्रस्वः** ( VI. 4. 92. )—मित्संज्ञकानां धातूनामुपधाया ह्रस्वो भवति

णौ च परतः। लडादिकार्यम् ; **लडयति**। **नान्ये मितोऽहेतौ** (ग) इति नास्ति चुरादिणिचां मित्त्वम् ; अत एव **लाडयति** पुत्रम्। **बध** संयमने ; **बाधयति, बाधयते**॥

2. **खड खडि** भेदने; **खाडयति, खण्डयति**। **खुडि** खण्डने ; **खुण्डयति**। **वडि** विभाजने ; **वण्डयति**। **मडि** भूषायाम् ; **मण्डयति**। **ज्ञा** अवबोधने। **मारणतोषणनिशामनेषु ज्ञा** (ग) इति ज्ञा-धातोः मित्त्वम् ; **ज्ञप मिच्च** (ग)—अयं ज्ञाने ज्ञापने च वर्तते—इति ज्ञप इत्यस्यापि मित्त्वम् ; णिच्। **अर्तिह्रीब्लीरीक्नूयीक्ष्माय्यातां पुग्णौ** ( VII. 3. 36. )—अर्त्यादीनां धातूनामाकारान्तानां च पुगागमो भवति णौ परतः। मितां ह्रस्वः (VI. 4. 92. ) इति ह्रस्वत्वम्। मारणे—**ज्ञपयति मृगान् व्याधः** ; तोषणे—**ज्ञपयति विष्णुं भक्तः** ; निशामने— **ज्ञपयति रूपं लेखकः**। **चल** गतौ। अस्य धातोः **कम्पने चलिः** (ग) इति मित्त्वम्। णिचि अत उपधायाः ( VII. 2. 116.) इति वृद्धिः ; मितां ह्रस्वः इति ह्रस्वत्वम् ; ततो लडादिकार्यम् ; **चलयति** वृक्षान् वायुः। **नान्ये मितोऽहेतौ** ( ग ) इति अहेतौ स्वार्थे णिचि ज्ञपादिभिन्ना मितो न भवन्ति ; अतः **चालयति**। **कृत** संशब्दने। **ऋत इद्धातोः** ( VII. 1. 100. ) इत्यनुवर्तमाने, **उपधायाश्च** ( VII. 1. 101. )—धातोरुपधायाः ऋकारस्य इकारादेशो भवति। रपरत्वम्। **हलि च** ( VIII. 2. 77. ) इति वर्तमाने, **उपधायां च** ( VIII. 2. 78. )—धातोरुपधाभूतौ यौ रेफवकारौ हल्परौ तयोरुपधाया इको दीर्घो भवति ; **कीर्तयति**।

**वञ्चु** प्रलम्भने ; **वञ्चयति** । **गृधिवञ्च्योः प्रलम्भने** (I. 3. 69.) —गृधिवञ्च्योर्ण्यन्तयोः प्रलम्भने वर्तमानयोरात्मनेपदं भवति । प्रलम्भनं विसंवादनं मिथ्याफलाख्यानम् ; माणवकं **वञ्चयते** । प्रलम्भन इति किम् ? अहिं **वञ्चयति**—परिहरतीत्यर्थः । **घट** संघाते । **घटादयो मितः** ( ग ) इति मित्त्वम् ; णिच् ; अत उपधायाः इति वृद्धिः ; मितां ह्रस्वः इति ह्रस्वत्वम् ; शप् ; गुणायादेशौ ; **घटयति** ॥

3. **गुपू** रक्षणे। **गुपूधूपविच्छिपणिपनिभ्य आयः** (III.1.28.) इत्यायप्रत्ययः ; लघूपधगुणः ; तदन्ताण्णिच् ; अतो लोपः ; गुणायादेशौ ; **गोपाययति, गोपाययते** । **धूप** सन्तापे; **धूपाययति, धूपाययते** । **विच्छ** गतौ ; **विच्छाययति, विच्छाययते** । **पण** व्यवहारे स्तुतौ च; **पणाययति, पणाययते** । **पन** च ; **पनाययति, पनाययते**। अत्र **आयादय अर्धधातुके वा** (III. 1. 31. )—आयादिप्रत्यया आर्धधातुके परतो वा भवन्ति । इति आयाभावपक्षे—**गोपयति, धूपयति, विच्छयति,** इत्यादि भवति । **ली** द्रवीकरणे । **लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने** ( VII. 3. 39. )—लीङ् ली ला इति त्रयाणामत्र ग्रहणम् ; ली ला इत्येतयोरन्यतरस्यां यथासङ्ख्यं नुक् लुक् इत्येतावागमौ भवतः णौ परतः स्नेहविपातनेऽर्थे । स्नेहस्य द्रवीकरणं स्नेहविपातनम् ; घृतं **विलीनयति** । अन्यत्र नुगभावपक्षे, **विभाषा लीयतेः** (VI. 1. 51.)—लीयतेर्धातोः ल्यपि एज्विषयेऽप्यलोऽन्त्यस्य स्थाने विभाषा आकारादेशो भवति । अर्तिह्रीत्यादिना ( VII. 3. 36. ) पुगागमः ; **विलापयति** । ला-धातोः कृता-

त्वस्य लीयतेश्च लुगागमे **विलालयति** । अन्यत्र आत्वाभावे वृद्धौ **विलाययति** । स्नेहद्रवे किम् ? लोहं विलापयति । **लियस्सम्माननशालीनीकरणयोश्च** ( I. 3. 70. )—ली इति धातोः सम्माननशालीनीकरणयोः चकारात् प्रलम्भनेऽर्थेऽपि वर्तमानादात्मनेपदं भवति । प्रलम्भनशालीनीकरणपूजासु नित्यमात्वं भवत्यशिति । पुगागमः; जटाभिः **उल्लापयते**—पूजामधिगच्छतीत्यर्थः ; श्येनो वर्तिकाम् **उल्लापयते**—अभिभवतीत्यर्थः; बालम् **उल्लापयते**—वञ्चयतीत्यर्थः ॥

4. **शिष** असर्वोपयोगे। अवपूर्वः ; णिच् ; **अवशेषयति** । विपूर्वोऽतिशये वर्तते ; **विशेषयति** । **धृष** प्रसहने ; **धर्षयति** । **आ धृषाद्वा** (ग) इति धृषपर्यन्तं णिचो विकल्पः ; णिजभावे यथायथं विकरणा भवन्ति । इति णिजभावे **धर्षति** । **पृची** सम्पर्के ; रुधादित्वात् श्नम् ; **प्रणक्ति** । णिचि **पर्चयति** । **ली** श्लेषणे ; क्र्यादित्वात् श्ना ; **लिनाति** । **वृजी** वर्जने ; रुधादित्वात् श्नम् ; **वृणक्ति** । णिचि **वर्जयति** । **वृञ** वरणे ; स्वादित्वात् श्नुः ; **वृणोति** । णिचि **वरयति** । **जॄ** वयोहानौ ; श्यन् ; **जीर्यते** । णिचि **जरयति** । **रिचिर्** विरेचने ; श्नम् ; **रिणक्ति** । णिचि **रेचयति** । **शिष्लृ** विशेषणे ; **विशिनष्टि** । णिचि **विशेषयति** । **पूञ्** पवने ; क्र्यादिः ; प्वादीनां ह्रस्वः ( VII. 3. 80. ) इति ह्रस्वत्वम् ; **पुनाति** । णिचि **पावयति** । **प्रीञ्** प्रीणने ; **प्रीणाति** । णिचि—**धूञ्प्रीञोर्नुग्वक्तव्यः** (VII. 3. 37. वा.)—इति **प्रीणयति** । **श्रथ** मोचनहर्षणयोः ;

**श्रथ्नाति, श्रथयति** । **आप्लृ** लम्भने ; आपति, आपयति । व्याप्तौ स्वादौ—**आप्नोति** । **वच** परिभाषणे ; अदादित्वात् शब्लुक् ; **वक्ति** । णिचि-**वाचयति** । **मार्ग** अन्वेषणे; **मार्गयति** । णिजभावे—**मार्गते** । **कठि** शोके; **उत्कण्ठयति** । अन्यत्र—**उत्कण्ठते** । **मृजू** शुद्धौ ; **मार्ष्टि** । णिचि—**मार्जयति** । **भू** प्राप्तावात्मनेपदी ; **भवते** । णिचि—**भावयते** । सत्तायाम्—**भवति, भावयति** ॥

5. अथ अदन्ताः। **कथ** वाक्यप्रबन्धे । इत उत्तरमदन्तो द्रष्टव्यः। अतो लोपः (VI.4.48.) इत्यकारलोपः । अत उपधायाः (VII. 2. 116.) इति वृद्धौ प्राप्तायाम् , **अचः परस्मिन् पूर्वविधौ** (I.1.57.)-अजादेशः परनिमित्तः पूर्वविधौ कर्तव्ये स्थानिवद्भवति । इति अतो लोपस्य स्थानिवद्भावात् वृद्धेरभावः ; **कथयति** । **गवेष** मार्गणे; **गवेषयति** । **आ गर्वादात्मनेपदी** (ग)। **पद** गतौ ; **पदयते** । **गृह** ग्रहणे ; **गृहयते** । **मृग** अन्वेषणे ; **मृगयते** । **कुह** विस्मापने; **कुहयते** । **शूर वीर** विक्रान्तौ; **शूरयते, वीरयते** । **स्थूल** परिबृंहणे ; **स्थूलयते** । **अर्थ** याञ्चायाम् ; **अर्थयते** । **सत्र** सन्तानक्रियायाम्; **सत्रयते** । **गर्व** माने ; **गर्वयते** ; इत्येते आत्मनेपदिनः । **सूत्र** वेष्टने ; **सूत्रयति** । **मूत्र** प्रस्रवणे ; **मूत्रयति** । **रूक्ष** पारुष्ये ; **रूक्षयति** । **पार तीर** कर्मसमाप्तौ ; **पारयति,**

तीरयति । **वटि** विभाजने ; वण्टयति । **सङ्ग्राम** युद्धे ; सङ्ग्रामयति । **अन्ध** दृष्ट्युपसंहारे ; अन्धयति ॥

इति स्वार्थण्यन्तचुरादौ लट् ॥

इति लट्प्रकरणं समाप्तम् ॥

---

## अथ लङ्प्रकरणम् ॥

### अथ शब्विकरणे लङ् ॥

1. अथ एतेभ्य एव धातुभ्यो लङ् विधीयते। **भू** सत्तायाम्। **भूते** ( III. 2. 84. ) इति वर्तमाने, **अनद्यतने लङ्** (III. 2. 111.) —अतीतायाश्च रात्रेः पश्चिमो याम आगामिन्याश्च रात्रेः पूर्वो यामो यो दिवसः स काल एषोऽद्यतनः कालः ; अद्य भवमद्यतनम् ; अविद्यमानमद्यतनं यस्मिन्नित्यनद्यतनः कालः ; अविद्यमानाद्यतनभूतेऽर्थे वर्तमानात् धातोर्लङ् प्रत्ययो भवति । अकारङकारौ **लुङ्लङ्लृङ्क्ष्वडुदात्तः** इति विशेषणार्थौ । **लुङ्लङ्लृङ्क्ष्वडुदात्तः** ( VI. 4. 71. )— लुङ् लङ् लृङ् इत्येतेषु परेषु अङ्गस्याडागमो भवति, स चोदात्तः । **इतश्च लोपः परस्मैपदेषु** (III. 4. 97.), **नित्यं ङितः** (III.4. 99.), इति वर्तमाने, **इतश्च** ( III. 4. 100. )—ङिल्लकारसम्बन्धिनः परस्मैपदस्येकारस्य लोपो भवति। शबादिकार्यं पूर्ववत् ; **अभवत्** । **तस्थस्थमिपां तान्तन्तामः**(III. 4. 101.)--ङिल्लकारसम्बन्धिनां तस् थस् थ मिप् इत्येतेषां यथासङ्ख्यं ताम् तम् त अम् इत्येत आदेशा भवन्ति ; **अभवताम्** । बहुवचने **संयोगान्तस्य लोपः** (VIII. 2. 23.)— संयोगान्तस्य पदान्तस्य लोपो भवति ; **अभवन्** । एवमेव—**अभवः, अभवतम्, अभवत ; अभवम्** । **स उत्तमस्य** ( III. 4. 98.) इत्यनुवर्तमाने, **नित्यं ङितः** ( III. 4. 99. )—ङिल्लकारसम्बन्धिनः उत्तमपुरुषसकारस्य नित्यं लोपो भवति ; **अभवाव, अभवाम** ॥

2. **एध** वृद्धौ ; अनद्यतने लङ् ; आत्मनेपदम् ; शप् । **लुङ्लङ्लृङ्क्ष्वडुदात्तः** ( VI. 4. 71. ) इति वर्तमाने, **आडजादीनाम्**

( VI. 4. 72. )—अजादीनामङ्गानामाडागमो भवति लुङ् लङ् लृङ इत्येतेषु परतः । **आटश्च** (VI. 1. 90. )—आटोऽचि परतः पूर्वपरयोः स्थाने वृद्धिरेकादेशो भवति । ङित्त्वादेत्वं सेभावश्च न ; **ऐधत, ऐधेताम्**, **ऐधन्त** ; रुत्वविसर्गौ—**ऐधथाः, ऐधेथाम्, ऐधध्वम्** ; **ऐधे, ऐधावहि, ऐधामहि** । **डुपचष्** पाके ; **अपचत्, अपचताम्, अपचन्; अपचः, अपचतम्, अपचत ; अपचम्, अपचाव, अपचाम** । आत्मनेपदे—**अपचत, अपचेताम्, अपचन्त ; अपचथाः, अपचेथाम्, अपचध्वम् ; अपचे, अपचावहि, अपचामहि** ॥

3. **टुनदि** समृद्धौ ; **अनन्दत्** इत्यादि । **ध्वंसु** अवस्रंसने ; **अध्वंसत, अध्वंसेताम्, अध्वंसन्त** । **व्येञ्** संवरणे; **अव्ययत्, अव्ययताम्, अव्ययन्; अव्ययत, अव्ययेताम्, अव्ययन्त** । **जि** जये ; **अजयत्** इत्यादि । विपराभ्यां जेः (I. 3. 19.) इत्यात्मनेपदम् ; **व्यजयत, व्यजयेताम्, व्यजयन्त** । एवं **पराजयत** इत्यादि । **ष्मिङ्** ईषद्धसने ; **व्यस्मयत** । **श्रिञ्** सेवायाम् ; **अश्रयत्, अश्रयत** । **डीङ्** विहायसा गतौ ; **उदडीयत** । **णीञ्** प्रापणे ; **अनयत्, अनयत** । **ह्वेञ्** स्पर्धायां वाचि ; **अह्वयत्, अह्वयत** । निसमुपविभ्यो ह्वः ( I. 3. 30. ) इत्यात्मनेपदम्; **न्यह्वयत, समह्वयत, उपाह्वयत, व्यह्वयत** । स्पर्धायामाङः ( I. 3. 31. ) इत्यात्मनेपदम्; **आह्वयत** । **मिह** सेचने; **अमेहत्** । **क्रीडृ** विहारे; **अक्रीडत्** । क्रीडोऽनुसम्परिभ्यश्च

(I. 3. 21.) इत्यात्मनेपदम्; **अन्वक्रीडत, समक्रीडत, पर्यक्रीडत** । **गुहू** संवरणे; **उपागूहत्** । **गुजि** अव्यक्ते शब्दे; **अगुञ्जत्** ॥

4. **ष्ठिवु** निरसने; **क्लमु** ग्लानौ; **चमु** भक्षणे । ष्ठिवुक्लम्वाचमां शिति (VII.3.75.) इति दीर्घः; **अष्ठीवत्, अक्लामत्, आचामत्** । चमेराङ्पूर्वस्य ग्रहणादिह दीर्घो न भवति; **अचमत्** । **क्रमु** पादविक्षेपे । अनुपसर्गाद्वा (I. 3. 43.) इत्यात्मनेपदम्; क्रमः परस्मैपदेषु (VII. 3. 76.) इत्युपधादीर्घः; **अक्रामत्, अक्रमत** । अनुपसर्गादिति किम्? समक्रामत् । आङ उद्गमने (I. 3. 40.) इत्यात्मनेपदम्; **आक्रमत** । प्रोपाभ्यां समर्थाभ्याम् (I. 3. 42.) इत्यात्मनेपदम्; **प्राक्रमत, उपाक्रमत** । **इषु** इच्छायाम्; **गम्लृ** गतौ; **यम** उपरमे । इषुगमियमां छः (VII. 3. 107.) इति छादेशः; **ऐच्छत्, अगच्छत्, अयच्छत्** । **पा** पाने; **घ्रा** गन्धोपादाने; **ध्मा** शब्दाग्निसंयोगयोः; **ष्ठा** गतिनिवृत्तौ; **म्ना** अभ्यासे; **दाण्** दाने; **दृशिर्** प्रेक्षणे; **ऋ** गतौ; **सृ** गतौ; **शद्लृ** शातने; **षद्लृ** विशरणगत्यवसादनेषु—इत्येतेषां धातूनां पाघ्रेत्यादिना (VII. 3. 78.) पिबादय आदेशा भवन्ति; **अपिबत्, अजिघ्रत्, अधमत्, अतिष्ठत्, अमनत्, अयच्छत्, अपश्यत्, आर्च्छत्, अधावत्,** शदेश्शितः (I. 3. 60.) इत्यात्मनेपदेन **अशीयत, असीदत्** । सदिरप्रतेः (VIII. 3. 66.) इति मूर्धन्यादेशः; **न्यषीदत्** । **दंश** दंशने; **षञ्ज** सङ्गे; **ष्वञ्ज** परिष्वङ्गे । दंशसञ्जस्वञ्जां शपि

(VI. 4. 25.)इत्यनुनासिकलोपः; **अदशत्, असजत्, अस्वजत** । उपसर्गात्सुनोतीत्यादिना (VIII.3.65.) मूर्धन्यादेशः ; **पर्यष्वजत** । **रञ्ज** रागे ; रञ्जेश्च (VI. 4. 26.) इत्यनुनासिकलोपः ; **अरजत्** । **गुपू** रक्षणे ; **धूप** सन्तापे ; **विच्छ** गतौ ; **पण** व्यवहारे स्तुतौ च; **पन** च ; **अगोपायत्, अधूपायत्, अविच्छायत्, अपणायत्, अपनायत्** । आयप्रत्ययरहितौ पणिपनी आत्मनेपदिनौ; **अपणत, अपनत** । ऋतेरीयङ् (III. 1. 29.) इति—**आर्तीयत** । **कमु** कान्तौ ; कमेर्णिङ् (III. 1. 30.) इति—**अकामयत** । एवं भ्वादीनां धातूनां सर्वं नेयम् ॥

**इति भ्वादौ शब्विकरणे लङ् ॥**

---

**अथ लुग्विकरणे लङ् ॥**

1. **अद** भक्षणे । लङ् ; **अदस्सर्वेषाम्** (VII.3.100.)—अदोऽङ्गादुत्तरस्य अपृक्तप्रत्ययस्य पितः सार्वधातुकस्य अडागमो भवति सर्वेषाम् आचार्याणां मतेन । आडागमो वृद्धिश्च; **आदत्, आत्ताम्, आदन्; आदः, आत्तम्, आत्त; आदम्, आद्व, आद्म** । **शीङ्** स्वप्ने । शीङः सार्वधातुके गुणः (VII. 4. 21.) इति गुणः; **अशेत, अशयाताम्**—शीङो रुट् (VII. 1. 6.) इति रुडागमः—**अशेरत ; अशेथाः, अशयाथाम्, अशेध्वम्; अशयि, अशेवहि, अशेमहि** । **ब्रूञ्** व्यक्तायां वाचि । ब्रुव ईट् (VII. 3. 93.); **अब्रवीत्**,

**अब्रूताम्, अब्रुवन्; अब्रवीः, अब्रूतम्, अब्रूत; अब्रवम्, अब्रूव, अब्रूम।** आत्मनेपदे—**अब्रूत, अब्रुवाताम्, अब्रुवत; अब्रूथाः, अब्रुवाथाम्, अब्रूध्वम्; अब्रुवि, अब्रूवहि, अब्रूमहि ॥**

2. **हन** हिंसागत्योः । तिप्सिपोर्हल्ङ्यादिलोपः ; हन इति स्थिते अडागमः—**अहन्** । अनुदात्तोपदेशेत्यादिना (VI. 4. 31.) अनुनासिकलोपः—**अहताम्** । गमहनेत्यादिना (VI. 4. 98.) उपधालोपः; हो हन्तेरिति (VII. 3. 54.) घत्वम्; **अघ्नन्** । एवमेव—**अहन्, अहतम्, अहत; अहनम्, अहन्व, अहन्म** । आङो यमहनः (I. 3. 28.) इत्यात्मनेपदम्—**आहत, आघ्नाताम्, आघ्नत; आहथाः, आघ्नाथाम्, आहध्वम्; आघ्नि, आहन्वहि, आहन्महि** । **द्विष** अप्रीतौ । लङवस्थायामडागमः; तिप्, शप्, लुक्; इतश्च लोपः; लघूपधगुणः; हल्ङ्यादिलोपः; झलां जशोऽन्ते (VIII. 2. 39.) इति जश्त्वम्; वावसाने (VIII. 4. 56.) इति चर्त्वम्; **अद्वेट् अद्वेड्, अद्विष्टाम्** । **लङश्शाकटायनस्य** (III. 4. 111.) इत्यनुवर्तमाने, **द्विषश्च** (III. 4. 112.)—द्विष उत्तरस्य लङादेशस्य झेर्जुसादेशो भवति शाकटायनस्याचार्यस्य मतेन । जकारो जुसि चेति (VII. 3. 83.) विशेषणार्थः; **अद्विषुः** । अन्येषाम् आचार्याणां मतेन **अद्विषन्** । एवमेव—**अद्वेट् अद्वेड्, अद्विष्टम्, अद्विष्ट; अद्वेषम्, अद्विष्व, अद्विष्म** । आत्मनेपदे—**अद्विष्ट, अद्विषाताम्, अद्विषत; अद्विष्ठाः, अद्विषाथाम्**—झलां जश् झशि (VIII. 4. 53.) इति जश्त्वम्, ष्टुत्वम्, धकारस्य ढकारः—**अद्विड्ढ्वम्; अद्विषि, अद्विष्वहि, अद्विष्महि ॥**

3. **दुह्** प्रपूरणे। लङ्; अडागमः; तिप्; शब्लुक्; इतश्च लोपः; लघूपधगुणः; हल्ङ्यादिलोपः; दादेर्धातोर्घः (VIII. 2. 32.) इति हकारस्य घकारः; भष्भावः; जश्त्वेन घकारस्य गकारः; चर्त्वम्; **अधोक् अधोग्, अदुग्धाम्, अदुहन्; अधोक् अधोग्, अदुग्धम्, अदुग्ध; अदोहम्, अदुह्व, अदुह्म**। आत्मनेपदे—**अदुग्ध, अदुहाताम्, अदुहत; अदुग्धाः, अदुहाथाम्, अधुग्ध्वम्; अदुहि, अदुह्वहि, अदुह्महि**। **दिह्** उपचये; इकारस्यैकारो गुणः; **अधेक् अधेग्, अदिग्धाम्, अदिहन्; अधेक् अधेग्, अदिग्धम्, अदिग्ध; अदेहम्, अदिह्व, अदिह्म**। एवमेव **समदिग्ध, समदिहाताम्, समदिहत**; इत्यादि। **लिह्** आस्वादने; हो ढः (VIII. 2.31.) इति ढत्वम्; जश्त्वचर्त्वे; **अलेट् अलेड्, अलीढाम्, अलिहन्**; इत्यादि। एवम् **अलीढ, अलिहाताम्, अलिहत**; इत्यादि। **चक्षिङ्** व्यक्तायां वाचि; स्कोस्संयोगाद्योरन्ते च (VIII. 2. 29.) इति कलोपः; ष्टुत्वम्; आङ्पूर्वः; **आचष्ट, आचक्षाताम्, आचक्षत; आचष्ठाः, आचक्षाथाम्, आचड्ढ्वम्; आचक्षि, आचक्ष्वहि, आचक्ष्महि**॥

4. **ईर** गतौ। आडजादीनाम् (VI. 4. 72.) इत्याट्; आटश्च (VI. 1. 90.) इति वृद्धिः; **ऐर्त, ऐराताम्, ऐरत; ऐर्थाः, ऐराथाम्, ऐर्ध्वम्; ऐरि, ऐर्वहि, ऐर्महि**। **ईड** स्तुतौ; खरि च (VIII. 4. 55.) इति चर्त्वम्, ष्टुत्वेन तकारस्य टकारः; **ऐट्ट, ऐडाताम्, ऐडत**। ष्टुत्वेन थकारस्य ठकारः; चर्त्वेन डकारस्य टकारः,

**ऐड्ढाः, ऐडाथाम्**, ईडजनोर्ध्वे च (VII. 2.78.) इति इडागमः—**ऐडिध्वम्; ऐडि, ऐड्वहि, ऐड्महि । ईश** ऐश्वर्ये; व्रश्चादिना षत्वम्; **ऐष्ट, ऐशाताम्, ऐशत; ऐष्ठाः, ऐशाथाम्**, षत्वजश्त्वष्टुत्वानि—**ऐड्ढ्वम्**; ईशेर्ध्वमीडागममिच्छन्ति विभाषा—**ऐशिध्वम्; ऐशि, ऐश्वहि, ऐश्महि । आस** उपवेशने; **आस्त, आसाताम्, आसत; आस्थाः, आसाथाम्**, झलां जश् झशि (VIII.4.53.) इति सस्य दकारः—**आद्ध्वम्; आसि, आस्वहि, आस्महि । वस** आच्छादने; **अवस्त, अवसाताम्, अवसत; अवस्थाः, अवसाथाम्, अवद्ध्वम्; अवसि, अवस्वहि, अवस्महि । णिसि** चुम्बने; **अनिंस्त, अनिंसाताम्, अनिंसत; अनिंस्थाः, अनिंसाथाम्, अनिन्ध्वम्; अनिंसि, अनिंस्वहि, अनिंस्महि ।** वा निंसनिक्षनिन्दाम् (VIII. 4. 33.) इति विभाषा णत्वम्; **प्राणिंस्त प्रानिंस्त । द्यु** अभिगमने; उतो वृद्धिर्लुकि हलि (VII. 3. 89.) इति वृद्धिः; **अद्यौत्, अद्युताम्, अद्युवन्; अद्यौः, अद्युतम्, अद्युत; अद्यवम्, अद्युव, अद्युम । यु** मिश्रणे; **अयौत्, अयुताम्, अयुवन्**; इत्यादि । **रु** शब्दे; **अरौत्, अरुताम्, अरुवन्**; इत्यादि । **णु** स्तुतौ; **अनौत्, अनुताम्, अनुवन्**; इत्यादि । **ष्टुञ्** स्तुतौ; **अभ्यष्टौत्** इत्यादि । **ऊर्णुञ्** आच्छादने । **गुणोऽपृक्ते** (VII. 3. 91.)—ऊर्णोतेर्धातोरपृक्ते हलि सार्वधातुके पिति परतो गुणो भवति; **और्णोत्, और्णुताम्, और्णुवन्**; इत्यादि । **प्रौर्णुत, प्रौर्णुवाताम्, प्रौर्णुवत**; इत्यादि च ॥

5 **इण्** गतौ ; **ऐत्, ऐताम्** । इणो यण् ( VI. 4. 81. ) इति अन्तौ यणादेशः । **असिद्धवदत्रा भात्** ( VI. 4. 22. )—असिद्धवदित्यधिकारोऽयम् ; यावत ऊर्ध्वमनुक्रमिष्यामः आ अध्यायपरिसमाप्तेः तदसिद्धवद्भवति इति वेदितव्यम् ; आ भसंशब्दनाद्यदुच्यते तत्र कर्तव्ये ; अत्रेति समानाश्रयत्वप्रसिद्ध्यर्थम् । तच्चेदत्र यत् शास्त्रीयं कार्यं विधीयते तदाश्रयमेव भवति ; व्याश्रयन्तु नासिद्धं भवतीत्यर्थः । आ भाच्छास्त्रीये कर्तव्ये आ भाच्छास्त्रीयं कार्यमसिद्धं भवति इति यणादेशस्यासिद्धत्वात् आडागमः ; **आयन्** । एवम् **ऐः, ऐतम्, ऐत ; आयम्, ऐव, ऐम** । **इङ्** अध्ययने ; **अध्यैत,** अचि श्नुधात्वित्यादिना (VI. 4. 77.) इयङ्—**अध्यैयाताम्, अध्यैयत** ; इत्यादि । **इक्** स्मरणे ; **अध्यैत्, अध्यैताम्,** इयङ्—**अध्यैयन्** ; ये तु **इण्वदिक इति वक्तव्यम्** (वा. II. 4. 45.) इति सामान्यातिदेशमिच्छन्ति तेषां मतेन—**अध्यायन्** ; **अध्यैः, अध्यैतम्, अध्यैत** ; गुणायादेशौ, आट्, वृद्धिश्च—**अध्यायम्, अध्यैव, अध्यैम** । **या** प्रापणे ; **अयात्, अयाताम्** । **आतः** (III. 4. 110.) इत्यनुवर्तमाने, **लङः शाकटायनस्यैव** (III. 4. 111.)—आकारान्तादङ्गात् परस्य लङादेशस्य झेर्जुसादेशो भवति शाकटायनस्याचार्यस्य मतेन । **उस्यपदान्तात्** (VI 1 96.)—अवर्णान्तात् अपदान्तादुसि परतः पूर्वपरयोस्स्थाने पररूपमेकादेशस्स्यात् ; **अयुः** । अन्येषां मतेन **अयान्** । **वा** गतिगन्धनयोः ; **अवात्, अवाताम्, अवुः अवान्** ; इत्यादि । **द्रा** कुत्सायां गतौ ; नेर्गदेत्यादिना (VIII. 4. 17.) णत्वम् ; **प्रण्यद्रात्, प्रण्यद्राताम्, प्रण्यद्रुः प्रण्यद्रान्** ; इत्यादि ॥

6. **विद** ज्ञाने; अवेत्, अवित्ताम्। सिजभ्यस्तविदिभ्यश्च (III. 4. 109.)—सिचोऽभ्यस्तसंज्ञकेभ्यो वेत्तेश्चोत्तरस्य ङित्झकारस्य झेर्जुसादेशो भवति; अविदुः। सिपि धातो रुर्वा (VIII.2.74.) इत्यनुवर्तमाने, **दश्च** (VIII.2.75.)—धातोर्दकारस्य पदान्तस्य सिपि परतो वा रुर्भवति; अवेः। पक्षे जश्त्वचर्त्वे—अवेत् अवेद्। समो गम्यृच्छीत्यादिना (I. 3. 29.) तङ्; समवित्त, समविदाताम्, समविदत। अत्र **वेत्तेर्विभाषा** (VII. 1. 7.)—वेत्तेः परस्य झादेशस्य अतो रुडागमो भवति वा। इति पक्षे रुट्; समविद्रत। एवं समवित्थाः, समविदाताम्, समविद्ध्वम्; समविदि, समविद्वहि, समविद्महि। **अस** भुवि। **अस्तिसिचोऽपृक्ते** (VII. 3. 96.)—अस्तेरङ्गात् सिजन्ताच्चोत्तरस्य अपृक्तसार्वधातुकस्य ईडागमो भवति; आसीत्। श्नसोरल्लोपः (VI. 4. 111.) इत्यकारलोपः, असिद्धवदत्राभात् (VI. 4. 22.) इत्यकारलोपस्य असिद्धत्वात् आडागमः—आस्ताम्, आसन्; आसीः, आस्तम्, आस्त; आसम्, आस्व, आस्म। **मृजूष्** शुद्धौ; अमार्ट् अमार्ड्, अमार्ष्टाम्, अमृजन्। मृजेरजादौ सङ्क्रमे विभाषा वृद्धिरिष्यते (भा.); इति पक्षे वृद्धिः—अमार्जन्। सिपि, इतश्च (III. 4. 100.) इतीकारलोपः; प्रत्ययलक्षणन्यायेन व्रश्चादिना प्राप्तषत्वस्य, षढोः कस्सि (VIII. 2. 41.) इति कत्वे प्राप्ते, **वर्णाश्रयविधौ प्रत्ययलक्षणप्रतिषेधो वक्तव्यः** (परि. 21.) इति नियमात् सिपि परतः कत्वं न भवति; जश्त्वचर्त्वे; अमार्ट् अमार्ड्। एवम्-अमृष्टम्, अमृष्ट; अमार्जम्, अमृज्व, अमृज्म। **वच** परिभाषणे; अवक् अवग्, अवक्ताम्, अवचन्; अवक् अवग्, अवक्तम्, अवक्त; अवचम्, अवच्व, अवच्म॥

7. **रुदिर्** अश्रुविमोचने। **रुदश्च पञ्चभ्यः** ( VII. 3. 98. )—रुदादिभ्यः पञ्चभ्यः उत्तरस्य हलादेरपृक्तस्य सार्वधातुकस्य ईडागमो भवति। लघूपधगुणः; **अरोदीत्**। **अड्गार्ग्यगालवयोः** (VII. 3.99.)—रुदादिभ्यः पञ्चभ्यः उत्तरस्य हलादेरपृक्तप्रत्ययस्य सार्वधातुकस्य अडागमो भवति गार्ग्यगालवयोर्मतेन ; **अरोदत्**। रुदादिभ्यस्सार्वधातुके ( VII. 2. 76. ) इति इडागमः—**अरुदिताम्, अरुदन्**; **अरोदीः अरोदः, अरुदितम्, अरुदित; अरोदम्, अरुदिव, अरुदिम**। **ञिष्वप्** शये; **अस्वपीत् अस्वपत्, अस्वपिताम्, अस्वपन्**; इत्यादि। **श्वस** प्राणने ; **अश्वसीत् अश्वसत्, अश्वसिताम्, अश्वसन्**; इत्यादि। **अन** प्राणने ; **प्राणीत् प्राणत्**, इत्यादि। **जक्ष** भक्षहसनयोः ; **अजक्षीत् अजक्षत्**। जक्षित्यादयः षट् ( VI. 1. 6. ) इत्यभ्यस्तसंज्ञायां, सिजभ्यस्तेत्यादिना ( III. 4. 109.) झेर्जुसादेशः ; **अजक्षुः**। **जागृ** निद्राक्षये। **जाग्रोऽविचिण्णल्ङित्सु** ( VII. 3. 85. )—जागर्तेर्गुणो भवति विचिण्णल्ङिद्वर्जिते प्रत्यये परतः। वृद्धिविषये प्रतिषेधविषयेऽपि यथा स्यादिति जागर्तेः गुण आरभ्यते ; हल्ङ्याब्भ्यो लोपः ; **अजागः, अजागृताम्**, जुसि च ( VII. 3. 83. ) इति गुणः—**अजागरुः**। **दरिद्रा** दुर्गतौ ; **अदरिद्रात्, अदरिद्रिताम्, अदरिद्रुः**। **शासु** अनुशिष्टौ ; हल्ङ्याब्भ्यो लोपः ; **तिप्यनस्तेः** ( VIII. 2. 73. )—तिपि परतः सकारान्तस्य पदस्य अनस्तेर्दकारादेशो भवति ; चर्त्वम् ; **अशात् अशाद्**। शास इदङ्हलोः ( VI. 4.

34. ) इत्युपधाया इत्वम् ; शासिवसिघसीनाञ्च ( VIII. 3. 60. ) इति षत्वम्—**अशिष्टाम्**, **अशासुः** । **सिपि धातो रुर्वा** (VII. 2. 74. )—सिपि परतः सकारान्तस्य धातोः रुर्भवति दकारो वा ; **अशाः अशाद्** । **दीधीङ्** दीप्तिदेवनयोः ; **अदीधीत** । एरनेकाच इत्यादिना ( VI. 4. 82. ) यणादेशः—**अदीध्याताम्**, **अदीध्यत** ; **अदीधीथाः**, **अदीध्याथाम्**, **अदीधीध्वम्** । **यीवर्णयोर्दीधीवेव्योः** ( VII. 4. 53. )—लोप इति वर्तते ; यकारादौ इवर्णादौ च प्रत्यये परतो दीधीवेव्योर्लोपो भवति—इति **अदीधि** ; **अदीधीवहि**, **अदीधीमहि** । **वेवीङ्** वेतिना तुल्ये ; **अवेवीत**, **अवेव्याताम्**, **अवेव्यत** । **चकास्** दीप्तौ ; तिप्यनस्तेः (VIII. 2. 73. ) इति दत्वम् ; वावसाने ( VIII. 4. 56. ) इति चर्त्वम् ; **अचकात् अचकाद्**, **अचकास्ताम्**, **अचकासुः** । **वश** कान्तौ ; व्रश्चादिना ( VIII. 2. 36. ) षत्वम् ; जश्त्वचर्त्वे ; **अवट् अवड्** । ङित्सु ग्रहिज्येति ( VI. 1. 16.) सम्प्रसारणम् ; पूर्वरूपम् ; अजादित्वादाडागमः ; आटश्चेति ( VI. 1. 90. ) वृद्धिः—**औष्टाम्**, **औशन्** ; **अवट् अवड्**, **औष्टम्**, **औष्ट** ; **अवशम्**, **औश्व**, **औश्म** । **ह्नुङ्** अपनयने ; उवङादेशः ; **न्यह्नुत**, **न्यह्नुवाताम्**, **न्यह्नुवत** ; इत्यादि ॥

इत्यदादौ लुग्विकरणे लङ् ॥

---

## अथ जुहोत्यादौ श्लुविकरणे लङ्॥

1. **हु** दानादनयोः । शप्; लुक्; श्लौ (VI. 1. 10.) इति द्वित्वम्; अभ्यासकार्यम्; **अजुहोत्, अजुहुताम्** । सिजभ्यस्तेत्यादिना (III. 4. 109.) झेर्जुसादेशः; जुसि च (VII. 3. 83.) इति गुणः; अवादेशः; **अजुहवुः** । **डुधाञ्** धारणपोषणयोः; **अदधात्**; श्नाभ्यस्तेत्यादिना (VI. 4. 112.) आकारलोपः; दधस्तथोश्च (VI. 2. 38.) इत्यभ्यासस्य भष्भावः; खरि चेति (VIII. 4. 55.) चर्त्वम्—**अधत्ताम्, अदधुः; अधत्त** । **ञिभी** भये; **अबिभेत्**, भियोऽन्यतरस्याम् (VI. 4. 105.) इति पक्षे इत्वम्—**अबिभिताम् अबिभीताम्, अबिभयुः; अबिभेः, अबिभितम् अबिभीतम्, अबिभित अबिभीत; अबिभयम्, अबिभिव अबिभीव, अबिभिम अबिभीम** । **ह्री** लज्जायाम्; **अजिह्रेत्, अजिह्रीताम्, अजिह्रयुः; अजिह्रेः,** इत्यादि । **डुदाञ्** दाने; **अददात्, अदत्ताम्, अददुः; अदत्त** । आङो दोऽनास्यविहरणे (I. 3. 20.) इत्यात्मनेपदम्—**आदत्त** ॥

2. **णिजिर्** शौचपोषणयोः । णिजां त्रयाणां गुणः श्लौ (VII. 4. 75.) इत्यभ्यासस्य गुणः; तिप्सिपोर्हल्ङ्याबादिलोपः; चोः कुः (VIII. 2. 30.) इति कुत्वम्; वावसाने (VIII. 4. 56.) इति चर्त्वम्; **अनेनेक् अनेनेग्, अनेनिक्ताम्, अनेनिजुः** । **नाभ्यस्तस्याचि पिति सार्वधातुके** (VII. 3. 87.)—अभ्यस्तसंज्ञकस्य लघूपधस्य च अजादौ पिति सार्व-

धातुके परतो गुणो न भवति; **अनेनिजम्** । तङि—**अनेनिक्त, अनेनिजाताम्, अनेनिजत** । **विजिर्** पृथग्भावे ; **अवेवक्, अवेवेग्, अवेविक्ताम्, अवेविजुः; अवेविक्त, अवेविजाताम्**, इत्यादि । **विष्लृ** व्याप्तौ । पित्सु गुणः । हल्ङ्याब्भ्यो दीर्घात्... हल्ङ्यादिलोपः; जश्त्वचर्त्वे ; **अवेवेट्, अवेवेड्**, इत्यादि; **अवेविष्ट, अवेविषाताम्**, इत्यादि च । ध्वमि तु ष्टुत्वेन धकारस्य ढकारः ; **अवेविड्ढ्वम्** ॥

3. **डुभृञ्** धारणपोषणयोः । भृञामित् (VII. 4. 76.) इति अभ्यासस्य इत्वम् ; पित्सु गुणः ; हल्ङ्यादिलोपः ; रेफस्य विसर्जनीयः—**अबिभः, अबिभृताम्, अबिभरुः ; अबिभृत, अबिभ्राताम्**, इत्यादि । **माङ्** माने । हलादौ, ई हल्यघोः ( III. 4. 113. ) इति ईत्वम् ; **अमिमीत, अमिमाताम्, अमिमत** । **ओहाङ्** गतौ ; **अजिहीत** । **ओहाक्** त्यागे ; **अजहात्** । जहातेश्च ( VI. 4. 116. ) इति पक्षे इत्वम् ; **अजहिताम् अजहीताम्** । सिजभ्यस्तेति ( III. 4. 109. ) झेः जुस् ; **अजहुः** ॥

4. **ऋ** गतौ । द्विर्वचनम् ; पित्सु गुणो रपरः; उरदत्वम् ; हलादिः शेषः ( VI. 4. 60. ) ; अर्तिपिपर्त्योश्च ( VI. 4. 77. ) इत्यभ्यासस्य इत्वम् ; अभ्यासस्यासवर्णे ( VI. 4. 78.) इति इयङ् ; आडागमो वृद्धिश्च ; तिप्सिपोर्हल्ङ्यादिलोपः ; रेफस्य विसर्जनीयः ; **ऐयः, ऐयृताम्, ऐयरुः; ऐयः, ऐयृतम्, ऐयृत ; ऐयरम्, ऐयृव, ऐयृम** । **पॄ** पालनपूरणयोः । अर्तिपिपर्त्योश्च ( VII. 4. 77. )

इत्यभ्यासस्य इत्वम् ; पित्सु गुणो रपरः ; हल्ङ्यादिलोपः ; रेफस्य विसर्जनीयः ; **अपिपः** । उदोष्ठ्यपूर्वस्य ( VII. 1. 102. ) इति उत्वम्, हलि च ( VIII. 2. 77. ) इति दीर्घः—**अपिपूर्ताम्, अपिपरुः** ; इत्यादि । **सृ** गतौ । उरत् ( VII. 4. 66. ) इत्यभ्यासस्य अत्त्वम् ; रपरत्वम् ; हलादिश्शेषः ; पित्सु गुणो रपरः ; हल्ङ्यादिलोपः; रेफस्य विसर्जनीयः ; **अससः, अससृताम्, अससरुः** ॥

## इति जुहोत्यादौ श्लुविकरणे लङ् ॥

---

## अथ दिवादौ श्यन्विकरणे लङ् ॥

1. **दिवु** क्रीडादौ । श्यन् ; हलि च ( VIII. 2. 77. ) इति दीर्घः ; **अदीव्यत्** । **षूङ्** प्राणिप्रसवे ; **असूयत** । **णह** बन्धने ; **पर्यणह्यत** । **षिवु** तन्तुसन्ताने ; **सिवादीनां वाड्व्यवायेऽपि** ( VIII. 3. 71. )—परिनिविभ्य इत्यादि उक्तम् ; ततस्सिवादीनां परिनिविभ्य उत्तरेषाम् अड्व्यवायेऽपि मूर्धन्यादेशो वा भवति ; **पर्यषीव्यत् पर्यसीव्यत्, न्यषीव्यत् न्यसीव्यत्, व्यषीव्यत् व्यसीव्यत्** । वा भ्राशेत्यादिना (III. 1. 70. ) विभाषा श्यन् ; **अभ्राश्यत् अभ्राशत्; अभ्लाश्यत् अभ्लाशत्** ; **अभ्राम्यत् अभ्रमत्, अक्राम्यत् अक्रामत्** ; **अत्रस्यत् अत्रसत्**; **अत्रुट्यत्**, त्रुटः श्यनभावे, तुदादिभ्यः शः ( III. 1. 77. ) इति शप्रत्ययः—**अत्रुटत्** ; **अलष्यत् अलषत्** ॥

2. **दो** अवखण्डने ; द्यतेः ओतश्श्यनि ( III. 3. 71. )

इत्योकारलोपः; **अवाद्यत्** । **जनी** प्रादुर्भावे ; जादेशः ; **अजायत** । **वृतु** वर्तने ; **अवृत्यत, अवर्तत** । **मृष** तितिक्षायाम् ; **अमृष्यत्, अमृष्यत, पर्यमृष्यत्** । **शुचिर्** पूतीभावे ; **अशुच्यत्** । **रञ्ज** रागे ; नकारलोपः ; **अरज्यत्, अरज्यत** । **राध** संसिद्धौ; **अराध्नोत्** । राधोऽकर्मकाद्वृद्धौ एव इति श्यनि—**अराध्यत्**। **व्यध** ताडने ; **अविध्यत्** । **शक** विभाषितो मर्षणे; **अशक्यत्, अशक्यत** । पक्षे—**अशक्नोत्, अशक्नुत** । **अशाम्यत्, अताम्यत्, अदाम्यत्, अश्राम्यत्, अभ्राम्यत्, अक्लाम्यत्, अक्षाम्यत्, अमाद्यत्**; अत्र शमामष्टानां दीर्घः श्यनि (VII. 3. 74.) इति दीर्घः । **असु** निरसने; **आस्यत्** । उपसर्गादस्यत्यूह्योर्वा वचनम् (I. 3. 30. वा.) इति पक्षे आत्मनेपदम्; **पर्यास्यत, पर्यास्यत्** । **यसु** प्रयत्ने ; **अयस्यत्, अयसत्** ; यसोऽनुपसर्गात् (III. 1. 71.) इति श्यन्विकल्पः । सोपसर्गे **प्रायस्यत्** । संपूर्वादपि संयसश्च (III. 1. 72.) इति श्यन्विकल्पः; **समयस्यत्, समयसत्** । **ञिमिदा** स्नेहने; **अमेद्यत्** ; अत्र मिदेर्गुणः (VII. 3. 82.) इति गुणः ॥

इति दिवादौ श्यन्विकरणे लङ् ॥

---

## अथ स्वादौ श्नुविकरणे लङ् ॥

1. **षुञ्** अभिषवे । विकरणस्य गुणः; श्नोः ङित्त्वात् सर्वत्र धातोः गुणाभावः ; **असुनोत्, असुनुताम्**—हुश्नुवोस्सार्वधातुके (VI.

4.87.) इति यणादेशः—**असुन्वन्**; रुत्वविसर्गौ—**असुनोः**, **असुनु-तम्**, **असुनुत**; **असुनवम्**—लोपश्चास्यान्यतरस्यां म्वोः (VI. 4. 107.) इति उकारलोपो विकल्पेन—**असुन्व असुनुव**, **असुन्म असुनुम**। इणन्तादुपसर्गात् उपसर्गात्सुनोतीत्यादिना (VIII. 3. 65.) षत्वम्; **अभ्यषुणोत्**। ताङि—**असुनुत**, **असुन्वाताम्**, **असुन्वत**; इत्यादि। **अशू** व्याप्तौ; **आश्नुत**, उवङादेशः—**आश्नुवाताम्**, **आश्नुवत**। **चिञ्** चयने; **आचिनोत्**, **अचिनुत**॥

2. **हि** गतौ; **अहिनोत्**। हिनुमीना (VIII. 4. 15.) इति णत्वम्—**प्राहिणोत्**। **शक्लृ** शक्तौ; **अशक्नोत्**। **श्रु** श्रवणे; **अशृणोत्**। सम्पूर्वात् शृणोतेरात्मनेपदम्—**समशृणुत**। **ऋधु** वृद्धौ; **आर्ध्नोत्**। **दम्भु** दम्भने; **अदभ्नोत्**। **अक्षू** व्याप्तौ; अक्षोऽन्यतरस्याम् (III. 1. 75.); **आक्ष्णोत्**। पक्षे शपि—**आक्षत्**। **तक्षू** तनूकरणे; **अतक्ष्णोत्**। पक्षे शपि—**अतक्षत्** वाग्भिः॥

**इति स्वादौ श्नुविकरणे लङ्॥**

---

**अथ तुदादौ शविकरणे लङ्॥**

1. **तुद् नुद् दिश् भ्रस्ज् क्षिप् कृष्**—एते षट् स्वरितेतः; **अतुदत्**, **अतुदत**। **भ्रस्ज** पाके; ग्रहिज्येति (VI. 1. 16.) सम्प्रसारणम्; सकारस्य श्चुत्वेन शकारः; तस्य जश्त्वेन जकारः; **अभृज्जत्**। **ओव्रश्चू** छेदने; **अवृश्चत्**। **व्यच** व्याजीकरणे;

अविचत् । **प्रच्छ** ज्ञीप्सायाम्; अपृच्छत् । **उच्छी** विवासे; औच्छत् । **तृप तृम्फ** तृप्तौ; अतृपत् । शे तृम्फादीनां नुम् वाच्यः (VII. 1. 59.)—इति अतृम्फत् । **दृफ दृम्फ** उत्क्लेशे; अदृफत्, अदृम्फत् । **उभ उम्भ** पूरणे; औभत्, औम्भत् । **ऋफ** हिंसायाम्; आर्फत् । **इषु** इच्छायाम्; ऐच्छत् ॥

2. **पृङ्** व्यायामे; रिङ् शयग्लिङ्क्षु (VII. 4. 28) इति रिङ्; इयङ्; **व्याप्रियत** । **षू** प्रेरणे; **अभ्यषुवत्** । **गॄ** निगरणे; अचि विभाषा (VIII. 2. 21.) इति रेफस्य वा लत्वम्; **अगिरत्**, **अगिलत्** । अवाद्ग्रः (I. 3. 51.) इति तङ्; **अवागिरत**, **अवागिलत** । समः प्रतिज्ञाने (I. 3. 52.) इति तङ्; शतं **समगिरत**, नित्यं शब्दं **समगिरन्त** वैयाकरणाः । **टुमस्जो** शुद्धौ; **अमज्जत्** । **विश** प्रवेशने; **अविशत्** । नेर्विशः (I. 3. 17.) इति तङ्; **न्यविशत** ॥

3. **मुच्लृ** मोक्षणे; शे मुचादीनाम् (VII. 1. 59.) इति नुम्; **अमुञ्चत्**, **अमुञ्चत** । **लुप्लृ** छेदने; **अलुम्पत्**, **अलुम्पत** । **विद्लृ** लाभे; **अविन्दत्**, **अविन्दत** । **लिप** उपदेहे; **अलिम्पत्**, **अलिम्पत** । **षिच** क्षरणे; **असिञ्चत्**, **असिञ्चत** । **कृती** छेदने; **अकृन्तत्** । **खिद** परिघाते; **अखिन्दत्** । **पिश** अवयवे; **अपिंशत्** । मुचादयो वृत्ताः ॥

**इति तुदादौ शविकरणे लङ् ॥**

---

## अथ रुधादौ श्नम्विकरणे लङ् ॥

1. **रुधिर्** आवरणे। इरितो नव स्वरितेतः। श्नम्; निपूर्वः; हल्ङ्यादिलोपः; जश्त्वचर्त्वे; **न्यरुणद् न्यरुणत्**। श्नसोरल्लोपः (VI. 4. 111.) इत्यकारलोपः—**न्यरुन्धाम्, न्यरुन्धन्**। जश्त्वचर्त्वे; दश्च (VIII. 2. 75.) इति वा रुत्वम्; **न्यरुणः न्यरुणत् न्यरुणद्, न्यरुन्धम्, न्यरुन्ध; न्यरुणधम्, न्यरुन्ध्व, न्यरुन्धम**। तङि—**न्यरुन्ध, न्यरुन्धाताम्, न्यरुन्धत**। **भुज** पालनाभ्यवहारयोः; **अभुङ्क्त**। अनवने तु परस्मैपदम्, भुजोऽनवने (I. 3. 66.) इति नियमात्; **अभुनग् अभुनक्**। **युजिर्** योगे; **अयुनक् अयुनग्**। प्रोपाभ्यां युजेरयज्ञपात्रेषु (I. 3. 64.) इति आत्मनेपदम्; **प्रायुङ्क्त, उपायुङ्क्त**। **भिदिर्** विदारणे; **अभिनत् अभिनद्, अभिन्ताम्, अभिन्दन्; अभिनः अभिनत् अभिनद्, अभिन्तम्, अभिन्त**। **छिदिर्** द्वैधीकरणे; **अच्छिनत् अच्छिनद्; अच्छिन्त**। **रिचिर्** विरेचने; **अरिणक् अरिणग्; अरिङ्क्त**। **विचिर्** पृथग्भावे; **अविनक् अविनग्; अविङ्क्त**। **क्षुदिर्** सम्पेषणे; **अक्षुणत् अक्षुणद्; अक्षुन्त**। **उच्छृदिर्** दीप्तिदेवनयोः; **अच्छृणत् अच्छृणद्; अच्छृन्त**। **उतृदिर्** हिंसानादरयोः; **अतृणत् अतृणद्; अतृन्त**। रुधादयस्तृदन्ता इरितः स्वरितेतः॥

2. **विद** विचारणे; **अविन्त**। **शिष्ऌ** विशेषणे; **अशिनट् अशिनड्, अशिंष्टाम्, अशिंषन्**। **पिष्ऌ** सञ्चूर्णने; **अपिनट्**

**अपिनड्**, **अपिंष्टाम्**, इत्यादि। **भञ्जो** आमर्दने; अनिदितामिति नलोपः; **अभनक् अभनग्**; श्नान्नलोपः (VI. 4. 23.) इति नलोपः— **अभङ्क्ताम्**, **अभञ्जन्**। **तृह हिंसि** हिंसायाम्; तृणह इम् (VII. 3. 92.); गुणः; हल्ङ्याब्भ्य इति लोपः; हो ढः इति ढत्वम्; जश्त्वचर्त्वे; **अतृणेट् अतृणेड्**, ढत्वधत्वष्टुत्वढलोपाः—**अतृण्ढाम्**, **अतृम्हन्**। हिंसेः इदित्वान्नुम्; श्नसोरल्लोपः; तिप्यनस्तेः (VIII. 2. 73.) इति दत्वम्; **अहिनत् अहिनद्**, **अहिंस्ताम्**, **अहिंसन्**। सिपि धातो रुर्वा (VIII. 2. 74.) इति रुः दकारो वा; **अहिनः अहिनद् अहिनत्**, इत्यादि॥

इति रुधादौ श्नम्विकरणे लङ्॥

---

अथ तनादौ उविकरणे लङ्॥

1. **तनु** विस्तारे; सम्पूर्वः; **समतनोत्**। **मनु** अवबोधने; **अमनुत**। **डुकृञ्** करणे; सम्पूर्वः; **सम्पर्युपेभ्यः करोतौ भूषणे** VI. 1. 137.)—सम् परि उप इत्येतेभ्यः परस्य भूषणे वर्तमानस्य करोतेः सुडागमो भवति; **संस्करोति**। सुट् कात्पूर्वः (VI. 1. 135.) इति सुट् कात्पूर्वो भवति; कात्पूर्वग्रहणं सुटोऽनवयवत्वज्ञापनार्थम्। तेन संस्कृषीष्ट संस्क्रियते इत्यत्र, ऋतश्च संयोगादेः (VII. 2. 43.), गुणोऽर्तिसंयोगाद्योः (VII. 4. 29.), इति संयोगादिलक्षणौ इड्गुणौ न भवतः। टित्करणं सुट्स्तुस्वञ्जाम् (VIII. 3. 70.) इति विशेषणार्थम्। **अड्भ्यासव्यवायेऽपि** (VI. 1. 136.)—अड्व्यवायेऽप्यभ्यासव्य-

वायेऽपि सम् परि उप इत्येतेभ्यः परस्य भूषणे वर्तमानस्य कृञः सुट् कात् पूर्वो भवति ; **समस्करोत्** । भूषणे इति किम्? उपाकरोत् । सम्पूर्वस्य क्वचिदभूषणेऽपि सुडिष्यते ; **संस्कृतम्** अन्नम् । **अन्वकरोत् पराकरोत्** इत्यत्र, **अनुपराभ्यां कृञः** (I. 3. 79.) इति कर्त्रभिप्रायेऽपि परस्मैपदम् । **अधिनोत् अकृणोत्** इत्यत्र, **धिन्विकृण्व्योर च** (III. 1. 80.) इत्युप्रत्ययः प्रकृतेरकारान्तादेशश्च ॥

**इति तनादौ उविकरणे लङ् ॥**

---

**अथ क्र्यादौ श्नाविकरणे लङ् ॥**

1. **डुक्रीञ्** द्रव्यविनिमये; श्नाप्रत्ययः; **अक्रीणात्** । **ई हल्यघोः** (VI. 4. 113.) इतीत्वम्; **अक्रीणीताम्** । **श्नाभ्यस्तयोरातः** (VI. 4. 112.) इत्याकारलोपः; **अक्रीणन्** । ञित्त्वादात्मनेपदमपि; **अक्रीणीत** । **वृङ्** सम्भक्तौ; **अवृणीत** । **ग्रह** उपादाने; **अगृह्णात्** । **मीञ्** हिंसायाम्; **अमीनीत, अमीनात्** । **हिनुमीना** (VIII. 4. 15.) इति णत्वम्; **प्रामीणात्** । **पूञ्** पवने; **प्वादीनां ह्रस्वः** (VII. 3. 80.) इति ह्रस्वत्वम्; **अपुनीत, अपुनात्** । **लूञ्** छेदने; **अलुनात्, अलुनीत** । **धूञ्** कम्पने; **अधुनात्, अधुनीत** । **कॄञ्** हिंसायाम्; **अकृणात्, अकृणीत** । **पॄ** पालनपूरणयोः; **अपृणात्** । **ज्या** वयोहानौ; **ग्रहिज्येति** (VI. 1. 16.) सम्प्रसारणम्; परपूर्वत्वम्; **हलः** (VI. 4. 2.) इति दीर्घत्वे, **प्वादीनां ह्रस्वः** (VII. 3. 80.) इति

ह्रस्वत्वे कृते, **अजिनात्** । **ज्ञा** अवबोधने; ज्ञाजनोर्जा (VII. 3. 79.) इति जादेशः; मातुः **समजानात्** । अनाध्याने संप्रतिभ्यामिति (I. 3. 46.) तङ्; **समजानीत, प्रत्यजानीत** । विभाषितक्र्यादयः– स्तन्भु–स्तुन्भु–स्कन्भु–स्कुन्भु–स्कुञ्भ्यः श्नुश्च (III. 1. 82.) इति वा श्नाप्रत्ययः; **अस्तभ्नात्** । पक्षे श्नुः; **अस्तभ्नोत्** । अस्तुभ्नात् अस्तुभ्नोत्, अस्कभ्नात् अस्कभ्नोत्, अस्कुभ्नात् अस्कुभ्नोत्, अस्कुनात् अस्कुनोत् ॥

**इति क्र्यादौ श्नाविकरणे लङ् ॥**

---

**अथ चुरादौ णिज्विकरणे लङ् ॥**

1. **चुर** स्तेये; **अचोरयत्, अचोरयत** । **पाल** रक्षणे; **अपालयत्, अपालयत** । **अर्च** पूजायाम्; **आर्चयत्, आर्चयत** । **चिति** स्मृत्याम्; **अचिन्तयत्, अचिन्तयत** । **लक्ष** दर्शनाङ्कनयोः; **अलक्षयत्, अलक्षयत** । **ओलडि** उत्क्षेपणे; **औलण्डयत्** । ओकारस्य इत्त्वपक्षे—**अलण्डयत** । **बाध** संयमने; **अबाधयत्** । **खडि** भेदने; **अखण्डयत्** । **वर्ण** वर्णने; **अवर्णयत्** । **मडि** भूषायां हर्षे च; **अमण्डयत्** । **ज्ञा** अवबोधने; मारणतोषणनिशामनेषु ज्ञा (ग.) इति ज्ञा; ज्ञप मिच्च (ग.) इति मित्त्वम्; **अज्ञपयत्** मृगान्व्याधः । **चल** कम्पने; ज्वलादिः; कम्पने चलिः (ग.) इति अस्य कम्पने चलयतेः मित्त्वम्; **अचलयत्** वृक्षान् वायुः । **कृत** संशब्दने; उपधायाश्च (VII. 1. 101.) इति रपरम् इत्त्वम्;

उपधायां च (VIII. 2. 78.) इति दीर्घः ; **अकीर्तयत्** । **वञ्चु** गतौ ; अहिम् **अवञ्चयत्**—पर्यहरत् इत्यर्थः । गृधिवञ्च्योः प्रलम्भने (I. 3. 69.) इति तङ् ; माणवकम् **अवञ्चयत** । **घट** चेष्टायाम् ; **अघटयत्** ॥

2. **गुपू** रक्षणे ; **अगोपाययत्** । **ली** श्लेषणे; **लीलो-र्नुग्लुकावन्यतरस्यां स्नेहनिपातने** (VII. 3. 39.) इति नुग्लुगावागमौ क्रमात् भवतः ; घृतं **व्यलीनयत्** । विभाषा लीयतेः (VI. 1. 51.) इति आत्वम् ; प्रलम्भनशालीनीकरणयोश्च णौ नित्यमात्वम् (वा.) इति णौ परतः नित्यमात्वं भवति ; पुगागमः ; **व्यलापयत्** घृतम् । **शिष** असर्वोपयोगे ; **अशेषयत्** । विपूर्वोऽतिशये वर्तते ; **व्यशेषयत्** । आ धृषाद्वा (ग.) इति अन्यत्र यथायथं विकरणा भवन्ति । श्नम् ; **अपृणक्** ; पक्षे **अपर्चयत** । श्ना ; **अमीनात्** । श्नुः ; **अघृणोत्** । श्यन् ; **अजीर्यत्** । शपो लुक् ; **अवक्** । **मार्ग** अन्वेषणे ; **अमार्गयत्** । णिजभावपक्षे **मार्गमाणः** इति भवति । **अधर्षयत्** ; पक्षे **अधर्षत्** ॥

3. अथ अदन्ताः । **कथ** वाक्यप्रबन्धे ; **अकथयत्** । **गवेष** मार्गणे ; **अगवेषयत्** । आ गर्वादात्मनेपादिनः । **पद** गतौ ; **अपदयत** । **गृह** गर्हणे ; **अगृहयत** । **मृग** अन्वेषणे ; **अमृगयत** । **कुह** विस्मापने ; **अकुहयत** । **शूर वीर** विक्रान्तौ ; **अशूरयत, अवीरयत** । **स्थूल** परिबृंहणे ; **अस्थूलयत** । **अर्थ** उपयाच्ञायाम् ; **आर्थयत** । **सत्र** सन्तानक्रियायाम् ;

असत्रयत । **गर्व** माने; अगर्वयत । इत्यागर्वीयाः । **सूत्र** वेष्टने; असूत्रयत्, असूत्रयत । **मूत्र** प्रस्रवणे; अमूत्रयत्, अमूत्रयत । **रूक्ष** पारुष्ये; अरूक्षयत्, अरूक्षयत । **पार तीर** कर्मसमाप्तौ; अपारयत्, अपारयत; अतीरयत्, अतीरयत । **सङ्ग्राम** युद्धे; असङ्ग्रामयत्, असङ्ग्रामयत । **अन्ध** दृष्ट्युपघाते; आन्धयत्, आन्धयत । एवं चुरादौ सर्वत्र बोध्यम् ॥

इति चुरादौ लङ् ॥

इति लङ्प्रकरणं समाप्तम् ॥

---

## अथ लोट्प्रकरणम् ॥

### शब्विकरणे लोट् ॥

1. अथैतेभ्यो धातुभ्यो लोट्। **विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्** (III. 3. 161.) इत्यनुवर्तमाने, **लोट् च** (III. 3. 162.)—विध्यादिष्वर्थेषु विद्यमानात् धातोर्लोट् प्रत्ययो भवति। **आशिषि लिङ्लोटौ** (III. 3. 73.)— आशीर्विशिष्टेष्वर्थेषु वर्तमानाद्धातोः लिङ्लोटौ प्रत्ययौ भवतः। **भू** सत्तायाम्। लस्य स्थाने तिप्; शप्; गुणावादेशौ। **एरुः** (III. 4. 86.)—लोडादेशानां परस्मैपदानामिकारस्य उकारादेशो भवति; **भवतु** । **तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्** (VII. 1. 35.)—तु हि इत्येतयोर्लोडादेशयोराशिषि वर्तमानयोः तातङादेशो भवति अन्यतरस्याम्। तातङो ङकारः गुणवृद्धिप्रतिषेधार्थो नान्त्यादेशार्थः; अतस्सर्वादेशस्तातङ् भवति। ङित्वाच्चास्य स्थानिवद्भावात् पित्त्वं प्राप्नोति तन्निवर्तते, **ङिच्च पिन्न भवति**—इति भाष्यात्। तेन ब्रूतादित्यत्र ब्रुव ईट् (VII. 3. 93.) इति ईडागमो न भवति; तथा गुणवृद्धी न भवतः। तथाचोक्तम्—

> तातङि ङित्त्वं संक्रमकृत् स्यादन्त्यविधिश्चेत्तच्च तथा न।
> हेरधिकारे हेरधिकारो लोपविधौ तु ज्ञापकमाह ॥
>
> तातङो ङित्त्वसामर्थ्यान्नायमन्त्यविधिस्स्मृतः।
> न तद्वदनङादीनां तेन तेऽन्त्यविकारजाः ॥

अयमर्थः। ननु जीवताद्भवान्, जीवतात्त्वम्, इत्यादिषु सर्वत्र सर्वादेश एव तातङ् दृश्यते। अतो ङित्करणं किमर्थम् इत्याशङ्क्याह तातङिति। तातङि ङित्त्वं संक्रमकृत् स्यात्—तातङो यत् ङित्करणं तत् सङ्क्रम-

कृत्स्यात्। सङ्क्रमो नाम गुणवृद्धिप्रतिषेधः; गुणवृद्धिप्रतिषेधकृत् स्यादित्यर्थः। यस्माद्गुणवृद्धिप्रतिषेधार्थं ङित्करणं तस्मात् सर्वादेशस्तातङ् भवति। अन्त्यविधिश्चेत् तच्च तथा न इत्यस्य कोऽर्थः? यदि तातङो ङिच्च (I. 1. 53.) इत्यन्त्यविधिः प्रयोजनं, तदा ब्रूतात् मृष्टात् इत्यत्र गुणवृद्धिप्रतिषेधकृन्न स्यात् इत्यर्थः। हेरधिकारे इति—जीव त्वम् इत्यत्र यथा अतो हेः (VI. 4. 105.) इति हेर्लुक् तथा जीवतात त्वम् इत्यत्रापि स्थानिवद्भावेन हित्वात् लुक् कस्मान्न भवति? हुझल्भ्यो हेर्धिः (VI. 4. 101.) इति सूत्रात् हेरित्यधिकारे पुनः अतो हेः (VI. 4. 105.) इति हेरधिकरणं लोपविधौ ज्ञापकमित्याशयेनाह हेरधिकारे इत्यादिना। कथम्? स्थानिवद्भावेन तातङो हित्वमवलम्ब्य अतो हेः इति लुक् न भवति, किन्तु साक्षाद्धेरेव लोपो भवति। इत्युक्तार्थमेव सङ्गृह्य सुखबोधार्थमाह तातङ इति। तातङः तातङादेशविधानस्थले तातङादेशस्य यत् ङित्करणं तत्सामर्थ्यात् तद्बलात् अयं तातङ् अन्त्यविधिः न स्मृतः; आचार्येण गुणवृद्धिप्रतिषेधार्थमेव ङित्करणं कृतमिति भावः। तर्हि तातङिव अनङादीनामपि ङित्करणं किं न स्यादित्याशङ्क्याह न तद्वदिति। यतः कारणात् अनङादीनां ङित्करणं तादृक् न भवति तेन कारणेन ते अनङादयः अन्त्यविकारजाः अन्त्यादेशा इत्यर्थः। ङित्करणसामर्थ्यादिति ज्ञेयम्; **भवतात्**। **लोटो लङ्वत्** (III. 4. 85.)—लोटो लङ्वत् कार्यं भवति। तेन तामादयः सलोपश्च भवतः। अडाटौ कस्मान्न भवतः? **विदो लटो वा** (III. 4. 83.) इत्यतो वाग्रहणमनुवर्तते; सा च व्यवस्थितविभाषा भवति; **भवताम्, भवन्तु**। इह भवन्तु इत्यत्र तातङादेशो न भवति। कुतः? **अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्** (परि. 14.) इति निषेधात्; हेः सन्निधानादेकवचनस्यैव प्रतीतेश्च। **सेर्ह्यपिच्च** (III. 4. 87.)—लोडादेशस्य सेर्हिरादेशो भवति, सः

अपिच्च। स्थानिवद्भावप्राप्तं पित्त्वं प्रतिषिध्यते। **चिणो लुक्** (VI.4. 104.) इति वर्तमाने, **अतो हेः** (VI. 4. 105.)—अकारान्तादङ्गादुत्तरस्य हेर्लुग्भवति; **भव**। तातङि—**भवतात्**। लङ्वत्—**भवतम्, भवत**। **मेर्निः** (III. 4. 89.)—लोडादेशस्य मेः नि इत्यादेशो भवति। **आडुत्तमस्य पिच्च** (III. 4. 92.)—लोट्सम्बन्धिन उत्तमपुरुषस्य आडागमः; सः पिच्च भवति; **भवानि**। **हिन्योरुत्वप्रतिषेधो वक्तव्यः** (वा. III. 4. 86.) इति वा, विधानसामर्थ्याद्वा, एरुः (III. 4. 86.) इति हिन्योरुत्वं न भवति। सलोपः; **भवाव, भवाम**॥

2. **एध** वृद्धौ। एत्वे कृते, **आमेतः** (III.4.90.)—लोट्सम्बन्धिन एकारस्य आमादेशो भवति; **एधताम्, एधेताम्, एधन्ताम्**। **सवाभ्यां वामौ** (III. 4. 91.)—सकारवकाराभ्यामुत्तरस्य लोट्-सम्बन्धिन एकारस्य यथासङ्ख्यं व अम् इत्येतावादेशौ भवतः; **एधस्व, एधेथाम्, एधध्वम्**। **एत ऐ** (III. 4. 93.)—लोट्सम्बन्धिन उत्तमपुरुषैकारस्य ऐकारादेशो भवति। आमोऽपवादः। आडुत्तमस्य पिच्च (III. 4. 92.); आटश्च (VI. 1. 90.) इति वृद्धिः; पश्चाद्वृद्धिरेचीति वृद्धिः—**एधै, एधावहै, एधामहै**। एवमेव—पचतु पचतात्, पचताम्, पचन्तु; पचताम्, पचेताम्, पचन्ताम्; नन्दतु नन्दतात्, नन्दताम्, नन्दन्तु; ध्वंसताम्, ध्वंसेताम्, ध्वंसन्ताम्; व्ययतु व्ययतात्, व्ययताम्, व्ययन्तु; व्ययताम्, व्ययेताम्, व्ययन्ताम्; जयतु जयतात्, जयताम्, जयन्तु; विजयताम्, विजयेताम्, विजयन्ताम्; पराजयताम्, पराजयेताम्, पराजयन्ताम्; श्रयतु श्रयताम्, श्रयताम्, श्रयन्तु; नयतु नयतात्, नयताम्, नयन्तु—इत्यादीनि भवन्ति। **सम्माननोत्सञ्जनाचार्य-**

**करणज्ञानभृतिविगणनव्ययेषु नियः** ( I. 3. 36. )—अकर्त्रभिप्रायार्थोऽयमारम्भः; सम्माननादिषु विशेषणेषु सत्सु नयतेर्धातोरात्मनेपदं भवति । सम्माननं पूजनम्; **नयतां चार्वी लोकायते**—चार्वी बुद्धिः, तत्सम्बन्धादाचार्योऽपि चार्वी; सः लोकायते चार्वाकशास्त्रे पदार्थान् नयतां गमयतु; बह्वीभिरुपपत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रतिपादयतु; ते च युक्तिभिः स्थाप्यमानाः पूजिताः स्युः । उत्सञ्जनमुत्क्षेपणम्; **माणवकमुदानयताम्**—उत्क्षिपत्वित्यर्थः । आचार्यकरणे; **माणवकमुपनयताम्**—आत्मानमाचार्यीकुर्वन् माणवकमात्मसमीपं प्रापयत्वित्यर्थः। ज्ञानं प्रमेयनिश्चयः; **नयतां चार्वी लोकायते**—तत्र प्रमेयं निश्चिनोतु इत्यर्थः । भृतिर्वेतनम्; **कर्मकरान् उपनयताम्**—भृतिदानेनात्मसमीपं प्रापयत्वित्यर्थः । विगणनम् ऋणादेर्निर्यातनम्; आदिशब्देन करशुल्कदण्डादीनां ग्रहणम्; निर्यातनं प्रक्षेपणम्; **मद्राः करं नयन्ताम्**—निर्यातयन्तामित्यर्थः । व्ययो धर्मादिषु विनियोगः; **शतं विनयन्ताम्**—धर्माद्यर्थं विनियुञ्जतामित्यर्थः । **कर्तृस्थे चाशरीरे कर्मणि** (I. 3. 37.)—नयतेः कर्ता देवदत्तादिर्लकारवाच्यः; कर्तृस्थे कर्मण्यशरीरे सति नयतेरात्मनेपदं भवति । शरीरं प्राणिकायः; तदेकदेशोऽपि शरीरम्; **मन्युं विनयताम्**—शमयत्वित्यर्थः । कर्तृस्थे इति किम्? देवदत्तो यज्ञदत्तस्य क्रोधं विनयतु । अशरीरे इति किम्? गडुं विनयतु । कर्मणीति किम्? बुद्ध्या विनयतु ॥

3. **रमु** क्रीडायाम्; **रमताम्** । **व्याङ्परिभ्यो रमः** (I. 3. 83.) — रमतेरनुदात्तत्वादात्मनेपदे प्राप्ते अनेन परस्मैपदं विधीयते; वि आङ् परि इत्येवंपूर्वात् रमतेर्धातोः परस्मैपदं भवति ; **विरमतु**,

**आरमतु, परिरमतु । उपाच्च** (I. 3. 84.)—उपपूर्वाद्रमतेर्धातोः परस्मैपदं भवति ; **उपरमतु** देवदत्तो यज्ञदत्तम्, **उपरमयतु** इति यावत् । अन्तर्भावितण्यर्थोऽत्र रमिः सकर्मको भवति । पृथग्योगकरणमुत्तरार्थम्; अकर्मकाद्विभाषां वक्ष्यति सा उपपूर्वादेव यथा स्यादिति । **विभाषाऽकर्मकात्** (I. 3. 85.)—उपादिति वर्तते; उपपूर्वाद्रमतेरकर्मकात् विभाषा परस्मैपदं भवति । यावद्भुक्तम् **उपरमतु** अथवा **उपरमताम्**—निवर्ततामित्यर्थः । **आशिषि नाथ उपसङ्ख्यानम्** (वा. I. 3. 21.) इति आशिषि गम्यमानायां नाथतेरात्मनेपदं भवति । षष्ठीविधानप्रकरणस्थेन आशिषि नाथः (II. 3. 55.) इत्यनेन षष्ठी; **सर्पिषो नाथताम्, मधुनो नाथताम्**—मधु सर्पिश्च आशास्तामित्यर्थः । आशिषीति किम्? माणवकम् **उपनाथतु** अङ्ग पुत्रक अधीष्वेति—याचतु इत्यर्थः । **क्रमु** पादविक्षेपे । **वृत्तिसर्गतायनेषु क्रमः** (I. 3. 38.)—शेषात्कर्तरि परस्मैपदे प्राप्ते वृत्त्यादिष्वर्थेषु क्रमतेः धातोरात्मनेपदं भवति । वृत्तिरप्रतिबन्धः, सर्ग उत्साहः, तायनं स्फीतता । वृत्तौ—**ऋक्षु अस्य क्रमताम्** बुद्धिः—न प्रतिहन्यतां बुद्धिः इत्यर्थः । सर्गे—**व्याकरणाध्ययनाय क्रमताम्** बुद्धिः—उत्साहयतामित्यर्थः । तायने—**नास्मिन् शास्त्राणि क्रमन्ताम्**—न स्फीतानि भवन्तु इत्यर्थः । **उपपराभ्याम्** (I. 3. 39.)—वृत्तिसर्गतायनेष्विति वर्तते ; उपपरापूर्वात् क्रमतेर्धातोः वृत्तिसर्गतायनेषु वर्तमानात् आत्मनेपदं भवति ; **उपक्रमताम्, पराक्रमताम्** । वृत्त्यादिभ्योऽन्यत्र—**उपक्रामतु, पराक्रामतु** । उपपराभ्यामिति नियमार्थत्वात् वृत्त्यादिष्वर्थेषु **संक्रामतु** इत्येव । **वेः पादविहरणे** (I. 3. 41.)—विपूर्वात् क्रमतेर्धातोः पादविहरणे वर्तमानादात्मनेपदं भवति । विहरणं

विक्षेपः; सुष्टु **विक्रमताम्**। अश्वादीनां गतिविशेषो विहरणमित्युच्यते। अनुपसर्गाद्वा (I. 3. 43.) इति—**क्रमताम्, क्रामतु**॥

4. **ष्ठा** गतिनिवृत्तौ; **तिष्ठतु**। **समवप्रविभ्यः स्थः** (I. 3. 22.)—सम् अव प्र वि इत्येवंपूर्वात्तिष्ठतेरात्मनेपदं भवति; **सन्तिष्ठताम्, अवतिष्ठताम्, प्रतिष्ठताम्, वितिष्ठताम्**। **आङः स्थः प्रतिज्ञाने** (वा.) इति—आपिशलिः अस्तेः सकारम् **आतिष्ठताम्**, आगमौ गुणवृद्धी **आतिष्ठेताम्**। **प्रकाशनस्थेयाख्ययोश्च** (I. 3. 23.)—स्वाभिप्रायकथनं प्रकाशनम्, स्थेयस्याख्या स्थेयाख्या; तिष्ठन्त्यस्मिन्निति स्थेयः, विवादपद-निर्णेता लोके स्थेय इति रूढिः; तस्य प्रतिपत्त्यर्थमाख्याग्रहणं कृतम्; प्रकाशने स्थेयाख्यायां च तिष्ठतेरात्मनेपदं भवति। प्रकाशने तावत्—**तिष्ठतां कन्या छात्रेभ्यः**—स्वाभिप्रायप्रकटनं करोत्वित्यर्थः। स्थेयाख्यायाम्—**मयि तिष्ठताम्**—सन्दिग्धवस्तुनि निर्णेतृत्वेनाभिमते मयि निर्णयङ्करोत्वित्यर्थः। **उदोऽनूर्ध्वकर्मणि** (I. 3. 24.)—उत्पूर्वात्तिष्ठतेरनूर्ध्वकर्मणि वर्तमाना-दात्मनेपदं भवति। कर्मशब्दः क्रियावाची; अनूर्ध्वताविशिष्टक्रियावचनात् तिष्ठतेरात्मनेपदम्; **कुटुम्बायोत्तिष्ठताम्**—तदर्थं यततामित्यर्थः। **उद ईहायामिति वक्तव्यम्** (वा.); इति इह मा भूत्—**शतमुत्तिष्ठतु** अस्मा-द्ग्रामात्—शतमुत्पाद्यतामित्यर्थः। अनूर्ध्वकर्मणीति किम्? आसनादुत्तिष्ठतु। **उपान्मन्त्रकरणे** (I. 3. 25.)—मन्त्रः करणं यस्य धात्वर्थस्य स धा-त्वर्थो मन्त्रकरणः; उपपूर्वात्तिष्ठतेर्मन्त्रकरणे वर्तमानादात्मनेपदं भवति; आग्नेय्या **गार्हपत्यमुपतिष्ठताम्**। मन्त्रकरणे इति किम्? भर्तारमुप-तिष्ठतु यौवनेन। **उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वक्तव्यम्** (वा.); देवपूजायाम्—**आदित्यम् उपतिष्ठताम्**; सङ्गति-

करणे–**पथिकानुपतिष्ठताम्**; मित्रकरणे–**महामात्रानुपतिष्ठताम्**। सङ्गतिकरणमित्रकरणयोः को विशेषः? सङ्गतिकरणमुपश्लेषः; तद्यथा— **यमुना गङ्गामुपतिष्ठताम्**। मित्रकरणं विनापि उपश्लेषणं मैत्रीसम्बन्धः। पथि—अयं पन्थाः **स्रुघ्नमुपतिष्ठताम्**। **वा लिप्सायामिति वक्तव्यम्** (वा.)—इति **भिक्षुको ब्राह्मणकुलमुपतिष्ठताम् उपतिष्ठतु** वा। **अकर्मकाच्च** (I. 3. 26.)—उपादिति वर्तते; उपपूर्वात्तिष्ठतेरकर्मकक्रियावचनादात्मनेपदं भवति; **यावद्भुक्तमुपतिष्ठताम्**। अत्र भुक्तम् इति भावे क्तः; यावच्छब्दो निपातोऽव्ययम्; तस्य यथार्थे वीप्सायाम् अव्ययीभावः; सप्तम्यन्तश्चैतत्; भोजने भोजने सन्निधत्तामित्यर्थः। अकर्मकादिति किम्? राजानमुपतिष्ठतु॥

5. **यम** उपरमे; आङो यमहनः (I. 3. 28.) इति तङ्; **आयच्छताम्**। अकर्मकादित्येव; **आयंच्छतु** कूपाद्रज्जुम्। **स्वाङ्गकर्मकाच्चेति वक्तव्यम्** (वा.) इति—**आयच्छतां पाणिम्**। **गम्लृ**; अकर्मकाच्चेति वर्तते; समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः (I. 3. 29.) इति तङ्; **सङ्गच्छताम्**, समृच्छताम्, संपृच्छताम्, संस्वरताम्, इत्यादि। **उदश्चरस्सकर्मकात्** (I. 3. 53.)—शेषात्कर्तरि परस्मैपदे प्राप्ते उत्पूर्वाच्चरतेस्सकर्मकादात्मनेपदम्; **गेहमुच्चरताम्**, उत्क्रम्य गच्छत्वित्यर्थः। सकर्मकादिति किम्? बाष्पमुच्चरतु। **समस्तृतीयायुक्तात्** (I. 3. 54.)—सम्पूर्वाच्चरतेः तृतीयायुक्तादात्मनेपदं भवति। तृतीयेति तृतीयाविभक्तिर्गृह्यते; तया चरतेरर्थद्वारा योगः; **अश्वेन सञ्चरताम्**। तृतीयायुक्तादिति किम्? उभौ लोकौ सञ्चरत्विमं चामुं च देवलः। यद्यप्यत्र तदर्थयोगस्सम्भवति तथापि तृतीया न श्रूयते इति

भवति प्रत्युदाहरणम् । **दाणश्च सा चेच्चतुर्थ्यर्थे** (I. 3. 55.)—दाण् दाने; परस्मैपदी ; ततस्तृतीयायुक्तात् सम्पूर्वादात्मनेपदं भवति सा चेत्तृतीया चतुर्थ्यर्थे भवति । कथं तृतीया चतुर्थ्यर्थे स्यात्? **अशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवतीति वक्तव्यम्** (वा.); इति **दास्या सम्प्रयच्छताम्**—कामुकस्सन् दास्यै पणशतं ददात्वित्यर्थः । चतुर्थ्यर्थ इति किम्? पाणिना सम्प्रयच्छतु । समः प्रशब्देन व्यवधाने कथमात्मनेपदम्? सम इति शेषलक्षणा षष्ठी न पञ्चमी । अशिष्टव्यवहार इति किम्? मात्रे सम्प्रयच्छतु । **उपाद्यमः स्वकरणे** (I. 3. 56.)—शेषात्कर्तरि परस्मैपदे प्राप्ते उपपूर्वाद्यमः स्वकरणेऽर्थे विद्यमानादात्मनेपदं भवति । पाणिग्रहणविशिष्टमिह स्वकरणं गृह्यते न स्वकरणमात्रम्; **कन्यामुपयच्छताम्** । स्वकरण इति किम्? देवदत्तो यज्ञदत्तस्य भार्यामुपयच्छतु । **भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः** (I. 3. 74.)—शेषात्कर्तरि परस्मैपदे प्राप्ते भासनादिष्वर्थेषु विशेषणेषु सत्सु वदतेर्धातोरात्मनेपदं भवति । भासनं दीप्तिः ; **वदतां चार्वी लोकायते**—भासमानो दीप्यमानस्तत्र पदार्थान् व्यक्तीकरोत्वित्यर्थः । उपसम्भाषा उपसान्त्वनम्; **कर्मकरानुपवदताम्**—उपसान्त्वयत्वित्यर्थः । ज्ञानं सम्यगवबोधः ; **वदतां चार्वी लोकायते**—जानातु वदितुमित्यर्थः । यत्न उत्साहः ; **गेहे वदताम्**—तद्विषयमुत्साहमाविष्करोत्वित्यर्थः। विमतिर्नानामतिः; **क्षेत्रे विवदताम्**—विमतिपतितो विचित्रं भाषतामित्यर्थः । उपमन्त्रणं रहस्युपच्छन्दनम्; **वृषळभार्यामुपवदताम्**—रहस्युपच्छन्दयत्वित्यर्थः । **व्यक्तवाचां समुच्चारणे** (I. 3. 48.)—वद इति वर्तते; व्यक्ता वाचो येषान्ते व्यक्तवाचः; तेषां समुच्चारणं सहोच्चारणम्; तत्र वर्तमानाद्वदतेरात्मनेपदम् । ननु च वद व्यक्तायां वाचीति पठ्यते ; तत्र किं व्यक्तवाचामिति

विशेषणेन ? प्रसिद्ध्युपसङ्ग्रहार्थमिदं वचनम्। व्यक्तवाच इति हि मनुष्याः प्रसिद्धाः, तेषां समुच्चारणे—यथा **संप्रवदन्तां ब्राह्मणाः** । व्यक्तवाचामिति किम्? वरतनु सम्प्रवदन्ति कुक्कुटाः । समुच्चारण इति किम्? ब्राह्मणो वदतु । द्रवतु, स्रवतु, स्मरतु; ग्लायतु, म्लायतु; ह्वयतु, उपह्वयताम्, विह्वयताम्, आह्वयताम्; मेहतु; क्रीडतु, अनुक्रीडताम्, परिक्रीडताम्, आक्रीडताम्, संक्रीडताम्; विद्योतताम्, रोचताम्; उपगूहतु, उपगूहताम्, गुञ्जतु, कुञ्चतु, कूजतु, वर्तताम्, वर्धताम्; लोकताम्, आलोकताम्; ढौकताम्, जृम्भताम्, जम्भताम्, ष्ठीवतु, क्रामतु, आचामतु, गच्छतु, पिबतु, जिघ्रतु, धमतु, तिष्ठतु, मनतु, यच्छतु, पश्यतु, ऋच्छतु, धावतु, शीयताम्, सीदतु, दशतु; सजतु, परिष्वजताम्; यजतु, गोपायतु, धूपायतु, ऋतीयताम्, कामयताम्। इत्यादि ॥

**इति भ्वादौ शब्विकरणे लोट्** ॥

---

## अथादादौ लुग्विकरणे लोट् ॥

**अद्** भक्षणे; **अत्तु अत्तात्, अत्ताम्, अदन्तु । हुझल्भ्यो हेर्धिः** (VI. 4. 101.)—हु इत्येतस्मात् झलन्ताच्चोत्तरस्य हेः धिरादेशो भवति; **अद्धि । अत्तात्, अत्तम्, अत्त; अदानि, अदाव, अदाम । शीङ्** स्वप्ने; शीङस्सार्वधातुके गुणः (VII. 4. 21.) इति गुणः; **शेताम्, शयाताम्, शेरताम्; शेष्व, शयाथाम्, शेध्वम्; शयै, शयावहै, शयामहै । ब्रूञ्** व्यक्तायां वाचि; पित्सु हलादौ ब्रुव ईट् (VII. 3. 93.) इति ईडागमः; **ब्रवीतु**

**ब्रूतात्**, **ब्रूताम्**, **ब्रुवन्तु**; **ब्रूताम्**, **ब्रुवाताम्**, **ब्रुवताम्** । **हन** हिंसागत्योः; **हन्तु** । अनुदात्तेत्यादिना (VI. 4. 37.) अनुनासिकलोपः—**हतात्**; **हताम्**, उपधालोपो घत्वं च—**घ्नन्तु** । हन्तेर्जः (VI. 4. 36.)—हन्तेर्धातोः हकारस्य ज इत्ययमादेशो भवति हौ परतः; **जहि** । **हतात्**, **हतम्**, **हत**; **हनानि**, **हनाव**, **हनाम** । **आहताम्**, **आघ्नाताम्**, **आघ्नताम्**; **आहस्व**, **आघ्नाथाम्**, **आहध्वम्**; **आहनै**, **आहनावहै**, **आहनामहै** । **द्विष** अप्रीतौ; पित्सु गुणः; **द्वेष्टु** । हुझल्भ्यो हेर्धिः (VI. 4. 101.) इति धिरादेशः; ष्टुत्वजश्त्वे; **द्विड्ढि** । पुगन्तेत्यादिना (VII. 3. 86.) गुणः; णत्वम्; **द्वेषाणि**, **द्वेषाव**, **द्वेषाम** । **द्विष्टाम्**, **द्विषाताम्**, **द्विषताम्**; **द्विक्ष्व**, **द्विषाथाम्**, **द्विड्ढ्वम्**; **द्वेषै**, **द्वेषावहै**, **द्वेषामहै** । **दुह** प्रपूरणे; दोग्धु दुग्धात्, दुग्धाम्, दुहन्तु; दुग्धि दुग्धात्, दुग्धम्, दुग्ध; दोहानि, दोहाव, दोहाम । दुग्धाम्, दुहाताम्, दुहताम्; धुक्ष्व, इत्यादि । **दिह** उपचये; देग्धु दिग्धात्; दिग्धि; देहानि; दिग्धाम्; प्रणिदेग्धु । लेढु लीढात्, लीढाम्, लिहन्तु; लीढि लीढात्, लीढम्, लीढ; लेहानि, लेहाव, लेहाम । लीढाम्; लिक्ष्व; लीढ्वम्; लेहै । आचष्टाम्, आचक्षाताम्, आचक्षताम्; आचक्ष्व, आचक्षाथाम्, आचड्ढ्वम्; आचक्षै, आचक्षावहै, आचक्षामहै । **ईड** स्तुतौ; ईट्टाम्, ईडाताम्, ईडताम्; ईडिष्व, ईडाथाम्, ईडिध्वम्; ईडै, ईडावहै, ईडामहै । **ईश** ऐश्वर्ये; ईष्टाम्, ईशाताम्, ईशताम्; ईशिष्व, ईशाथाम्—ईशेरपि ध्वे इडागममिच्छन्ति विकल्पेन—इति ईशिध्वम्—ईड्ढ्वम्; ईशै, ईशावहै, ईशामहै । **आस** उपवेशने; आस्ताम्, आसाताम्,

आसताम्; आस्व, आसाथाम्, आध्वम्; आसै, आसावहै, आसामहै। **णिसि** चुम्बने; निंस्ताम्, निंसाताम्, निंसताम्; प्रणिंस्ताम्, प्रनिंस्ताम्। **द्यु** अभिगमने; द्यौतु द्युतात्, द्युताम्, द्युवन्तु; द्युहि द्युतात्, द्युतम्, द्युत; अजादित्वाद्वृद्ध्यभावः, गुणावादेशौ—द्यवानि, द्यवाव, द्यवाम। **यु** मिश्रणामिश्रणयोः; यौतु युतात्; युहि; यवानि। **रु** शब्दे; तुरुस्तुशम्यमः सार्वधातुके (VII. 3. 95.) इति वा ईडागमः—रवीतु; पक्षे—रौतु; रुवीहि रुहि; रवाणि। अभिष्टवीतु अभिष्टौतु; अभिष्टुवीहि अभिष्टुहि; अभिष्टवानि। परिष्टवीतु परिष्टौतु; परिष्टुवीहि परिष्टुहि; परिष्टवानि। नौतु; नुहि; नवानि। ऊर्णोतेर्विभाषा इति पित्सु वा वृद्धिः; प्रोर्णौतु प्रोर्णोतु; प्रोर्णुहि; प्रोर्णवानि। **इण्** गतौ; एतु इतात्, इताम्, यन्तु; इहि इतात्, इतम्, इत; अयानि। **इङ्** अध्ययने; अधीताम्; अधीष्व; अध्ययै। **इक्** स्मरणे; अध्येतु अधीतात्, अधीताम्, अधीयन्तु; अधीहि; अध्ययानि। **द्रा** कुत्सायां गतौ; प्रणिद्रातु; प्रणिद्राहि; प्रणिद्राणि। **विद्** ज्ञाने; वेत्तु वित्तात्, वित्ताम्, विदन्तु; विद्धि; वेदानि। संवित्ताम्, संविदाताम्, संविद्रताम् संविदताम्; संवित्स्व; संवेदै। अस्य रूपान्तरमपि पक्षे भवति। **विदांकुर्वन्त्वित्यन्यतरस्याम्** (III. 1. 41.)—वेत्तेर्गुणाभावः; लोटि आम्; लोटो लुक्; लोडन्तकरोत्यनुप्रयोगश्च; एते वा निपात्यन्ते। पुरुषवचने अविवक्षिते; विदांकरोतु विदांकुरुतात्, विदांकुरुताम्, विदांकुर्वन्तु; विदांकुरु; विदांकरवाणि। **अस** भुवि; अस्तु स्तात्, स्ताम्, सन्तु। **घ्वसोरेद्धावभ्यासलोपश्च** (VI. 4. 119.)—घुसंज्ञकानामङ्गानाम् अस्तेश्च हौ परतः एकारादेशो भवति अभ्यासलोपश्च। श्नसोरल्लोपः (VI. 4. 111.) इति अलोपः।

असिद्धवदत्राभात् (VI. 4. 22.) इत्यकारलोपस्यासिद्धौ, हुझल्भ्यो हेर्धिः (VI. 4. 101.) इति धिरादेशः; **एधि** । स्तात्, स्तम्, स्त; असानि, असाव, असाम । **मृजूष्** शुद्धौ; मार्ष्टु मृष्टात्, मृष्टाम्, मृजन्तु मार्जन्तु । षत्वम्; धिरादेशः; ष्टुत्वजश्त्वे; मृड्ढि मृष्टात्, मृष्टम्, मृष्ट; मार्जानि । **रुदिर्** अश्रुविमोचने; रोदितु रुदितात्, रुदिताम्, रुदन्तु; रुदिहि; रोदानि । स्वपितु; स्वपिहि; स्वपानि । श्वसितु; श्वसिहि; श्वसानि । प्राणितु; प्राणिहि; प्राणानि । जक्षितु; जक्षिहि; जक्षाणि । प्रथमपुरुषबहुवचने तु अदभ्यस्तात् (VII. 4. 1.) इति अदादेशः—जक्षतु । जागर्तु; जाग्रतु; जागृहि; जागराणि । दरिद्रातु दरिद्रितात्; दरिद्रतु; दरिद्रिहि; दरिद्राणि । शास्तु शिष्टात्; शासतु। **शा हौ** (VI. 4. 35) उपधाया इति निवृत्तम्; शासो हौ परतः शा इत्ययमादेशो भवति । तस्यासिद्धौ हुझल्भ्यो हेर्धिः (VI. 4. 101.) इति धिरादेशः; **शाधि** । शिष्टात्, शिष्टम्, शिष्ट; शासानि, शासाव, शासाम । दीधीताम्, दीध्याताम्, दीध्यताम्; दीधीष्व; दीध्यै । वेवीताम्, वेव्याताम्, वेव्यताम् । चकास्तु चकास्तात्, चकास्ताम्, चकासतु; धि च (VIII. 2. 25.) इति सकारलोपः सिच एवेति पक्षे जश्त्वम्—चकाद्धि; चकासानि । वष्टु उष्टात्; उड्ढि; वशानि । एवमन्येषामपि लोटि रूपं सप्रपञ्चमुन्नेयम् ॥

## इत्यदादौ लुग्विकरणे लोट् ॥

---

## अथ जुहोत्यादौ श्लुविकरणे लोट् ॥

**हु** दानादनयोः; जुहोतु जुहुतात्, जुहुताम्, जुह्वतु। हुझल्भ्यो हेर्धिः (VI. 4. 101.) इति धिभावः—**जुहुधि**; जुहवानि। **ओहाङ्** गतौ; जिहीताम्, जिहाताम्, जिहताम्; जिहीष्व, जिहाथाम्, जिहीध्वम्; जिहै, जिहावहै, जिहामहै। **डुधाञ्** धारणपोषणयोः; दधातु धत्तात्, धत्ताम्, दधतु। घ्वसोरेद्धावभ्यासलोपश्च (VI. 4. 119.) इत्येत्वाभ्यासलोपौ—**धेहि**; धत्तात्, धत्तम्, धत्त; दधानि। **ञिभी** भये; बिभेतु। भियोऽन्यतरस्याम् (VI. 4. 115.) इति पक्षे इकारादेशः—बिभितात् बिभीतात्; बिभीहि बिभिहि; बिभयानि। **ह्री** लज्जायाम्; जिह्रेतु जिह्रीतात्, जिह्रीताम्, जिह्रियतु; जिह्रीहि; जिह्रयाणि। **डुदाञ्** दाने; ददातु; देहि। **णिजिर्** शौचपोषणयोः; णिजान्त्रयाणां गुणः श्लौ (VII. 4. 75.) इत्यभ्यासस्य गुणः—नेनेक्तु; नेनिग्धि। नाभ्यस्तस्याचि पिति सार्वधातुके (VII. 3. 87.) इति गुणाभावे—नेनिजानि; नेनिक्ताम्। **विजिर्** पृथग्भावे; वेवेक्तु; वेविग्धि; वेविजानि। **विष्लृ** व्याप्तौ; वेवेष्टु; वेविड्ढि; वेविषाणि। **डुभृञ्** धारणपोषणयोः; बिभर्तु; बिभृहि; बिभराणि। **माङ्** माने; मिमीताम्, मिमाताम्, मिमताम्; मिमीष्व; मिमै। **ओहाक्** त्यागे; जहातु। जहातेश्च (VI. 4. 116.) इति विकल्पेन इकारः—**जहितात्**; पक्षे ई हल्यघोः (VI. 4. 113.) इति ईकारः—**जहीतात्**; जहिताम् जहीताम्, जहतु। **आ च हौ** (VI. 4. 117.)—जहातेराकारश्चान्तादेशः इकारश्चान्यतरस्यां हौ परतः; **जहाहि जहिहि जहीहि**। जहीतात् जहि-

तात्; जहानि । **ऋ** गतौ; अर्तिपिपर्त्योश्च (VII. 4. 77.) इत्यभ्यासस्य इत्वम्; अभ्यासस्यासवर्णे (VI. 4. 78.) इतीयङ्—**इयर्तु इयृतात्**, इयृताम्, इयृतु; इयृहि इयृतात्, इयृतम्, इयृत; इयराणि, इयराव, इयराम । **पॄ** पालनपूरणयोः; पिपर्तु—उदोष्ठ्यपूर्वस्य (VII. 1. 102.) इत्युत्वम्, हलि चेति दीर्घश्च—पिपूर्तात्, पिपूर्ताम्, पिपुरतु; पिपूर्हि; पिपराणि । **सृ** गतौ; ससर्तु ससृतात्, ससृताम्, ससृतु; ससृहि; ससराणि ॥

## इति जुहोत्यादौ श्लुविकरणे लोट् ॥

---

## अथ दिवादौ श्यन्विकरणे लोट् ॥

**दिवु** क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु; श्यन्; हलि च (VII. 2. 77.) इति दीर्घः—**दीव्यतु दीव्यतात्, दीव्यताम्, दीव्यन्तु; दीव्य दीव्यतात्, दीव्यतम्, दीव्यत; दीव्यानि, दीव्याव, दीव्याम** । **षूङ्** प्राणिप्रसवे; **प्रसूयताम्, प्रसूयेताम्, प्रसूयन्ताम्; प्रसूयस्व, प्रसूयेथाम्, प्रसूयध्वम्; प्रसूयै, प्रसूयावहै, प्रसूयामहै** । **णह** बन्धने; **परिणह्यतु; परिणह्यताम्** । सीव्यतु सीव्यतात; परिषीव्यतु, निषीव्यतु, विषीव्यतु; भ्राश्यताम्, भ्राशताम्; भ्लाश्यताम्, भ्लाशताम्; भ्राम्यतु, भ्रमतु; क्लाम्यतु, क्लामतु; क्राम्यतु, क्रामतु; त्रस्यतु, त्रसतु; त्रुट्यतु, त्रुटतु; लष्यतु, लषतु; अवद्यतु; जायताम्; वृत्यताम्, वर्तताम्; मृष्यतु, मृष्यताम्, परिमृष्यतु; जीर्यतु; शुच्यतु, शुच्यताम्; रज्यतु,

रज्यताम् ; राध्यतु, राध्यताम्, राध्नोतु ; शक्यतु, शक्नोतु ; शाम्यतु ; ताम्यतु ; दास्यतु ; श्राम्यतु ; क्षाम्यतु ; माद्यतु ; अस्यतु, उपन्यस्यतु, उपन्यस्यताम् ; यस्यतु, यसतु, आयस्यतु, संयस्यतु ; मेद्यतु । इत्यादि ॥

इति दिवादौ श्यन्विकरणे लोट् ॥

---

अथ स्वादौ श्नुविकरणे लोट् ॥

**षुञ्** अभिषवे; अभिपूर्वः ; उपसर्गादित्यादिना मूर्धन्यादेशः ; **अभिषुणोतु अभिषुणुतात्, अभिषुणुताम्, अभिषुण्वन्तु ; अतो हेः** (VI. 4. 105.) इत्यनुवर्तमाने, **उतश्च प्रत्ययादसंयोगपूर्वात्** (VI. 4. 106.)—योऽयमुकारेऽसंयोगपूर्वः तदन्तात् प्रत्ययादुत्तरस्य हेर्लुग्भवति; **अभिषुणु । अभिषुणुतात्, अभिषुणुतम्, अभिषुणुत; अभिषुणवानि, अभिषुणवाव, अभिषुणवाम। अभिषुणुताम्, अभिषुण्वाताम्, अभिषुण्वताम्; अभिषुणुष्व, अभिषुण्वाथाम्, अभिषुणुध्वम्; अभिषुणवै, अभिषुणवावहै, अभिषुणवामहै** । व्यश्नुताम् । चिनोतिः निपूर्वः ; श्चुत्वम् ; निश्चिनोतु ; निश्चिनुताम् । हिनोतु, प्रहिणोतु ; शक्नोतु ; श्रृणोतु, संश्रृणुताम् ; दभ्नोतु ; राध्नोतु । इत्यादि ॥

इति स्वादौ श्नुविकरणे लोट् ॥

---

अथ तुदादौ शविकरणे लोट् ॥

**तुद** व्यथने; शः; ङित्त्वात् गुणाभावः; **तुदतु तुदतात्, तुदताम्, तुदन्तु; तुद तुदतात्, तुदतम्, तुदत; तुदानि,**

**तुदाव, तुदाम । तुदताम्, तुदेताम्, तुदन्ताम्; तुदस्व, तुदेथाम्, तुदध्वम्; तुदै, तुदावहै, तुदामहै** । भृज्जतु; भृज्जताम् । वृश्चतु । विचतु । उञ्छतु । तृफतु तृम्फतु । दृफतु दृम्फतु । गुफतु गुम्फतु । उभतु उम्भतु । शुभतु शुम्भतु । इच्छतु । रिङादेशः; म्रियताम् । म्रियताम् । अभिषुवतु । गिरतु गिलतु; अवगिरताम् अवगिलताम्; सहस्रं सङ्गिरन्ताम् सङ्गिलन्ताम् । पृच्छतु; पृच्छताम् । मज्जतु । विशतु; निविशताम् । मुञ्चतु । विलुम्पतु । विन्दतु । लिम्पतु । सिञ्चतु । निकृन्ततु । खिन्दतु । पिंशतु ॥

**इति तुदादौ शविकरणे लोट् ॥**

---

## अथ रुधादौ श्नम्विकरणे लोट् ॥

**रुधिर्** आवरणे; श्नम्; झषस्तथोर्धोऽधः (VIII. 2. 40.) इति धत्वम्; णत्वम्; ङिति—श्नसोरल्लोपः (VI. 4. 111.) इत्यकारलोपः; **रुणद्धु रुन्धात्, रुन्धाम्, रुन्धन्तु**; हेर्धित्वम्—**रुन्धि रुन्धात्, रुन्धम्, रुन्ध; रुणधानि, रुणधाव, रुणधाम** । ताङि—**रुन्धाम्, रुन्धाताम्, रुन्धताम्; रुन्त्स्व, रुन्धाथाम्, रुन्ध्वम्; रुणधै, रुणधावहै, रुणधामहै** । **भुज** पालनाभ्यवहारयोः । अनवने आत्मनेपदम् । अवने तु परस्मैपदम्; **ओदनं भुङ्क्ताम्, महीं भुनक्तु** । युनक्तु, युङ्ग्धि, युनजानि; प्रयुङ्क्ताम्; उपयुङ्क्ताम् । भिनत्तु; भिन्त्ताम् । छिनत्तु; छिन्त्ताम् । रिणक्तु; रिङ्क्ताम् । विनक्तु; विङ्क्ताम् । क्षुणत्तु; क्षुन्त्ताम् । छृणत्तु; छृन्त्ताम् । तृणत्तु; तृन्त्ताम् । विशिनष्टु विशिंष्टात्,

विशिण्ढि, विशिनषाणि। पिनष्टु पिंष्टात्, पिण्ढि, पिनषाणि। भञ्जेः श्नम्; श्नान्नलोपः; चोः कुः; भनक्तु, भङ्ग्धि, भनजानि। तृहः तृणह इम् (VII. 3. 92.) इति इमागमः; गुणः; ढत्वधत्वष्टुत्वढलोपाः; तृणेढु तृण्ढात्, तृण्ढि, तृणहानि। हिसि—इदित्वान्नुम्; श्नान्नलोपः; हिनस्तु हिंस्तात्, हिन्धि, हिनसानि॥

**इति रुधादौ श्नम्विकरणे लोट्॥**

---

**अथ तनादौ उविकरणे लोट्॥**

**तनु** विस्तारे; उः; सिपि—उतश्च प्रत्ययादसंयोगपूर्वात् (VI. 4. 106.) इति हेर्लुक्; **तनोतु तनुतात्, तनुताम्, तन्वन्तु; तनु तनुतात्, तनुतम्, तनुत; तनवानि, तनवाव, तनवाम**। तङि—**तनुताम्, तन्वाताम्, तन्वताम्; तनुष्व, तन्वाथाम्, तनुध्वम्; तनवै, तनवावहै, तनवामहै**। मनुताम्; मनुष्व; मनवै। करोतु, कुरु, करवाणि; कुरुताम्, कुरुष्व, करवै; अनुकरोतु। धिन्विकृण्व्योर च (III. 1. 80.) इति उः, अकारश्च अन्तादेशः—धिनोतु, कृणोतु॥

**इति तनादौ उविकरणे लोट्॥**

---

**अथ क्र्यादौ श्नाविकरणे लोट्॥**

**डुक्रीञ्** द्रव्यविनिमये; श्ना; अजादौ ङिति आकारलोपः; हलादौ तु आकारस्य ईकारः; **क्रीणातु क्रीणीतात्, क्रीणीताम्, क्रीणन्तु; क्रीणीहि क्रीणीतात्, क्रीणीतम्, क्रीणीत; क्रीणानि, क्रीणाव, क्रीणाम**। तङि—**क्रीणीताम्, क्रीणाताम्, क्रीणताम्; क्रीणीष्व,**

**क्रीणीथाम्, क्रीणीध्वम्; क्रीणै, क्रीणावहै, क्रीणामहै ।** **ग्रह** उपादाने; गृह्णातु गृह्णीतात्; **हलश्श्नश्शानज्झौ** (III. 1. 83.)—हल उत्तरस्य श्नाप्रत्ययस्य शानजादेशो भवति हौ परतः । शित्करणं सार्वधातुकसंज्ञार्थम् । सा च संज्ञा ङित्त्वार्था । शित्करणात् ङिति यत् कार्यं विधीयते तत् स्थानिवद्भावेनैव संभवति; ई हल्यघोः (VI. 4. 113.) इति ईत्वं मा भूदिति ज्ञापनार्थमत्र शित्करणम् । किञ्च स्थानिवद्भावादेव शित्त्वे सिद्धे पुनश्शित्करणं बाधकविषयेऽपि गुणविधाने प्रतिषेधो यथा स्यात् क्ङिति च (I. 1. 5.) इति । तेन **ञिमिदा** स्नेहने इत्यस्य, व्यत्ययो बहुळम् (III.1. 85.) इति व्यत्ययेन श्नाप्रत्यये शानजादेशे च कृते, मिदेर्गुणः (VII.3.82.) इति गुणो न भवति; तथा च **मिदान** इति सिद्धं भवति । अतो हेः (VI. 4. 105.) इति हेर्लुक्; **गृहाण** । हल इति किम्? क्रीणीहि । हाविति किम्? गृह्णातु; गृह्णीताम् । मीनातु; मीनीताम्; प्रमीणातु । पुनातु; पुनीताम् । लुनातु; लुनीताम् । मृणातु; मृणीताम् । पृणातु; पृणीताम् । धुनातु; धुनीताम् । जानातु; जानीताम्; मातुः संजानातु । स्तभ्नातु, स्तभ्नोतु; स्तभान, स्तभ्नुहि । स्कभ्नातु, स्कभ्नोतु; स्कभान, स्कभ्नुहि । स्कुभ्नातु, स्कुभ्नोतु; स्कुभान, स्कुभ्नुहि । स्कुनातु, स्कुनोतु; स्कुनीहि, स्कुनु ॥

**इति क्र्यादौ श्नाविकरणे लोट् ॥**

---

**अथ चुरादौ णिज्विकरणे लोट् ॥**

**चुर** स्तेये; चोरयतु; चोरयताम् । पालयतु; पालयताम् । अर्चयतु; अर्चयताम् । एवमन्येषामपि रूपं नेयम् ॥

**इति चुरादौ णिज्विकरणे लोट् ॥**

---

**इति लोट्प्रकरणम् ॥**

---

## अथ लिङ्प्रकरणम् ॥

अथैतेभ्य एव धातुभ्यो लिङ्। **भू** सत्तायाम् । **विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्** (III. 3. 161.)—विधिः प्रेरणम्; निमन्त्रणं नियोगकरणम्; आमन्त्रणं कामचारकरणम्; अधीष्टः सत्कारपूर्वको व्यापारः; सम्प्रश्नः सम्प्रधारणम्; प्रार्थना याच्ञा; विध्यादिषु विशेषणीभूतेषु सत्सु धातोर्लिङ् प्रत्ययो भवति। सर्वलकारापवादः। विध्यादयः प्रत्ययार्थविशेषणम्; विध्यादिविशिष्टेषु कर्त्रादिषु गम्यमानेषु धातोर्लिङ् प्रत्ययो भवतीत्यर्थः। तस्य तिबादयः; इतश्च (III. 4. 100.) इति इकारलोपः; शब्गुणावादेशाः। **यासुट् परस्मैपदेषूदात्तो ङिच्च** (III. 4. 103.)—परस्मैपदविषयस्य लिङादेशस्य यासुडागमो भवति; स चोदात्तो ङिच्च भवति। सीयुटोऽपवादः; यासुटो ङिद्वचनं ज्ञापकं लकाराश्रयं ङित्वमादेशानां न भवतीति। तेन अचिनवम् असुनवम् इत्यादिषु, क्ङिति च (I. 1. 5.) इति गुणप्रतिषेधो न भवति। **लिङस्सलोपोऽनन्त्यस्य** (VII. 2. 79.)—सार्वधातुकविषयो यो लिङ्विहितः तस्यानन्त्यस्य सकारस्य लोपो भवति। **अतो येयः** (VII. 2. 80.)—अकारान्तादङ्गादुत्तरस्य ङिदवयवस्य या इत्येतस्य इय् इत्ययमादेशो भवति। आद्गुणः (VI. 1. 87.); लोपो व्योर्वलि (VI. 1. 66.); **भवेत्, भवेताम्**। **झेर्जुस्** (III. 4. 108.)—लिङादेशस्य झेर्जुसादेशो भवति—**भवेयुः; भवेः, भवेतम्, भवेत; भवेयम्, भवेव, भवेम**। **एध** वृद्धौ; लिङ्; शप्; **लिङस्सीयुट्** (III. 4. 102.)—लिङादेशानां सीयुडागमो भवति। पूर्ववत् सलोपयलोपौ; **एधेत, एधेयाताम्**। **झस्य रन्** (III. 4. 105.)—लिङादेशस्य झस्य

रन् इत्ययमादेशो भवति; **एधेरन्** । **एधेथाः, एधेयाथाम्, एधेध्वम्** ।
**इटोऽत्** (III. 4. 106.)—लिङादेशस्य इटः अत् इत्ययमादेशो भवति । इदमस्थमुः (V. 3. 24.) इत्यत्र उदित्करणेन, न विभक्तौ तुस्माः (I. 3. 4.) इत्यस्यानित्यत्वज्ञापनात्, अत्र अतः तकारस्य हलन्त्यम् (I. 3. 3.) इतीत्संज्ञायां लोपः—**एधेय, एधेवहि, एधेमहि** ।
पचेत्; पचेत । नन्देत् । ध्वंसेत । व्ययेत्; व्ययेत । जयेत्; विजयेत; पराजयेत । विस्मयेत् । श्रयेत्; श्रयेत । उड्डयेत । नयेत्; नयेत; प्रणयेत्; प्रणयेत । ह्वयेत्; ह्वयेत, निह्वयेत, संह्वयेत, उपह्वयेत, विह्वयेत । मेहेत् । क्रीडेत्; अनुक्रीडेत, सङ्क्रीडेत, परिक्रीडेत, आक्रीडेत । विद्योतेत । रोचेत । उपगूहेत्; उपगूहेत । गुञ्जेत् । कुञ्चेत् । भूषेत् । वर्तेत । वर्धेत । कल्पेत । वेपेत । आलोकेत । जृम्भेत । ष्ठीवेत् । क्रामेत्; क्रमेत, आक्रमेत, प्रक्रमेत भोक्तुम्; प्रक्रामेत्, उपक्रामेत् । गच्छेत् । पिबेत् । जिघ्रेत् । धमेत् । तिष्ठेत् । मनेत् । यच्छेत् । पश्येत् । ऋच्छेत् । धावेत् । शीयेत । सीदेत्, विषीदेत्, प्रतिसीदेत् । दशेत् । सजेत्; परिष्वजेत । रजेत् । गोपायेत् । धूपायेत् । विच्छायेत् । पणायेत्; पणायेत । पनायेत् । इत्यादि सर्वं नेयम् ॥

**इति भ्वादौ शब्विकरणे लिङ् ॥**

---

## अथ अदादौ लुग्विकरणे लिङ् ॥

**अद** भक्षणे; लिङ्; शप्; लुक्; **अद्यात्, अद्याताम्** । झेर्जुसादेशः; **उस्यपदान्तात्** (VI. 1. 96.)—अपदान्तादवर्णादुसि परतः पूर्वपरयोः स्थाने पररूपमेकादेशो भवति । गुणापवादः; **अद्युः** । **अद्याः,**

**अद्यातम्, अद्यात; अद्याम्, अद्याव, अद्याम । शीङ्** स्वप्ने; **शयीत, शयीयाताम्, शयीरन्; शयीथाः, शयीयाथाम्, शयीध्वम्; शयीय, शयीवहि, शयीमहि ।** ब्रूयात्; उवङादेशः— ब्रुवीत । हन्यात्; गमहनेत्युपधालोपः (VI. 4. 98.); हो हन्तेरिति (VII. 3. 54.) कुत्वेन घत्वम्—आघ्नीत । द्विष्यात्; द्विषीत । दुह्यात्; दुहीत । लिह्यात्; लिहीत । व्याचक्षीत । ईडीत । ईशीत । आसीत । निंसीत । द्युयात् । युयात् । नुयात् । तुरुस्तुशम्यम इति (VII. 3. 95.) ईडागमः; रुवीयात् रुयात्; अभिष्टुवीयात् अभिष्टुयात्; अभिष्टुवीत । प्रोर्णुयात्; प्रोर्णुवीत । इयात् । अधीयीत । प्रणिद्रायात् । विद्यात्; संविदीत । स्यात्; व्यतिषीत । मृज्यात् । रुद्यात् । स्वप्यात् । श्वस्यात् । प्राण्यात् । जक्ष्यात् । जागृयात् । इद्दरिद्रस्य (VI. 4. 114.) इति इत्वम्; दरिद्रियात् । शिष्यात् । दीधीत । वेवीत । चकास्यात् । उश्यात् । ह्नुवीत । इत्यादि नेयम् ॥

## इति अदादौ लुग्विकरणे लिङ् ॥

---

## अथ जुहोत्यादौ श्लुविकरणे लिङ् ॥

**हु** दानादनयोः; शपः श्लुः; द्वित्वम्; अभ्यासकार्यम्; **जुहुयात्, जुहुयाताम्, जुहुयुः; जुहुयाः, जुहुयातम्, जुहुयात; जुहु-याम्, जुहुयाव, जुहुयाम । ओहाङ्** गतौ; **जिहीत, जिही-याताम्, जिहीरन्; जिहीथाः, जिहीयाथाम्, जिहीध्वम्; जिहीय, जिहीवहि, जिहीमहि ।** दध्यात्; दधीत । बिभियात् बिभीयात् । जिह्रीयात् । दद्यात्; आददीत । नेनिज्यात्; नेनिजीत । वेवि-

च्यात्; वेविचीत । वेविष्यात्; वेविषीत । बिभृयात्; बिभ्रीत । मिमीत । **ओहाक्** त्यागे; जहातेश्च (VI. 4. 116.) इति इत्वे प्राप्ते, **लोपो यि** (VI. 4. 118.)—यकारादौ क्ङिति सार्वधातुके परतो जहातेराकारस्य लोपो भवति; **जह्यात्** । इयृयात् । पिपूर्यात् । सस्रयात् । इत्यादिशेषमवगन्तव्यम् ॥

**इति जुहोत्यादौ श्लुविकरणे लिङ् ॥**

---

**अथ दिवादौ श्यन्विकरणे लिङ् ॥**

**दिवु** क्रीडादौ; श्यन्; हलि च (VIII. 2. 77.) इति दीर्घः; **दीव्येत्, दीव्येताम्, दीव्येयुः; दीव्येः, दीव्येतम्, दीव्येत; दीव्येयम्, दीव्येव, दीव्येम** । **षूङ्** प्राणिप्रसवे; **प्रसूयेत, प्रसूयेयाताम्, प्रसूयेरन्; प्रसूयेथाः, प्रसूयेयाथाम्, प्रसूयेध्वम्; प्रसूयेय, प्रसूयेवहि, प्रसूयेमहि** । सन्नह्येत्; सन्नह्येत । सीव्येत्; परिषीव्येत् । राध्येत्; राध्नुयात् । विध्येत् । आश्येत; आशेत । भ्लाश्येत; भ्लाशेत । भ्राम्येत्; भ्रमेत् । क्राम्येत्; क्रामेत् । त्रुट्येत्; त्रुटेत् । लष्येत्; लषेत् । अवद्येत् । वृत्येत्; वर्तेत; वावृत्येत इति वा । मृष्येत्; मृष्येत; परिमृष्येत् । इष्येत् । रज्येत्; रज्येत । विद्येत । जायेत; शक्येत्; शक्नुयात् । शाम्येत् । दाम्येत् । ताम्येत् । श्राम्येत् । क्षाम्येत्; क्लाम्येत् । माद्येत् । अस्येत्; पर्यस्येत्; पर्यस्येत । यस्येत्; यसेत् । संयस्येत्; संयसेत् । मेद्येत् ॥

**इति दिवादौ श्यन्विकरणे लिङ् ॥**

---

## अथ स्वादौ श्नुविकरणे लिङ् ॥

**षुञ्** अभिषवे; श्नुः; ङित्त्वात् गुणाभावः; **सुनुयात्, सुनुयाताम्, सुनुयुः; सुनुयाः, सुनुयातम्, सुनुयात; सुनुयाम्, सुनुयाव, सुनुयाम।** तङि—**सुन्वीत, सुन्वीयाताम्, सुन्वीरन्; सुन्वीथाः, सुन्वीयाथाम्, सुन्वीध्वम्; सुन्वीय, सुन्वीवहि, सुन्वीमहि।** **अशू** व्याप्तौ सङ्घाते च; शात् (VIII. 4. 44.) इति श्चुत्वप्रतिषेधः; उवङ्; **अश्नुवीत।** निश्चिनुयात्; निश्चिन्वीत। हिनुयात्; प्रहिणुयात्। **श्रु** श्रवणे; श्रुवः शृ च (III. 1. 74.) इति शृआदेशः; **शृणुयात्; संशृण्वीत।** विभाषितः—अक्ष्णुयात् अक्षेत्, तक्ष्णुयात् तक्षेत्, सन्तक्षेत् वाग्भिः ॥

## इति स्वादौ श्नुविकरणे लिङ् ॥

---

## अथ तुदादौ शविकरणे लिङ् ॥

**तुद** व्यथने; शः; ङित्त्वात् गुणाभावः; **तुदेत्, तुदेताम्, तुदेयुः; तुदेः, तुदेतम्, तुदेत; तुदेयम्, तुदेव, तुदेम। तुदेत, तुदेयाताम्; तुदेरन्; तुदेथाः, तुदेयाथाम्, तुदेध्वम्; तुदेय, तुदेवहि, तुदेमहि।** म्रियेत। भृज्जेत्; भृज्जेत। विचेत्। इच्छेत्। तृफेत् तृम्फेत्। दृफेत् दृम्फेत्। गुफेत् गुम्फेत्। उफेत् उम्फेत्। उभेत् उम्भेत्। शुभेत् शुम्भेत्। प्रियेत। अभिषुवेत्। गिरेत् गिलेत्; अवगिरेत, अवगिलेत; शतं सङ्गिरेत वा सङ्गिलेत। पृच्छेत्; आपृच्छेत। विशेत्; निविशेत। मुञ्चेत्; मुञ्चेत। लुम्पेत्; लुम्पेत। लिम्पेत्; लिम्पेत। विन्देत्; विन्देत। सिञ्चेत्; सिञ्चेत। निकृन्तेत्। खिन्देत्। पिंशेत् ॥

## इति तुदादौ शविकरणे लिङ् ॥

---

## अथ रुधादौ श्नम्विकरणे लिङ् ॥

**रुधिर्** आवरणे; श्नम्; श्नमः अकारलोपः; **रुन्ध्यात्, रुन्ध्याताम्, रुन्ध्युः; रुन्ध्याः, रुन्ध्यातम्, रुन्ध्यात; रुन्ध्याम्, रुन्ध्याव, रुन्ध्याम** । ताङि—**रुन्धीत, रुन्धीयाताम्, रुन्धीरन्; रुन्धीथाः, रुन्धीयाथाम्, रुन्धीध्वम्; रुन्धीय, रुन्धीवहि, रुन्धीमहि** । भुञ्ज्यात्; भुञ्जीत । युञ्ज्यात्; युञ्जीत; प्रयुञ्जीत, उपयुञ्जीत । भिन्द्यात्; भिन्दीत । छिन्द्यात्; छिन्दीत । रिञ्च्यात्; रिञ्चीत । विञ्च्यात्; विञ्चीत । क्षुन्द्यात्; क्षुन्दीत । छृन्द्यात्; छृन्दीत । तृन्द्यात्; तृन्दीत । विशिंष्यात् । पिंष्यात् । भञ्ज्यात् । तृंह्यात् । हिंस्यात् ॥

## इति रुधादौ श्नम्विकरणे लिङ् ॥

---

## अथ तनादौ उविकरणे लिङ् ॥

**तनु** विस्तारे; उः; यासुटो ङित्त्वात् गुणाभावः; **तनुयात्, तनुयाताम्, तनुयुः; तनुयाः, तनुयातम्, तनुयात; तनुयाम्, तनुयाव, तनुयाम** । **तन्वीत, तन्वीयाताम्, तन्वीरन्; तन्वीथाः, तन्वीयाथाम्, तन्वीध्वम्; तन्वीय, तन्वीवहि, तन्वीमहि** । **मन** अवबोधने; **मन्वीत** । **डुकृञ्** करणे; **नित्यं करोतेः** (VI. 4. 108.) इति वर्तमाने, **ये च** (VI. 4. 109.)—

यकारादौ प्रत्यये परतः उप्रत्ययान्तस्य करोतेरुकारस्य नित्यं लोपो भवति ; **कुर्यात्** । **कुर्वीत** ; **पराकुर्यात्**, **अनुकुर्यात्** । धिनुयात् । कृणुयात् ॥

**इति तनादौ उविकरणे लिङ् ॥**

---

**अथ क्र्यादौ श्नाविकरणे लिङ् ॥**

**डुक्रीञ्** द्रव्यविनिमये ; श्ना ; ई हल्यघोः (VI. 4. 113.) इति आकारस्य ईत्वम् ; **क्रीणीयात्**, **क्रीणीयाताम्**, **क्रीणीयुः** ; **क्रीणीयाः**, **क्रीणीयातम्**, **क्रीणीयात** ; **क्रीणीयाम्**, **क्रीणीयाव**, **क्रीणीयाम** । **क्रीणीत**, **क्रीणीयाताम्**, **क्रीणीरन्** ; **क्रीणीथाः**, **क्रीणीयाथाम्**, **क्रीणीध्वम्** ; **क्रीणीय**, **क्रीणीवहि**, **क्रीणीमहि** । **परिक्रीणीत**, **अवक्रीणीत** । वृणीत । गृह्णीयात् ; गृह्णीत । मीनीयात्, मीनीत ; प्रमीणीयात्, प्रमीणीत । पुनीयात् ; पुनीत । लुनीयात् ; लुनीत । धुनीयात् ; धुनीत । जानीयात् ; जानीत । स्तभ्नीयात्, स्तभ्नुयात् । स्तुभ्नीयात्, स्तुभ्नुयात् । स्कभ्नीयात्, स्कभ्नुयात् । स्कुभ्नीयात्, स्कुभ्नुयात् । स्कुनीयात् ; स्कुनीत ॥

**इति क्र्यादौ श्नाविकरणे लिङ् ॥**

---

## अथ चुरादौ णिज्विकरणे लिङ् ॥

**चुर** स्तेये; णिच्; सनाद्यन्ता धातवः (III. 1. 32.) इति विकरणविशिष्टस्य धातुत्वम्; तिप्शब्गुणायादेशाः; **चोरयेत्, चोरयेताम्, चोरयेयुः; चोरयेः, चोरयेतम्, चोरयेत; चोरयेयम्, चोरयेव, चोरयेम** । णिचश्च (I. 3. 74.) इत्यात्मनेपदम्; **चोरयेत, चोरयेयाताम्, चोरयेरन्; चोरयेथाः, चोरयेयाथाम्, चोरयेध्वम्; चोरयेय, चोरयेवहि, चोरयेमहि** । पालयेत्; पालयेत । अर्चयेत्; अर्चयेत । चिन्तयेत्; चिन्तयेत । कीर्तयेत्; कीर्तयेत । घटयेत्; घटयेत । विलापयेत्, विलापयेत; विलीनयेत्, विलीनयेत; विलालयेत्, विलालयेत; विलाययेत्, विलाययेत । वर्जयेत्; वर्जयेत । जरयेत्, जरयेत, जीर्येत । मार्जयेत्, मार्जयेत, मृज्यात् । कथयेत्; कथयेत । मृगयेत्; मृगयेत । एवमेव इतरेषामपि रूपं नेयम् ॥

## इति चुरादौ णिज्विकरणे लिङ् ॥

---

## इति लिङ्प्रकरणम् ॥

---

## अथ भावकर्मप्रक्रियायां यक्प्रकरणम् ॥

1. इदानीं भावकर्मणोः लडादयः प्रदर्श्यन्ते । **लः कर्मणि च भावे चाकर्मकेभ्यः** (III. 4. 69.)—ल इति उत्सृष्टानुबन्धसामान्यमेव गृह्यते; दशलकारग्रहणात् प्रथमाबहुवचनञ्चैतत्; लकारास्सकर्मकेभ्यो धातुभ्यः कर्मणि भवन्ति, चकारात् कर्तरि च; अकर्मकेभ्यो धातुभ्यो भावे भवन्ति, पुनश्चकारात् कर्तरि च । इति एतेभ्य एव धातुभ्यः कर्मणि च भावे च लडादयः प्रत्ययाः भवन्ति । तत्र सर्वेभ्यो धातुभ्यो विहितस्य लकारस्य स्थाने, **भावकर्मणोः** (I. 3. 13.)—लः कर्मणि च भावे चाकर्मकेभ्यः इत्यनेन भावकर्मणोः विहितस्य लकारस्य स्थाने आत्मनेपदं भवति । न कदाचित् परस्मैपदम् । तत्र सर्वेभ्यो धातुभ्यः, **च्विण् भावकर्मणोः** (III. 1. 66.) इति वर्तमाने, **सार्वधातुके यक्** (III. 1. 67.)—भावकर्मवाचिनि सार्वधातुके परतो धातोर्यक् प्रत्ययो भवति । शबाद्यपवादः । **भू** सत्तायाम्; भू+य+त इति स्थिते, आर्धधातुकं शेषः (III. 4. 114.) इति यक्प्रत्ययस्य आर्धधातुकसंज्ञायां, सार्वधातुकार्धधातुकयोः (VII. 3. 84.) इति गुणे प्राप्ते, क्ङिति च (I. 1. 5.) इति कित्त्वाद्गुणाभावः; प्रागिव टेरेत्वादयः; **भूयते** । अपि च तिङन्ते भावकर्मणो रूपं सर्वत्र समानमेव । किन्त्वेकवचनं भावे भावस्यैकत्वात्; तच्च प्रथमपुरुषस्यैव भावस्य अयुष्मदस्मद्विषयत्वात् । भावे तावत्—**भूयते त्वया मया अन्यैश्च** । सकर्मकेभ्यो धातुभ्यः कर्मणि सर्वा अपि विभक्तयो भवन्ति । क्वचिदकर्मका अपि धातव उपसर्गवशात् सकर्मका भवन्ति; तथैवोदाहरिष्यामः—**अनुभूयते** लक्ष्मीर्देवदत्तेन—**अनुभूयेते, अनुभूयन्ते** । लङि—**अभूयत, अन्वभूयत** । लोटि—**भूयताम्,**

**अनुभूयताम्** । लिङि—**भूयेत, अनुभूयेत** । एध्यते; ऐध्यत; एध्यताम्; एध्येत । पच्यते; अपच्यत; पच्यताम्; पच्येत । नन्द्यते; अनन्द्यत; नन्द्यताम्; नन्द्येत । अनिदितामित्यादिना (VI. 4. 24.) नकारलोपः—प्रध्वस्यते; प्राध्वस्यत; प्रध्वस्यताम्, प्रध्वस्येत । **व्येञ्** संवरणे। **आदेच उपदेशेऽशिति** (VI. 1. 45.)—उपदेशे एजन्तो यो धातुः तस्य आकारादेशो भवति अशिति प्रत्यये विषयभूते। **वचिस्वपियजादीनां किति** (VI. 1. 15.)—वचिस्वप्योः यजादीनाञ्च किति परतः सम्प्रसारणं भवति । इति यकारस्य इकारः। न सम्प्रसारणे सम्प्रसारणम् (VI. 1. 37.) इति व्येञो वकारस्य प्रथमयणः सम्प्रसारणाभावः । सम्प्रसारणाच्च (VI. 1. 108.) इति पूर्वरूपत्वम् । हलः (VI. 4. 2.) इति दीर्घः; **वीयते, अवीयत, वीयताम्, वीयेत** । आयप्रत्ययान्तानां कर्मणि, **आर्धधातुके** (VI. 4. 46.) इत्यधिकृत्य, **अतो लोपः** (VI. 4. 48.)—आर्धधातुकोपदेशे यदकारान्तं तस्य लोपः; **गोपाय्यते, धूपाय्यते, विच्छाय्यते, पणाय्यते, पनाय्यते** । आयादय आर्धधातुके वा (III. 1. 31.) इति आयादीनां वैकल्पिकत्वेन, आयाभावपक्षे—**गुप्यते, धूप्यते, विच्छ्यते, पण्यते, पन्यते** ॥

2. **अद्** भक्षणे; **अद्यते; आद्यत; अद्यताम्; अद्येत** । **शीङ्** स्वप्ने; **अयङ् यि क्ङिति** (VII. 4. 22.)—शीङोऽङ्गस्य अयङादेशो भवति यकारादौ क्ङिति प्रत्यये परतः; **अधिशय्यते, अध्यशय्यत, अधिशय्यताम्, अधिशय्येत** । ब्रू-धातोः **ब्रुवो वचिः** (II. 4. 53.)—ब्रुवो वचिरादेशो भवति आर्धधातुके विषयभूते ।

वचिस्वपीत्यादिना (VI. 1. 15.) सम्प्रसारणम्; **उच्यते** । लङि आडागमः—**औच्यत; उच्यताम्; उच्येत**। **अकृत्सार्वधातुकयोर्दीर्घः** (VII. 4. 25.)—अकृद्यकारे असार्वधातुके यकारादिप्रत्यये क्ङिति परतः अजन्तस्याङ्गस्य दीर्घो भवति। हु-धातोः—**हूयते, अहूयत, हूयताम्, हूयेत**—इति भवति । एवमेव ह्रीयते; अह्रीयत; ह्रीयताम्; ह्रीयेत; इत्यादि। **डुधाञ्** धारणपोषणयोः। **घुमास्थागापाजहातिसां हलि** (VI. 4. 66.)—घुसंज्ञकानामङ्गानां मा स्था गा पा जहाति सा इत्येतेषां हलादौ क्ङिति प्रत्यये परतः ईकारादेशो भवति आर्धधातुके विषयभूते; **विधीयते, व्यधीयत, विधीयताम्, विधीयेत** । डुदाञ्—दीयते; दाण्—दीयते; धेट्-धीयते; मा—मीयते; स्था-स्थीयते; गा—गीयते; पा—पीयते; जहातेः-हीयते; सा—अवसीयते । अन्यत्र ईत्वं न भवति। यथा-या-धातोः **यायते**, वा-धातोः **वायते** ॥

3. **दिवु** क्रीडादौ; **दीव्यते, अदीव्यत, दीव्यताम् दीव्येत**। प्रसूयते; प्रासूयत; प्रसूयताम्; प्रसूयेत । नह्यते; अनह्यत; नह्यताम्; नह्येत । **षुञ्** अभिषवे; **अभिषूयते; अभ्यषूयत; अभिषूयताम्; अभिषूयेत** । अश्यते; आश्यत; अश्यताम्; अश्येत । चीयते; अचीयत; चीयताम्; चीयेत । **तुद** व्यथने; **तुद्यते; अतुद्यत; तुद्यताम्; तुद्येत** । रिङ् शयग्लिङ्क्षु (VII. 4. 28.) इति रिङ्विधानसामर्थ्याद्दीर्घो न भवति; **म्रियते, अम्रियत, म्रियताम्, म्रियेत** । मुच्यते; अमुच्यत; मुच्यताम्; मुच्येत । **रुधिर्** आवरणे; **रुध्यते; अरुध्यत; रुध्यताम्; रुध्येत** । भुज्यते; अभुज्यत; भुज्यताम्; भुज्येत । युज्यते; अयुज्यत; युज्यताम्; युज्येत । **तनु** विस्तारे; **तनोतेर्यकि** (VI.

4. 44.)—तनोतेरङ्गस्य विभाषा आकारादेशो भवति यकि परतः; **तायते**; **अतायत**; **तायताम्**; **तायेत** । पक्षे—**तन्यते**; **अतन्यत**; **तन्यताम्**; **तन्येत**। यकीति किम्? तन्तन्यते । मन्यते; अमन्यत; मन्यताम्; मन्येत । रिङादेशः; क्रियते; अक्रियत; क्रियताम्; क्रियेत । **डुक्रीञ्** द्रव्यविनिमये; **क्रीयते**; **अक्रीयत**; **क्रीयताम्**; **क्रीयेत** । प्रीयते; अप्रीयत; प्रीयताम्; प्रीयेत। ग्रहिज्येत्यादिना (VI. 1. 16.) सम्प्रसारणम्; गृह्यते; अगृह्यत; गृह्यताम्; गृह्येत । **चुर** स्तेये; **णेरनिटि** (VI. 4. 51.)—अनिडादावार्धधातुके परतः णेर्लोपो भवति; **चोर्यते**; **अचोर्यत**; **चोर्यताम्**; **चोर्येत** । **कमु** कान्तौ; कमेर्णिङ् (III. 1. 30.) इति णिङ्; णिलोपः; **काम्यते** । इत्यादि सर्वमुन्नेयम् ॥

4. **जनी** प्रादुर्भावे; **षणु** दाने; **खनु** अवदारणे; **विड्वनोरनुनासिकस्यात्** (VI. 4. 41.), **जनसनखनां सन्झलोः** (VI. 4. 42.) इत्यनुवर्तमाने, **ये विभाषा** (VI. 4. 43.)—यकारादौ प्रत्यये परतो जन सन खन इत्येतेषां विभाषा आकारादेशो भवति; **जायते जन्यते, सायते सन्यते, खायते खन्यते** । **जॄष्** वयोहानौ; **गॄ** निगरणे; ॠत इद्धातोः (VII. 1. 100.) इति इत्वम्; रपरत्वम्; हलि च (VII. 2. 77.) इति दीर्घः; **जीर्यते, गीर्यते** । **पॄ** पालनपूरणयोः; उदोष्ठ्यपूर्वस्य (VII. 1. 102.) इत्युत्वम्; रपरत्वम्; हलि चेति दीर्घः; **पूर्यते** । **स्मृ** चिन्तायाम्; **गुणोऽर्तिसंयोगाद्योः** (VII. 4. 29.)—यक् लिङ् द्वयमत्रानुवर्तते, रि

इति तु असम्भवान्नानुवर्तते ; अर्तेस्संयोगादीनाञ्च ऋकारान्तानामङ्गानां यकि लिङि च यकारादावार्धधातुके परतो गुणो भवति; **स्मर्यते**।
**ञिष्वप्** शये; वचिस्वपीत्यादिना (VI. 1. 15.) सम्प्रसारणम्; **सुप्यते**।

यजो वपो वहिश्चैव व्येञ्वेञौ श्वयतिस्तथा।
वद्वसौ ह्वयतिश्चैव स्मृता नव यजादयः॥

अत्रापि तथैव संप्रसारणम्; यज–**इज्यते**; वप–**उप्यते**; वह–**उह्यते**। व्येञ्–आदेच उपदेशेऽशिति (VI. 1. 45.) इत्यात्वम्, सम्प्रसारणपूर्वत्वे, अकृत्सार्वधातुकयोर्दीर्घः (VII. 4. 25.) इति दीर्घता–**वीयते**; वेञ्–सम्प्रसारणम्, पूर्ववत् दीर्घः, **ऊयते**; टु ओ श्वि—**उच्छूयते**; वद–**उद्यते**। वस–**उष्यते**; अत्र शासिवसिघसीनाञ्च इति षत्वम्। ह्वेञ्–**हूयते**। व्रश्च्–वृश्च्यते; प्रच्छ–पृच्छयते; ग्रह–गृह्यते ; भ्रस्ज्–भृज्ज्यते; ज्या–जीयते; व्यध–विध्यते; वश—उश्यते; व्यच–विच्यते। **अस** भुवि; **अस्तेर्भूः** (II. 4. 52.)—अस्तेर्धातोः भू इत्ययमादेशो भवति आर्धधातुके परतः; **भूयते**। **चक्षिङ्**; **चक्षिङः ख्याञ्** (II. 4. 54.)—चक्षिङः ख्या इत्ययमादेशो भवति आर्धधातुके विषयभूते; **ख्यायते**। **अज** गतिविक्षेपणयोः; **अजेर्व्यघञपोः** (II. 4. 56.)—अजधातोः घञपौ वर्जयित्वा आर्धधातुके प्रत्यये विषयभूते वी इत्ययमादेशो भवति; **वीयते**। **ऊह** वितर्के; **उपसर्गाद्ध्रस्व ऊहतेः** (VII. 4. 23.)—उपसर्गादुत्तरस्य ऊहतेः ह्रस्वो वा भवति यकारादौ क्ङिति प्रत्यये परतः; **समुह्यते**। **कपि** चलने; इदित्वान्नुम्;

**प्रकम्प्यते** । **पचि** विस्तारे; **प्रपञ्च्यते** । एवं भावकर्मणोर्लडादयस्स-विस्तरं बोद्धव्याः ॥

5. स्थाल्यामोदनं पचति देवदत्तः इत्यत्र, यदा पच्यमान ओदनः स्वगुणैस्स्वयमेव सिध्यति तदा तस्य सौकर्यातिशयात् स्वातन्त्र्य-विवक्षया कर्तृसंज्ञायां तिवादयः प्राप्नुवन्ति । यथा असिना छिनत्ति इत्यत्र करणस्य कर्तृतया असिश्छिनत्ति इति, स्थाल्यां पचति इत्यत्र अधिकरणस्य कर्तृतया स्थाली पचति इति च, तथा ओदनस्य कर्मणः कर्तृत्वे ओदनः पच्यते इति भवति । अत इदमुच्यते । **कर्मवत्कर्मणा तुल्यक्रियः** (III. 1. 87.)—कर्तरि शप् (III. 1. 68.) इत्यतः कर्तृग्रहणमिहानु-वृत्तम्; तत् प्रथमया विपरिणम्यते; कर्मणि क्रिया कर्म; कर्मणा कर्मस्थया क्रियया तुल्यक्रियो यः कर्ता स कर्मवद्भवति । यस्मिन् कर्मणि कर्तृभूतेऽपि कर्मणीव क्रिया लक्ष्यते, यथा कर्मणि लकारादिकं पच्यते ओदनश्चैत्रेण इत्यत्र भवति, तथा कर्मकर्तर्यपि सर्वत्र कर्माश्रितानि कार्याणि प्रतिपद्यन्ते । यगात्मनेपदचिण्चिण्वदिड्भावा भवन्तीत्यर्थः; **पच्यते ओदनः स्वय-मेव, भिद्यते काष्ठं स्वयमेव** । अत्र वत्करणं तु स्वाश्रयमपि यथा स्यात् । यत् विनाप्यतिदेशेन भवति तत् स्वाश्रयम्; तदपि यथा स्यादि-त्येवमर्थं वत्करणम्; **भिद्यते कुसूलेन** । एवम् अकर्मकाणां भावे लः सिद्धो भवति । कर्मणेति किम्? करणाधिकरणाभ्यां तुल्यक्रियस्य मा भूत्; साध्वसिश्छिनत्ति, साधु स्थाली पचति । अथेह कस्मान्न भवति पचत्योदनं देवदत्तः, राध्यत्योदनः स्वयमेवेति? अत्र ओदनः कर्ता कर्मस्थया क्रियया तुल्यक्रियः, तथा हि यादृशि कर्मभूते ओदने पचनलक्षणक्रिया लक्ष्यते तादृश्येव कर्तृभूतेऽपि कर्मणि, पचिराध्योरेकार्थत्वादिति चेत् न;

धात्वधिकारात् समानधातोः कर्तुः कर्मवद्भावः इत्याश्रयणात्, इह च धातु-भेदात्। समानधातोरित्यत्र समानशब्द एकपर्यायः, यथा देवदत्तयज्ञदत्तयोः समानमाता इति। इह च भिन्नयोर्धात्वोः कर्तृकर्माभावात् पचत्योदनं देव-दत्तः राध्यत्योदनः स्वयमेवेत्यत्र कर्मवद्भावो न स्यादित्यर्थः। तथैव न्याय-प्राप्तोऽर्थः कर्मस्थभावकानां कर्मस्थक्रियाणाञ्च कर्ता कर्मवद्भवति, न तु कर्तृस्थभावकानां कर्तृस्थक्रियाणां च धातूनाम्॥

6. अपरिस्पन्दनसाधनसाध्यत्वेन सपरिस्पन्दनसाधनसाध्यत्वेन च अत्र भावक्रिययोः क्रमेण भेदोऽनुसन्धेयः।

कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया।
मासासिभावः कर्तृस्थः कर्तृस्था च गमेः क्रिया॥

अस्यार्थः। कर्मस्थः पचतेर्भाव इति—पच्यते घटः इत्यत्र तद्देशस्थस्यैव घटस्य यदा पाको निष्पद्यते स तदा अपरिस्पन्दनसाधनसाध्यपाक इति कर्मस्थो भावः। कर्मस्था च भिदेः क्रियेति—भिद्यते कुसूलः स्वयमेवेत्यत्र अवयवविशरणलक्षणा क्रिया, सा च देशान्तरप्राप्तौ सत्यां भवतीति विद्यते परिस्पन्दः; तेन कर्मस्था भिदेः क्रिया भवति। मासासिभावः कर्तृस्थः इति—भावत्वं चास्य भवति अपरिस्पन्दनसाधनसाध्यत्वात्; माससहचरित आसिभावो मासासिभाव इति शाकपार्थिवादित्वात् समासः; एष मासासि-भावः कर्तृस्थः आसितरि समवायात्; तेन आस्यते मासः स्वयमेवेति न भवति। कर्तृस्था च गमेः क्रिया इति—गमनं पादविहरणात्मकम्; परिस्पन्द-साधनसाध्यत्वात् कर्तृस्था क्रिया; तत् च कर्तरि देवदत्तादौ समवेतं, न कर्मणि ग्रामादौ; तेन कर्मवद्भावात् गम्यते ग्रामः स्वयमेवेति न भवति॥

7. **न दुहस्नुनमां यक्चिणौ**(III.1.89.)—दुह स्नु नम् इत्येतेषां धातूनां यक्चिणौ कर्मवद्भावापदिष्टौ न भवतः । दुहेरनेन यक्प्रत्ययो निषिध्यते; चिण् तु दुहश्च (III. 1. 63.) इति विकल्पितः; **दुग्धे गौः स्वयमेव, प्रस्नुते गौः स्वयमेव, नमते दण्डः स्वयमेव । कुषिरञ्जोः प्राचां श्यन् परस्मैपदञ्च** (III. 1. 90.)—कुषिरञ्जोः प्राचामाचार्याणां मतेन कर्मकर्तरि श्यन्प्रत्ययो भवति परस्मैपदं च । यगात्मनेपदयोरपवादः; **कुष्यति पादः स्वयमेव, रज्यति वस्त्रं स्वयमेव ।** प्राचांग्रहणं विकल्पार्थम्; कुष्यते पादः स्वयमेव, रज्यते वस्त्रं स्वयमेव । व्यवस्थितविभाषेयम्; तेन लिङ्लिटोः स्यादिविषये च न भवतः; कोषिषीष्ट पादः स्वयमेव विरङ्क्षीष्ट वस्त्रं स्वयमेव, चुकुषे पादः स्वयमेव ररञ्जे वस्त्रं स्वयमेव, कोषिष्यते पादः स्वयमेव रङ्क्ष्यते वस्त्रं स्वयमेव । आदिना अकोषि अराञ्जि स्वयमेव पादः इत्यपि ग्राह्यः । कः कर्मकर्ता ?

क्रियमाणन्तु यत्कर्म स्वयमेव प्रसिध्यति ।
सुकरैस्स्वैर्गुणैर्यस्मात् कर्मकर्तेति तद्विदुः ॥

**इति यक्प्रकरणम् ॥**

---

**इति सार्वधातुकपरिच्छेदः ॥**

## अथ आर्धधातुकपरिच्छेदः ॥

### आशीर्लिङ्प्रकरणम् ॥

1. अथैतेभ्य एव धातुभ्यः पुनः कर्तरि लिङादयः प्रदर्श्यन्ते। **भू** सत्तायाम् । **आशिषि लिङ्लोटौ** (III. 3. 173.)—अविद्यमानस्याभीष्टस्याशासनमाशीः; आशीर्विशिष्टेऽर्थे वर्तमानाद्धातोः लिङ्लोटौ प्रत्ययौ भवतः । इति इदानीं लिङ् । अस्य स्थाने तिबादयः । **किदाशिषि** (III. 4. 104.)—आशिषि विषये यो लिङ् विहितः तस्य परस्मैपदे, यासुट् परस्मैपदेषूदात्तो ङिच्च (III. 4. 103.) इति विहितः, यः यासुडागमः स च किद्भवति । ङित्त्वे प्राप्ते कित्वं विधीयते । गुणवृद्धिप्रतिषेधस्तुल्यः; सम्प्रसारणे जागर्तेर्गुणे च कित्त्वे विशेषः । **लिङाशिषि** (III. 4. 116.)—आशिषि विषये यो लिङ् तदादेशस्तिङार्धधातुकसंज्ञो भवति । इत्यार्धधातुकत्वाच्छबादयो न भवन्ति । इतश्च (III. 4. 100.) इति इकारलोपः । स्कोस्संयोगाद्योरन्ते च (VIII. 2. 29.) इति सकारलोपः; ङित्वात् तामादयः सलोपश्च; लिङो झेर्जुस्; **भूयात्, भूयास्ताम्, भूयासुः; भूयाः, भूयास्तम्, भूयास्त; भूयासम्, भूयास्व, भूयास्म** । **एध** वृद्धौ । लिङस्सीयुट् (III. 4. 102.) इति सीयुडागमः । **आर्धधातुकस्येड्वलादेः** (VII. 2. 35.)—वलादेरार्धधातुकस्य इडागमो भवति । इति सर्वत्रेडागमः; षत्वम्; लोपो व्योर्वलि (VI. 1. 66.) इति यकारलोपः । **सुट् तिथोः** (III. 4. 107.)—इकार उच्चारणार्थः; तकारथकारावात्मनेपदसम्बन्धिनौ आगमिनौ गृह्येते; लिङ्सम्बन्धिनोः तकारथकारयोः सुडागमो भवति । उकार उच्चारणार्थः, टकारो देशविध्यर्थः । षत्वष्टुत्वे; आर्धधातुकत्वात् लिङस्स

लोपोऽनन्त्यस्य (VII. 2. 79.) इति सकारलोपो न भवति; झस्य रन्; **एधिषीष्ट, एधिषीयास्ताम्, एधिषीरन्; एधिषीष्ठाः, एधिषीयास्थाम्, एधिषीध्वम्; एधिषीय, एधिषीवहि, एधिषीमहि** ॥

2 **डु पचष्** पाके; यासुडागमः; **पच्यात्** इत्यादि। ततः पूर्ववत् आत्मनेपदे लिङः सीयुडागमः; इडागमे प्राप्ते, **नेड्वशि कृति** (VII. 2. 8.) इत्यनुवर्तमाने, **एकाच उपदेशेऽनुदात्तात्** (VII. 2. 10.)—उपदेशे यो धातुरेकाजनुदात्तः तस्मादुत्तरस्य वलादेः आर्धधातुकस्य इडागमो न भवति। प्रकृत्याश्रितोऽयं प्रतिषेधः। के पुनरुपदेशेऽनुदात्ताः? ये तथा पठ्यन्ते। त एव विस्पष्टार्थम् अनिट्कारिकासु विभज्य प्रदर्श्यन्ते।

**अनिट् स्वरान्तो भवतीति दृश्यताम्**
**इमांस्तु सेटः प्रवदन्ति तद्विदः।**
**अदन्तमृदन्तमृताञ्च वृङ्वृञौ**
**श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि ॥ १ ॥**
**गणस्थमूदन्तमुताञ्च रुस्नुवौ**
**क्षुवन्तथोर्णोतिमथो युनुक्ष्णुवः।**
**इति स्वरान्ता निपुणं समुच्चिता-**
**स्ततो हलन्तानपि सन्निबोधत ॥ २ ॥**

अस्यायमर्थः। स्वरान्तः अजन्तः यो धातुः स सर्वत्र अनिट् भवतीति दृश्यताम् अवगम्यताम्। तेषु स्वरान्तेषु धातुषु मध्ये तद्विदः आचार्याः इमांस्तु वक्ष्यमाणान् धातून् तु सेटः प्रवदन्ति; अदन्तम्—अकारान्तं

सर्वम्; ॠदन्तम्–ॠकारान्तं सर्वम्; ऋताञ्च–ऋकारान्तानाञ्च मध्ये; वृङ्-वृञौ—**वृङ्** सम्भक्तौ, **वृञ्** वरणे, इत्येतौ; श्विडीङिवर्णेषु—इवर्णान्तेषु धातुषु मध्ये **टु ओ श्वि** गतिवृद्ध्योः, **डीङ्** विहायसा गतौ; अथ शीङ्-श्रिञावपि—अथ अनन्तरं, **शीङ्** स्वप्ने, **श्रिञ्** सेवायाम्, इत्येतौ द्वावपि। एतदुक्तं भवति—अकारान्तास्सर्वे धातवः, ॠकारान्तास्सर्वे, ऋकारान्तेषु द्वावेव, इवर्णान्तेषु चत्वारः, एतान् धातून् सेटः प्रवदन्ति इति। गणेषु तिष्ठति इति गणस्थः; तं गणस्थम् ऊदन्तम् ऊकारान्तं सर्वम्; उतां च रुस्नुवौ—उकारान्तानाञ्च मध्ये, **रु** शब्दे, **स्नु** प्रस्रवणे; क्षुवम् **टु क्षु** शब्दे; तथा ऊर्णोतिम्—**ऊर्णुञ्** आच्छादने;

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्।
आमश्च प्रतिषेधार्थमेकाचश्चेड्डुपग्रहात्॥

इत्यतिदेशादेकाच्त्वमस्तीत्युदात्त ऊर्णोतिरुपदिश्यते; अथो—अनन्तरम्; युनुक्ष्णुवः—**यु** मिश्रणे, **णु** स्तुतौ, **क्ष्णु** तेजने, इत्येतान् सप्त धातून् सेटः प्रवदन्ति आचार्याः; अनेन प्रकारेण स्वरान्ता धातवः निपुणं समुच्चिताः सम्यगुक्ताः; ततो हलन्तानपि सन्निबोधत—ततः अनन्तरं हलन्तानपि अवगच्छत; इत्यर्थः।

**शकिस्तु कान्तेष्वनिडेक इष्यते**
**घसिश्च सान्तेषु वसिः प्रसारिणी।**
**रभिश्च भान्तेष्वथ मैथुने यभिः**
**ततस्तृतीयो लभिरेव नेतरे॥ ३॥**

ककारान्तेषु धातुषु मध्ये **शक्ऌ** शक्तौ इत्येको धातुरनिडिष्यते; सकारान्तेषु घसिः, प्रसारिणी वसिश्च; **घस्ऌ** अदने, **वस** निवासे, इत्येतावुभौ

अनिडाविष्येते । प्रसारणं सम्प्रसारणम्, तदस्यास्तीति प्रसारिणी; वस निवासे इत्यस्य यजादित्वात् सम्प्रसारणं विधीयते, प्रसारणिग्रहणं वस आच्छादने इत्यस्य धातोः निवृत्त्यर्थम्। **रभ** राभस्ये, **यभ** मैथुने, **डु लभष्** प्राप्तौ, इति त्रय एव धातवः भान्तेषु अनिट इष्यन्ते, नेतरे नान्ये ।

**यमिर्ञमन्तेष्वनिडेक इष्यते**
**रमिश्च यश्च श्यनि पठ्यते मनिः ।**
**नमिश्चतुर्थो हनिरेव पञ्चमो**
**गमिस्तु षष्ठः प्रतिषेधवाचिनाम् ॥ ४ ॥**

ञमन्तेषु—ञम्प्रत्याहारघटकनकारमकारान्तेषु धातुषु; प्रतिषेधवाचिनाम्—इट्प्रतिषेधवाचिनाम् आचार्याणां मते षडेव अनिट इत्यर्थः। ञमन्ताड्डः (उणा. 119.) इति सूत्रकारेण कथितत्वात् ञकारेणापि मकारस्य ग्रहणमस्ति, अतो ञम्प्रत्याहारोऽस्ति इति मन्तव्यम् । **यमु** उपरमे, **रमु** क्रीडायाम्, यश्च श्यनि पठ्यते स मनिश्च—दैवादिक इत्यर्थः—**मन** ज्ञाने, **णम** प्रह्वत्वे शब्दे च, **हन** हिंसागत्योः, **गम** गतौ, इति । एतदुक्तं भवति—मकारान्तेषु चत्वारः नकारान्तेषु द्वाविति ।

**दिहिर्दुहिर्मेहतिरोहती वहिः**
**नहिस्तु षष्ठो दहतिस्तथा लिहिः ।**
**इमेऽनिटोऽष्टाविह मुक्तसंशयाः**
**गणेषु हान्ताः प्रविभज्य कीर्तिताः ॥ ५ ॥**

**दिह** उपचये, **दुह** प्रपूरणे, **मिह** सेचने, **रुह** बीजजन्मनि प्रादुर्भावे च, **वह** प्रापणे, **णह** बन्धने, **दह** भस्मीकरणे, **लिह** आस्वादने, इत्यष्टावनिटः। अत्र मुक्तसंशया इति किम्? तन्त्रान्तरे चत्वारोऽपरे धातवः पठ्यन्ते सहिरिहिमुहिलुहयः । तन्त्रान्तरं व्याकरणान्तरम् आपिशलादि ।

**दिशिं दृशिं दंशिमथो मृशिं स्पृशिं**
**रिशिं रुशिं क्रोशतिमष्टमं विशिम्।**
**लिशिञ्च शान्ताननिटः पुराणगाः**
**पठन्ति पाठेषु दशैव नेतरान्॥ ६॥**

शकारान्ता ये धातवः गणपाठेषु पठ्यन्ते तेषां मध्ये, पुराणगाः पुरातनशब्दशास्त्रेषु अतीव परिणतहृदया आचार्या इत्यर्थः—दश धातव एव अनिटः इति प्रवदन्ति नेतरान्। **दिश** अतिसर्जने, **दृशिर्** प्रेक्षणे, **दंश** दंशने, **मृश** आमर्शने, **स्पृश** संस्पर्शने, **रुश रिश** हिंसायाम्, **क्रुश** आह्वाने रोदने च, **विश** प्रवेशने, **लिश** अल्पीभावे, इति।

**रुधिस्सराधिर्युधिबन्धिसाधयः**
**क्रुधिक्षुधी बुध्यतिशुध्यती व्यधिः।**
**इमे तु धान्ता दश येऽनिटो मता-**
**स्ततः परं सिध्यतिरेव नेतरे॥ ७॥**

धकारान्ता ये धातवः तेषु इमे धातवः अनिटो मताः; **रुधिर्** आवरणे, **राध साध** संसिद्धौ, **युध** सम्प्रहारे, **बन्ध** बन्धने, **क्रुध** कोपे, **क्षुध** बुभुक्षायाम्, **बुध** ज्ञाने, **शुध** शौचे, **व्यध** ताडने, **षिधु** संशुद्धौ, इति।

**शिषिं पिषिं पुष्यतिशुष्यती त्विषिं**
**श्लिषिं विषिं तुष्यतिदुष्यती द्विषिम्।**
**इमान्दशैवोपदिशन्त्यनिड्विधौ**
**गणेषु षान्तान् कृषिकर्षती तथा॥ ८॥**

**शिषॢ** विश्लेषणे, **पिषॢ** सञ्चूर्णने, **पुष** पुष्टौ, **शुष** शोषणे, **त्विष** दीप्तौ, **श्लिष** आलिङ्गने, **विषॢ** व्याप्तौ, **तुष** तुष्टौ, **दुष** वैकृत्ये, **द्विष** अप्रीतौ, **कृष** विलेखने **कृष** आकर्षणे—भौवादिकस्तौदादिकश्च गृह्येते—इति द्वादश षान्ता अनिटः ।

**तपिन्तिपिञ्चापिमथो वपिं स्वपिं**
**लिपिं लुपिं तृप्यतिदृप्यती सृपिम् ।**
**स्वरेण नीचेन शपिं छुपिक्षिपी**
**प्रतीहि पान्तान् पठितांस्त्रयोदश ॥ ९ ॥**

**तप** सन्तापे **तप** ऐश्वर्ये—द्वयोरपि ग्रहणम्—**तिपृ** तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः, **आपॢ** व्याप्तौ, **डु वपू** बीजसन्ताने, **ञि ष्वपू** शये, **लिप** उपदेहे, **लुपॢ** छेदने, **तृप** प्रीणने, **दृप** प्रहर्षणामोचनयोः, **सृपॢ** गतौ, **शाप** आक्रोशे **शप** उपालम्भने, **छुप** स्पर्शे, **क्षिप** प्रेरणे, इति पान्ता अनिटः ।

**अर्दिं हर्दिं स्कन्दिभिदिच्छिदिक्षुदीन्**
**शर्दिं सर्दिं स्विद्यतिपद्यती खिदिम् ।**
**तुर्दिं नुर्दिं विद्यति विन्त इत्यपि**
**प्रतीहि दान्तान् दश पञ्च चानिटः ॥ १० ॥**

**अद** भक्षणे, **हद** पुरीषोत्सर्गे, **स्कन्दिर्** गतिशोषणयोः, **भिदिर्** विदारणे, **छिदिर्** द्वैधीकरणे, **क्षुदिर्** सम्पेषणे, **शदॢ** शातने, **षदॢ** विशरणगत्यवसादनेषु, **ञि ष्विदा** गात्रप्रक्षरणे, **पद** गतौ, **खिद** दैन्ये **खिद** परितापे, **तुद** व्यथने, **णुद** प्रेरणे, **विद** सत्तायाम् **विद** विचारणे, इति पञ्चदश दान्ता अनिटः । अत्र विद्यति इत्यविभक्तिको निर्देशः;

विन्त इत्यत्र इतिशब्देनाभिहितत्वात् अव्ययेनाभिहिते कर्मणि न कर्मविभक्तिः इति प्रतिषेधात् प्रतिषेधविषये प्रथमाविभक्तिर्भवति ।

**पचिं वचिं विचिरिरिचिरञ्जिपृच्छतीन्**
**सिचिं मुचिं णिजिभजिभञ्जिभृज्जतीन् ।**
**त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन्**
**भुजिं स्वजिं सृजिमृजि विद्ध्यनिट्स्वरान् ॥ ११ ॥**

अयमर्थः चकारान्तेषु षड्धातून् अनिट्स्वरान् विद्धि अनुदात्त-स्वरान् अनिट इत्यर्थः; छकारान्तेषु एकम्, जकारान्तेषु पञ्चदश धातून् अनिटः विद्धि इति । **डु पचष्** पाके, **वच** परिभाषणे ब्रुवादेशश्च, **विचिर्** पृथग्भावे, **रिचिर्** विरेचने, **रञ्ज** रागे, **प्रच्छ** ज्ञीप्सायाम्, **षिच** क्षरणे, **मुच्लृ** मोक्षणे, **णिजिर्** शौचपोषणयोः, **भज** सेवायाम्, **भञ्जो** आमर्दने, **भ्रस्ज** पाके, **त्यज** हानौ, **यज** देवपूजासङ्गतिकरणदानेषु, **युजिर्** योगे **युज** समाधौ—द्वयोरपि ग्रहणम्, **रुजो** भङ्गे, **षञ्ज** सङ्गे, **टु मस्जो** शुद्धौ, **भुज** पालनाभ्यवहारयोः **भुज** कौटिल्ये—द्वयोरपि ग्रहणम्, **ष्वञ्ज** परिष्वङ्गे, **सृज** विसर्गे, **मृजू** शुद्धौ **मृजू** शौचालङ्कारयोः; एते अनिटः । सृजिमृजि इत्यत्र मृजेः प्रमादपाठः; मृजू मृजू इत्येतयोरूदित्त्वादिड्विकल्पस्यावश्यकत्वात् । अयमर्थः काशिकावृत्त्यादौ च प्रपञ्चितः ॥

3. इति पचधातोः अनुदात्तत्वात् इडागमो न भवति । अथ चोः कुः (VIII.2.30.) इति कुत्वम्; लोपो व्योर्वलि (VI.1.66.) इति यकार-लोपः; सुट् तिथोः (III.4.107.) इति सुडागमः; षत्वष्टुत्वे च; **पक्षीष्ट, पक्षीयास्ताम्, पक्षीरन्** । नन्द्यात् । ध्वंसिषीष्ट । एवं स्रंसिषीष्ट । आदेच

उपदेशेऽशिति (VI. 1. 45.) इत्यात्वम्; सम्प्रसारणम्; हलः (VI. 4. 2.) इति दीर्घः—**वीयात्, वीयास्ताम्, वीयासुः। व्यासीष्ट।** अकृत्सार्वधातुकयोर्दीर्घः (VII. 4. 25.) इति दीर्घः—**जीयात्।विजेषीष्ट; इणः षीध्वम्लुङ्लिटांधोऽङ्गात्** (VIII. 3. 78.)—इणन्तादङ्गादुत्तरेषां षीध्वम्लुङ्लिटां धकारस्य मूर्धन्यादेशो भवति; **विजेषीढ्वम्। विभाषेटः** (VIII. 3. 79.)—इणः परो य इट् ततः परेषां षीध्वम्लुङ्लिटां धकारस्य वा मूर्धन्यादेशो भवति; **अयिषीढ्वम् अयिषीध्वम्।** उड्डयिषीष्ट, उड्डयिषीयास्ताम्, उड्डयिषीरन्; उड्डयिषीष्ठाः, उड्डयिषीयास्थाम्, उड्डयिषीढ्वम् उड्डयिषीध्वम्; उड्डयिषीय, उड्डयिषीवहि, उड्डयिषीमहि। नेषीष्ट। ह्रियात्; आहासीष्ट। मिह्यात्। क्रीड्यात्; अनुक्रीडिषीष्ट; एवं सम्परिपूर्वादप्युदाहार्यम्। उपगुह्यात्। **स्वरतिसूतिसूयतिधूञूदितो वा** (VII. 2. 44.)—स्वरत्यादिभ्यः ऊदिद्भ्यश्चोत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति। इति पक्षे इट्। अन्यत्र **लिङ्सिचावात्मनेपदेषु** (I. 2. 11.)—इक्समीपाद्धलः परौ झलादी लिङ्सिचौ आत्मनेपदेषु कितौ स्तः। इति कित्त्वात् गुणाभावः; हो ढः (VIII. 2. 31.) इति ढत्वम्; भष्भावः; षढोः कः सि (VIII. 2. 41.) इति कत्वम्; **उपगूहिषीष्ट**। इडभावपक्षे—**उपघुक्षीष्ट। स्वृ** शब्दोपतापयोः; गुणोऽर्तिसंयोगाद्योः (VII. 4. 29.) इति गुणः; **स्वर्यात्**। ष्ठीव्यात्। क्लम्यात्। आचम्यात्। क्रम्यात्। **स्नुक्रमोरनात्मनेपदनिमित्ते** (VII. 2. 36.)—स्नुक्रमोर्वलादेः आर्धधातुकस्य इट् स्यात् तौ चेदात्मनेपदनिमित्ते न भवतः; **प्रक्रंसीष्ट**। गम्यात्। यम्यात। **घुमास्थागापाजहातिसां हलि** (VI. 4. 66.) इत्यनुवर्तमाने, **एर्लिङि** (VI. 4. 67.)—घुसंज्ञकानामङ्गानां मा स्था

गा पा जहाति सा इत्येतेषाञ्च आकारस्य एकारादेशो भवति आर्धधातुके लिङि किति परतः; **पेयात्**। **वान्यस्य संयोगादेः** (VI. 4. 68.)—घुमास्थादिभ्योऽन्यस्य संयोगादेराकारान्तस्याङ्गस्य वा एकारादेशः आर्धधातुके किति लिङि परतः; **ग्लेयात् ग्लायात्, ध्मेयात् ध्मायात्**। अन्यस्येति किम्? **स्थेयात्**। दश्यात्। अर्यात्। स्त्रियात्। शद्यात्। निषद्यात्। इत्यादि॥

4. **अद्** भक्षणे; **अद्यात्**। आर्धधातुकत्वादात्मनेपदेषु सर्वत्र गुणो भवति; **शायिषीष्ट**। विभाषेटः (VIII. 3. 79.) इति विभाषा मूर्धन्यादेशः; **शायिषीढ्म् शायिषीध्वम्**। ब्रुवो वचिः; सम्प्रसारणम्; **उच्यात्**। कुत्वषत्वे; **वक्षीष्ट**। सुप्यात्। इज्यात्। उप्यात्। उह्यात्। **हनो वध लिङि** (II. 4. 42.)—हनो वध इत्ययमादेशो भवति आर्धधातुके लिङि परतः। अकारान्तोऽयमादेशः; अतो लोपः (VI. 4. 48.) इत्यकारलोपः; **वध्यात्; आवधिषीष्ट**। द्विष्यात्। कित्त्वात् गुणाभावः; षढोः कस्सीति कत्वम्; **द्विक्षीष्ट**। दुह्यात्। दादेर्धातोर्घः (VIII. 2. 32.) इति घत्वम्; भष्भावजश्त्वषत्वानि; **धुक्षीष्ट**। दिह्यात्; धिक्षीष्ट। लिह्यात्; लिक्षीष्ट। ईडिषीष्ट। ईशिषीष्ट। निंसिसीष्ट। रूयात्। यूयात्। नूयात्। स्तूयात्; स्तोषीष्ट। प्रोर्णूयात्; प्रोर्णुविषीष्ट। **विभाषोर्णोः** (I. 2. 3.)—ऊर्णुञः पर इडादिः प्रत्ययो वा ङिद्वत् भवति। इति पक्षे **प्रोर्णविषीष्ट**। **इण्** गतौ; अकृत्सार्वधातुकयोर्दीर्घः (VII. 4. 25.) इति **ईयात्**। सोपसर्गस्य तु, **उपसर्गाद्ध्रस्व ऊहतेः** (VII. 4. 23.) इति वर्तमाने, **एतेर्लिङि** (VII. 4. 24.)—एतेरङ्गस्योपसर्गादुत्तरस्य लिङि यकारादौ क्ङिति प्रत्यये परतः ह्रस्वो भवति; **समियात्**। **इङ्** अध्ययने; **अध्येषीष्ट**। **इक्** स्मरणे; **अधीयात्**। **पा**

रक्षणे ; एर्लिङि (VI. 4. 67.) इत्यनेन एत्वं न भवति, लुग्वि-करणालुग्विकरणयोरलुग्विकरणस्य ग्रहणम् (परि. १०.) इति न्यायात् ; **पायात्**। **ष्णा** शौचे ; धातुषकारस्य सत्वम् ; वान्यस्येत्यादिना (VI. 4. 68.) एत्वविकल्पः ; **स्नायात् स्नेयात्**। इत्यादि ॥

5. **हु** दानादनयोः ; अकृत्सार्वधातुकयोर्दीर्घः ; **हूयात्** । एर्लिङि (VI. 4. 67.) इति एत्वम् ; **विधेयात्**। देयात्। मेयात्। स्थेयात्। गेयात्। पेयात्। हेयात्। सेयात्। क्ङिति इत्येव, नेह ; **धासीष्ट, दासीष्ट**। **श्रदन्तरोरुपसर्गवद्वृत्तिरिष्यते** (भा. इ.) इति **श्रद्धासीष्ट, अन्तर्धासीष्ट**। इत्यादि। **दिवु** क्रीडादौ ; **दीव्यात्**। स्वरत्यादिना (VII. 2. 44.) वेट् ; **प्रसविषीष्ट, प्रसोषीष्ट**। इट्पक्षे विभाषेटः (VIII. 3. 79.) इति वा मूर्धन्यादेशः ; **प्रसविषीध्वम् प्रसविषीढ्वम्**। इडभावे इणः षीध्वमिति (VIII. 3. 78.) नित्यं मूर्धन्यादेशः ; **प्रसोषीढ्वम्**। **नहो धः** (VIII. 2. 34.)—नहो हकारस्य धकारादेशो भवति झलि परतः पदान्ते च। चर्त्वम् ; **नत्सीष्ट, नत्सीयास्ताम्, नत्सीरन्**। सीव्यात् ; परिषीव्यात् ; निषीव्यात् ; विषीव्यात्। त्रस्यात्। जनिषीष्ट। मृष्यात् ; मर्षिषीष्ट ; परिमृष्यात् ; इत्यादि। **षुञ्** अभिषवे ; **अभिषूयात्** ; **अभिषोषीष्ट**। **अशिषीष्ट** ; ऊदित्वादिडभावे व्रश्चादिना षत्वम् ; कुत्वम् ; **अक्षीष्ट**। चीयात्, चेषीष्ट। हीयात्। शक्यात्। श्रूयात्। दभ्यात्। ऋध्यात्। इत्यादि। **तुद** व्यथने ; **तुद्यात्**। **लिङ्सिचावात्मनेपदेषु** (I. 2. 11.) इति वर्तमाने, **उश्च** (I. 2. 12.)—ऋवर्णान्ताद्धातोः परौ लिङ्सिचावात्मनेपदेषु झलादी कितौ भवतः। इति कित्त्वाद्गुणाभावः ; **मृषीष्ट**। मुच्यात्। **इको झल्** (I. 2. 9.), **हल-**

**न्ताच्च** (I. 2. 10.), इति वर्तमाने, **लिङ्सिचावात्मनेपदेषु** (I. 2. 11.)—इक्समीपाद्धलः परौ लिङ्सिचौ झलादी आत्मनेपदेषु कितौ भवतः। इति कित्त्वम्; **मुक्षीष्ट**। इत्यादि। **रुधिर्** आवरणे; रुध्यात्। कित्त्वात् गुणाभावः; **रुत्सीष्ट**। भुज्यात्; भुक्षीष्ट। युज्यात्; युक्षीष्ट। भिद्यात्; भित्सीष्ट। इत्यादि। **तनु** विस्तारे; **तन्यात्; तनिषीष्ट**। रिङ् शयग्लिङ्क्षु (VII. 4. 28.) इति रिङादेशः; **क्रियात्; कृषीष्ट**। इत्यादि। **डु क्रीञ्** द्रव्यविनिमये; **क्रीयात्; क्रेषीष्ट**। **वृङ्** संभक्तौ; **वॄतो वा** (VII. 2. 38.) इति वर्तमाने, **लिङ्सिचोरात्मनेपदेषु** (VII. 2. 42.)—वॄत उत्तरयोः लिङ्सिचोरात्मनेपदेषु वा इडागमो भवति। **वॄतो वा** (VII. 2. 38.)—वॄ इति वृङ्वृञोः सामान्येन ग्रहणम्; तस्माद्दॄकारान्तेभ्यश्चोत्तरस्येटो वा दीर्घो भवति। इति दीर्घे प्राप्ते, **न लिङि** (VII. 2. 39.)—वॄत उत्तरस्येटो दीर्घो न भवति लिङि परतः; **वरिषीष्ट**। इडभावे **वृषीष्ट**। **वृञ्** वरणे; इटि **वरिषीष्ट**। पक्षे—उदोष्ठ्यपूर्वस्य (VII. 1. 102.) इति उत्वम्; हलि च (VIII. 2. 77.) इति दीर्घः; **वूर्षीष्ट**। **स्तॄञ्** आच्छादने; **आस्तरिषीष्ट, आस्तीर्षीष्ट**। **ग्रह** उपादाने; सम्प्रसारणम्; **गृह्यात्**। **ग्रहोऽलिटि दीर्घः** (VII. 2. 37.)—ग्रह उत्तरस्येटो दीर्घो भवति अलिटि परतः; **ग्रहीषीष्ट**। **ऋतश्च संयोगादेः** (VII. 2. 43.)—ऋकारान्तात्संयोगादेरुत्तरयोः लिङ्सिचोरात्मनेपदेषु वा इडागमो भवति; **ध्वरिषीष्ट, ध्वृषीष्ट; स्मरिषीष्ट, स्मृषीष्ट**। ऋकारान्तानामनुदात्तत्वादिट्प्रतिषेधे प्राप्ते पक्षे भावार्थमिदं वचनम्; तथैवोदाहृतम्। **चुर** स्तेये; णेरनिटि (VI. 4.

51.) इति णिलोपः ; अचो रहाभ्यां द्वे (VIII. 4. 46.) इति द्वित्वम् ; **चोर्य्यात् ; चोरयिषीष्ट** । पाल्यात् ; पालयिषीष्ट । अर्च्यात् ; अर्चयिषीष्ट । इत्यादि ॥

**इत्यार्धधातुकपरिच्छेदे आशीर्लिङ्प्रकरणम् ॥**

---

## अथ लिट्प्रकरणम् ॥

1. अथैतेभ्य एव धातुभ्यो लिट्। **भूते** (III. 2. 84.), **अनद्यतने लङ्** (III. 2. 111.), इति वर्तमाने, **परोक्षे लिट्** (III. 2. 115.)—प्रयोक्तुरदर्शनविषयः परोक्षः ; भूतानद्यतनपरोक्षार्थे वर्तमानाद्धातोः लिट् प्रत्ययो भवति । लस्य स्थाने तिबादयः । **लिट् च** (III. 4. 115.)—लिडादेशस्तिङार्धधातुकसंज्ञो भवति । नन्वेकसंज्ञाधिकारादन्यत्र संज्ञासमावेशसंभवात् सार्वधातुकसंज्ञापि स्यादिति चेत्, लङ्शाकटायनस्यैव (III. 4. 111.) इत्यतः एवकारानुवृत्त्या आर्धधातुकमेवेति नियमात्, आर्धधातुकत्वाच्छबादयो न भवन्ति । **भू** सत्तायाम् । **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः** (III. 4. 82.)—लिडादेशानां परस्मैपदसंज्ञकानां यथासंख्यं णल् अतुस् उस् थल् अथुस् अ णल् व म इत्येते आदेशा भवन्ति । **असंयोगाल्लिट् कित्** (I. 2. 5.) इत्यनुवर्तमाने, **इन्धिभवतिभ्यां च** (I. 2. 6.)—इन्धिभवतिभ्यां परो लिट्प्रत्ययः किद्भवति । कित्त्वाद्वृद्ध्यभावः गुणाभावश्च । **भुवो वुग्लुङ्लिटोः** (VI. 4. 88.)—भुवोऽङ्गस्य वुगागमो भवति अजाद्योर्लुङ्लिटोः परतः । भूव्+अ इति स्थिते, **एकाचो द्वे प्रथमस्य** (VI. 1. 1.), **अजादेर्द्वितीयस्य** (VI.1.2.), इत्यनुवर्तमाने, **लिटि धातोरनभ्यासस्य** (VI.1.8.)—लिटि परतः अनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचः, अजादेर्द्वितीयस्य

चा, यथायोगं द्वे भवतः । इति भूव् भूव्+अ इति जाते, **पूर्वोऽभ्यासः** (VI. 1. 4.)—अत्र ये द्वे विहिते तयोः पूर्वः अभ्याससंज्ञः स्यात्। इत्यभ्याससंज्ञायां, हलादिश्शेषः (VII. 4. 60.) इत्यभ्यासवकारलोपः; ह्रस्वः (VII. 4. 59.) इत्यभ्यासाचो ह्रस्वः। **भवतेरः** (VII. 4. 73.)—भवतेरभ्यासस्य अकारादेशो भवति लिटि परतः । भ भूव्+अ इति जाते, अभ्यासे चर्च (VIII. 4. 54.) इति चर्त्वम्; **बभूव** । आर्धधातुकस्येड्वलादेः (VII. 2. 35.) इतीट्; **बभूविथ** । इन्धेस्संयोगार्थं किन्त्वं भवतेः पिदर्थञ्च । **बभूव, बभूवतुः, बभूवुः; बभूविथ, बभूवथुः, बभूव; बभूव, बभूविव, बभूविम** । **श्रन्थिग्रन्थिदम्भिस्वञ्जीनां चेति वक्तव्यम्** (वा. I. 2. 26.); तेन कित्त्वात् नकारलोपे **परिषस्वजे** इत्यादि सिद्धम् ॥

2. **एध** वृद्धौ। **ह्रस्वं लघु** (I. 4. 10.), **संयोगे गुरु** (I. 4. 11.), इत्यनुवर्तमाने, **दीर्घञ्च** (I. 4. 12.)—दीर्घञ्च अक्षरं गुरुसंज्ञं भवति । इति एकारस्य गुरुसंज्ञायां, **कास्प्रत्ययादाममन्त्रे लिटि** (III. 1. 35.) इति वर्तमाने, **इजादेश्च गुरुमतोऽनृच्छः** (III. 1. 36.)—इजादिर्यो धातुः गुरुमान् ऋच्छतिवर्जितः तस्माल्लिटि परतः आमप्रत्ययो भवति । आम इति अकारोऽत्र मित्त्वप्रतिषेधार्थः कल्प्यते । तथाचोक्तम्—

आमोऽमित्त्वमदन्तत्वादगुणत्वं विदेस्तथा ।
आस्कासोराम्विधानाच्च पररूपं कतन्तवत् ॥

**मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजानिभ्यो लेः** । (II. 4. 80.) इत्यतः लेः इत्यनुवर्तमाने, **आमः** (II. 4. 81.)—लुगित्यनुवर्त-

माने च; आम उत्तरस्य लेः प्रत्ययस्य लुक् भवति। ततः कृदन्तत्वात् स्वाद्युत्पत्तिः। **कृन्मेजन्तः** (I. 1. 39.)—कृद्यो मकारान्त एकारान्तश्च तदन्तशब्दस्वरूपमव्ययसंज्ञं भवति। इति अव्ययसंज्ञायाम् **अव्ययादाप्सुपः** (II. 4. 82.) इति सुपो लुक्। **कृञ्चानुप्रयुज्यते लिटि** (III. 1. 40.)—आम्प्रत्ययान्ताद्धातोर्लिटि परतः कृञनुप्रयुज्यते। अत्र कृञ् इति प्रत्याहारेण कृभ्वस्तयो गृह्यन्ते। कथम्? **अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः** (V. 4. 50.) इत्यत्र कृ इत्यारभ्य, **कृञो द्वितीयतृतीयशम्बबीजात्कृषौ** (V. 4. 58.) इत्यत्र ञकारेण प्रत्याहारः। तत्सामर्थ्यादस्तेर्भूभावो न भवति॥

3. **आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य** (I. 3. 63.)—आम्प्रत्ययो यस्माद्विहितः सोऽयमाम्प्रत्ययः; तस्यैव धातोरनुप्रयुज्यमानात् कृञ आत्मनेपदं भवति। अकर्त्रभिप्रायार्थोऽयमारम्भः; अत्र कृञो ग्रहणं प्रत्याहारनिवृत्त्यर्थम्। **लिटस्तझयोरेशिरेच्** (III. 4. 81.)—लिडादेशयोस्तझयोः एश् इरेच् इत्येतावादेशौ भवतः। शकारस्सर्वादेशार्थः; चकारस्स्वरार्थः। गुणे प्राप्ते, **असंयोगाल्लिट् कित्** (I. 2. 5.)—असंयोगाद्धातोः परः अपिल्लिट् प्रत्ययः कित् भवति। कित्वात् गुणाभावः; परत्वाद्यणादेशः। **द्विर्वचनेऽचि** (I. 1. 59.)—द्वित्वनिमित्तेऽचि परतः योऽजादेशः सः द्विर्वचन एव कर्तव्ये स्थानिवद्भवति। रूपातिदेशोऽयं नियतकालः; कृते द्विर्वचने, पुनः आदेशरूप एवावतिष्ठते; इति स्थानिवद्भावात् द्विर्वचनम्। उरत् (VII. 4. 66.) इत्यत्वम्; हलादिश्शेषः (VII. 4. 60.); **एधांचक्रे**। इणष्षीध्वमिति (VIII. 3. 78.) मूर्धन्यादेशः; **एधांचकृढ्वे**। असंयोगादिति किम्? सस्रंसे। अत्र कित्त्वाभावादनिदितामिति (VI. 4. 24.) नलोपो न भवति। अपि-

दित्येव; बिभेदिथ । **एधांबभूव** । **अत आदेः** (VII. 4. 70.)—अभ्यासस्यादेरकारस्य दीर्घो भवति; **एधामास** । एधाञ्चक्रे, एधाञ्चक्राते, एधाञ्चक्रिरे; एधाञ्चकृषे, एधाञ्चक्राथे, एधाञ्चकृढ्वे; एधाञ्चक्रे, एधाञ्चकृवहे, एधाञ्चकृमहे । एधाम्बभूव, एधाम्बभूवतुः, एधाम्बभूवुः; एधाम्बभूविथ, एधाम्बभूवथुः, एधाम्बभूव; एधाम्बभूव, एधाम्बभूविव, एधाम्बभूविम । एधामास, एधामासतुः, एधामासुः; एधामासिथ, एधामासथुः, एधामास; एधामास, एधामासिव, एधामासिम । पुनस्तथान्येऽपीजादयः । **ईक्ष** दर्शने, **ईह** चेष्टायाम्, **ऊह** वितर्के, **उब्ज** आर्जवे, **उम्भ** पूरणे, इत्येवमादयः । **ईक्षाञ्चक्रे; ईहाञ्चक्रे; ऊहाम्बभूव; उब्जामास; उम्भाम्बभूव** । इजादेरिति वचनाद्धलादेर्गुरुमतो न भवत्याम्प्रत्ययः; **तक्षू त्वक्षू** तनूकरणे, **रक्ष** पालने—**ततक्ष, तत्वक्ष, ररक्ष** । यो हि गुरुमान्न भवति ततो न भवत्याम्प्रत्ययः । **इषु** इच्छायाम्; पित्सु लघूपधगुणः; अजादित्वेऽपि द्वितीयस्यैकाचोऽभावात्, अजादेर्द्वितीयस्य (VI. 1. 2.) इत्यस्य अप्रवृत्तेः, लिटि धातोरनभ्यासस्य (VI. 1. 8.) इति प्रथमस्यैकाचो द्विर्वचनम्; हलादिश्शेषः; ह्रस्वः (VII. 4. 59.) इत्यभ्यासस्य ह्रस्वो भवति; एच इग्घ्रस्वादेशे (I. 1. 48.) इत्यचः स्थाने इक्; अभ्यासस्यासवर्णे (VI. 4. 78.) इति इयङ्; अपित्सु कित्त्वात् गुणाभावे सवर्णदीर्घः; **इयेष, ईषतुः, ईषुः; इयेषिथ, ईषथुः, ईष; इयेष, ईषिव, ईषिम** । **ऋच्छ** गतौ; अनृच्छ इति (III.1.36.) प्रतिषेधादाम्प्रत्ययो न भवति; **ऋच्छत्यृताम्** (VII. 4. 11.)—ऋच्छतेरङ्गस्य ऋ इत्येतस्य ऋकारान्तानाञ्च लिटि परतो गुणो भवति । रपरत्वम्; अत आदेः (VII. 4. 70.) इति दीर्घः । **तस्मान्नुड्द्विहलः** VII.4.71.)—तस्माद्दीर्घीभूतादभ्यासादुत्तरस्य द्विहलोऽङ्गस्य नुडागमो

भवति; **आनर्च्छ, आनर्च्छतुः, आनर्च्छुः; आनर्च्छिथ, आनर्च्छथुः, आनर्च्छ; आनर्च्छ, आनर्च्छिव, आनर्च्छिम** । ऋ इत्येतस्य **ऋ** गतौ; **आर, आरतुः, आरुः** । **इडत्त्यर्तिव्ययतीनाम्** (VII. 2. 66.)—अत्त्यर्तिव्ययतीनां थलि परतः इडागमो नित्य भवति । इतीडागमः; **आरिथ** । ॠकारान्तानां **कॄ** विक्षेपे; **निचकार, निचकरतुः, निचकरुः** । एवं **गॄ** निगरणे—**निजगार, निजगरतुः, निजगरुः** । ऋच्छेरलघूपधत्वादप्राप्तो गुणो विधीयते; इतरयोः प्रतिषेधविषयनिवृत्त्यर्थम्; वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरेवेष्यते, तथैवोदाहृतञ्च । **शॄदॄप्रां ह्रस्वो वा** (VII. 4. 12.)—शॄ दॄ पॄ इत्येतेषामङ्गानां लिटि परतो वा ह्रस्वो भवति; पक्षे गुणः—**विशशार, विशशरतुः विशश्रतुः, विशशरुः विशश्रुः; विददार, विददरतुः विदद्रतुः, विददरुः विदद्रुः; निपपार, निपपरतुः निपप्रतुः, निपपरुः निपप्रुः** । केचिदेतत्सूत्रं प्रत्याचक्षते; श्रा पाके, द्रा कुत्सायां गतौ, प्रा पूरणे, इत्येतेषाम् अनेकार्था धातव इति शॄदॄप्रामर्थे वर्तमानानाम् आतो लोपः (VI. 4. 64.) इत्याकारलोपे विशश्रतुः, विदद्रतुः, निपप्रतुः, इत्येवमादीनि रूपाणि साधयन्ति; तथा च सति विशश्रवान् इति क्वसौ न स्यात् । **दय** दानगतिरक्षणेषु; **अय** गतौ; **आस** उपवेशने; **दयायासश्च** (III. 1. 37.)—दयादिभ्यो धातुभ्यो लिटि परत आम्प्रत्ययो भवति; **दयांचक्रे** । अयः परापूर्वः; **उपसर्गस्यायतौ** (VIII. 2. 19.)—अयतौ परत उपसर्गस्थो यो रेफस्तस्य लकारादेशो भवति; इति लत्वम्—**पलायांचक्रे** । एवम् **आसांचक्रे** । **उषविदजागृभ्योऽन्यतरस्याम्** (III. 1. 38.)—उष दाहे, विद ज्ञाने, जागृ

निद्राक्षये, इत्येतेभ्यो धातुभ्यो लिटि परतः आम्प्रत्ययो भवति अन्यतरस्याम्; **ओषांचकार**। आमभावपक्षे **उवोष**। विदेरदन्तत्वप्रतिज्ञानादामि परतो गुणो न भवति—**विदांचकार**; आमभावपक्षे **विवेद**। सार्वधातुकार्धधातुकयोः (VII. 3. 84.) इति गुणः—**जागरांचकार**; आमभावपक्षे **जजागार**। जाग्रोऽविचिण्णल्ङित्सु (VII. 3. 85.) इति गुणः; **जजागरतुः, जजागरुः, जजागरिथ**, इत्यादि ॥

4. **डु पचष्** पाके; अत उपधायाः (VII. 2. 116.) इति वृद्धिः; **पपाच**। **घ्वसोरेद्धावभ्यासलोपश्च** (VI. 4. 119.) इति वर्तमाने, **अत एकहल्मध्येऽनादेशादेर्लिटि** (VI. 4. 120.)—किति लिटि परतः आदेश आदिर्यस्याङ्गस्य नास्ति तस्य एकहल्मध्ये असहाययोर्हलोर्मध्ये योऽकारस्तस्य एकारादेशो भवति अभ्यासलोपश्च; **पेचतुः, पेचुः**। अत इति किम्? दिदिवतुः। तपरकरणं किम्? ररासे। एकहल्मध्ये इति किम्? ततसरतुः, चक्षरतुः। अनादेशादेरिति किम्? चकणतुः, जगणतुः। एतदेव ज्ञापकं प्रत्युदाहरणमनित्यण्यन्ताश्चुरादयः इत्यस्य; अन्यथा गणयतेश्चौरादिकत्वात् प्रत्ययान्तत्वेन आम्प्रत्ययः स्यात्। लिटि परतः इति आदेशविशेषणं किम्? इहापि यथा स्यात्—नेमतुः, सेहे। **कृ-सृ-भृ-वृ-स्तु-द्रु-स्रु-श्रुवो लिटि** (VII. 2. 13.)—क्रादीनां धातूनां लिटि परत इडागमो न भवति। क्रादय एव लिट्यनिटः ततोऽन्ये सेटो लिटि इति नियमादन्येषाम् इटि प्राप्ते, **अचस्तास्वत्थल्यनिटो नित्यम्** (VII. 2. 61.)—अजन्तो यो धातुस्तासौ नित्यमनिट् तस्मात्तासाविव थलि इडागमो न भवति। तास्वदिति किम्? लूत्वा, लुलविथ। लूत्वेत्यत्र श्र्युकः किति (VII. 2. 11.) इत्यनिट्। नित्यमिति किम्? विधोता विधविता, विदुधविथ। अत्र स्वरत्यादिना वेट्। **उपदेशेऽत्वतः**

(VII. 2. 62.)—उपदेशे यो धातुरकारवान् तासौ नित्यमनिट् तस्मात्तासाविव थलि इडागमो न भवति । उपदेश इति किम्? कर्ष्टा, चकर्षिथ । तास्वदित्येव; जिघृक्षति, जग्रहिथ; सनि ग्रहगुहोश्च (VII. 2. 12.) इति सन्यनिट् । नित्यमित्येव; अङ्क्ता अञ्जिता, आनञ्जिथ । एवं क्रादिनियमलब्धेटः प्रतिषेधे प्राप्ते, **ऋतो भारद्वाजस्य** (VII. 2. 63.)—ऋकारान्तो यो धातुस्तासौ नित्यमनिट् तस्मात् तासाविव थलि इडागमो न भवति भारद्वाजस्य मतेन । इति नियमात् पक्षे इट् । **थलि च सेटि** (VI. 4. 121.)—थलि परतः अनादेशादेरङ्गस्य असहाययो-र्हलोर्मध्ये योऽकारस्तस्य एकारादेशो भवति अभ्यासलोपश्च; **पेचिथ** । अन्येषां मतेनेट्प्रतिषेध एव; तदानीमेत्वाभ्यासलोपौ न भवतः; चोः कुः इति कुत्वम्; **पपक्थ** । **पेचथुः**, **पेच** । **णलुत्तमो वा** (VII. 1. 91.)—उत्तमपुरुषसम्बन्धी यो णल् स वा णिद्भवति । णिति यत् कार्यं तदत्रापि वा भवतीत्यर्थः । अत उपधायाः (VII. 2. 116.) इति पक्षे वृद्धिः; **पपाच पपच** । क्रयादिनियमान्नित्यमिट्; **पेचिव, पेचिम** । उत्तमपुरुषविषये चित्तविक्षेपादिना परोक्षता सम्भवत्येव । आत्मनेपदे लिटस्तझयोरेशिरेच् (III. 4. 81.) इति बहुवचनस्य एक-वचनस्य च यथाक्रमम् इरे ए इति भवतः; **पेचे, पेचाते, पेचिरे; पेचिषे, पेचाथे, पेचिध्वे; पेचे, पेचिवहे, पेचिमहे** ॥

5. पुनरप्यकारोपधा धातवः । डु लभष् प्राप्तौ; लेभे, लेभाते, लेभिरे । रभ राभस्ये; आरेभे, आरेभाते, आरेभिरे । रमु क्रीडायाम्; रेमे; विर-राम, विरेमतुः, विरेमुः; विरेमिथ विरन्थ । व्याङ्परिभ्यो रमः (I. 3. 83.) इति परस्मैपदम् । नद अव्यक्ते शब्दे; ननाद, नेदतुः, नेदुः; नेदिथ, प्रणिनेदिथ । रण शब्दे; रराण, रेणतुः, रेणुः; रेणिथ । यम उपरमे;

ययाम, येमतुः, येमुः; येमिथ ययन्थ। दमु उपशमे; ददाम, देमतुः, देमुः; देमिथ। हस हसने; जहास, जहसतुः, जहसुः। भण शब्दे; बभाण, बभणतुः, बभणुः। णम प्रह्वत्वे शब्दे च; ननाम, नेमतुः, नेमुः; नेमिथ ननन्थ। षहँ मर्षणे; सेहे, सेहाते, सेहिरे। अनैमित्तिके नत्वसत्वे अत्र धात्वोः; तदादिर्लिट्यादेशादिर्न भवति; अतः एत्वाभ्यासलोपौ। इहाभ्यासस्य जश्त्वचर्त्वयोरसिद्धत्वं नास्ति; तेन तदादिरप्यादेशादिर्भवति। कथमेतत् ज्ञायते नास्ति असिद्धत्वमिति? तथा च फलिभज्योरेत्वं विधीयते तॄफलभजत्रपश्च (VI. 4. 122.) इति। तस्मात्फलभजोरेत्वविधानादेव सिद्धान्ते जश्त्वचर्त्वयोरिह नास्त्यसिद्धत्वमिति। रूपाभेदे चादेशादिर्नाश्रीयते न शसददवादिगुणानाम् (VI. 4. 126.) इति शसिदद्योरेत्वप्रतिषेधो विधीयते; तस्मादेतदेव प्रतिषेधवचनं ज्ञापयति रूपाभेदे य आदेशः स इह न गृह्यत इति। अन्यथा पेचतुः, पेचुः, पेठतुः, पेठुः, इत्यादीनां प्रकृतिचरादेशादीनामेत्वं न स्यात्। किति इत्येव; अहं पपच, अहं पपठ। अत्र स्थानिवद्भावेन पित्त्वात् कित्त्वं नास्ति; तेनैत्वाभ्यासलोपौ न भवतः। वृद्धिरपि न भवति, णलुत्तमो वेति (VII. 1. 91.) पक्षे णित्त्वाभावात्। णित्त्वपक्षेऽपि परत्वात् वृद्ध्या बाधितत्वात् एत्वाभ्यासलोपाभ्यां न भवितव्यमित्यणित्त्वपक्ष एवोदाहृतः। **दम्भेरेत्वं वक्तव्यम्** (वा. VI. 4. 120.)—इति **ददम्भ, देभतुः, देभुः; ददम्भिथ**। नलोपस्यासिद्धत्वादत्रापि एत्वं न प्राप्नोतीति वचनम्। **तॄफलभजत्रपश्च** (VI. 4. 122.)—तॄ फल भज त्रप इत्येतेषामतः स्थाने एकारादेशो भवति, अभ्यासलोपश्च किति लिटि परतः थलि च सेटि। ऋच्छत्यॄताम् (VII. 4. 11.) इति गुणः; **ततार, तेरतुः, तेरुः; तेरिथ**। फल निष्पत्तौ; पफाल, फेलतुः, फेलुः; फेलिथ। भज सेवायाम्; बभाज, भेजतुः,

भेजुः; भेजिथ । भजिः स्वरितेत्; भेजे । त्रपि—त्रेपे, त्रेपाते । तरतेर्गुणार्थं वचनम्; न शसददवादिगुणानाम् (VI. 4. 126.) इति प्रतिषेधो वक्ष्यते । फलिभज्योरादेशार्थम्; त्रपेरनेकहल्मध्यार्थम् । **श्रन्थि ग्रन्थि** सन्दर्भे, **ष्वञ्ज** परिष्वङ्गे, इत्येतेषां धातूनाम्, **इन्धिभवतिभ्याञ्च** (I. 2. 6.) इत्यत्र **श्रन्थिग्रन्थिदम्भिष्वञ्जीनां चेति वक्तव्यम्** (वा.) इति लिटः कित्त्वात् अनिदितामिति (VI. 4. 24.) नलोपः । ततः तॄफलभजत्रपश्च (VI. 4. 122.) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् श्रन्थिग्रन्थिदन्भीनां त्रयाणामेत्वाभ्यासलोपौ भवतः; **शश्रन्थ, श्रेथतुः, श्रेथुः** । ददन्भ, देभतुः, देभुः; देभिथ । परिषस्वजे, परिषस्वजाते, परिषस्वजिरे । इन्धी दीप्तौ; अस्माल्लिटि इन्धिभवतिभ्याञ्च (I. 2. 6.) इति कित्त्वम्; समीधे; समीधाते, समीधिरे । **राधो हिंसायाम्** (VI. 4. 123.)—राधो हिंसार्थे वर्तमानस्य अवर्णस्य एकारादेशो भवति, अभ्यासलोपश्च किति लिटि परतः, थलि च सेटि; **अपरराध, अपरेधतुः, अपरेधुः; अपरेधिथ** । हिंसायामिति किम्? **आरराध, आरराधतुः आरराधुः** । अत इत्येतदिहोपस्थितं तपरत्वकृतं कालविशेषमपास्य असम्भवात् अवर्णमात्रं प्रतिपादयति । अथवा—आभ्यस्तयोरातः (VI. 4. 112.) इत्यनुवर्तत इति वा व्याख्येयम् । **वा जॄभ्रमुत्रसाम्** (VI. 4. 124.)—जॄ भ्रमु त्रस् इत्येतेषामतस्स्थाने एकारादेशो वा भवति, अभ्यासलोपश्च किति लिटि परतः, थलि च सेटि; **जजार, जजरतुः जेरतुः, जजरुः जेरुः; जेरिथ जजरिथ** । भ्रमु—बभ्राम, बभ्रमतुः भ्रेमतुः, बभ्रमुः भ्रेमुः, बभ्रमिथ भ्रेमिथ । त्रस—तत्रास, त्रेसतुः तत्रसतुः, त्रेसुः तत्रसुः; त्रेसिथ तत्रसिथ । **फणाञ्च**

**सप्तानाम्** (VI. 4. 125.)—फण गतौ, राजृ दीप्तौ, टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ, स्यमु स्वन ध्वन शब्दे इत्येतेषां सप्तानां धातूनामवर्णस्य स्थाने वा एकारादेशो भवति, अभ्यासलोपश्च किति लिटि परतः, थलि च सेटि; **पफाण, पफणतुः फेणतुः, पफणुः फेणुः; पफणिथ फेणिथ**। एवमेव रराज, रेजतुः रराजतुः, रेजुः रराजुः; रेजिथ रराजिथ। बभ्राजे भ्रेजे, बभ्राजाते भ्रेजाते, बभ्राजिरे भ्रेजिरे। भ्रेशे, भ्रेशाते, भ्रेशिरे; बभ्राशे, बभ्राशाते, बभ्राशिरे। भ्लेशे, भ्लेशाते, भ्लेशिरे; बभ्लाशे, बभ्लाशाते, बभ्लाशिरे। सस्याम, सस्यमतुः स्येमतुः, सस्यमुः स्येमुः; सस्यमिथ स्येमिथ। सस्वान, सस्वनतुः स्वेनतुः, सस्वनुः स्वेनुः; सस्वनिथ स्वेनिथ। सप्तानामिति किम्? **दध्वान, दध्वनतुः, दध्वनुः, दध्वनिथ। न शसददवादिगुणानाम्** (VI. 4. 126.)—शसु हिंसायाम्, दद दाने, इत्येतयोः वकारादीनां च धातूनां गुण इत्येवमभिनिर्वृत्तस्य च योऽकारः तस्य स्थाने एकारादेशो भवति, अभ्यासलोपश्च; **विशशास, विशशसतुः, विशशसुः, विशशसिथ**। दद दाने—ददद, दददाते, दददिरे; दददिषे। वादीनाम्—टुवमु उद्गिरणे; ववाम, ववमतुः, ववमुः; ववमिथ। गुणस्योदाहरणम्—शॄ हिंसायाम्; विशशार, विशशरतुः, विशशरुः; विशशरिथ। एवमेव—निपपार, निपपरतुः, निपपरुः; निपपरिथ। लुलविथ; ननन्द; दध्वंसे; सस्रंसे; बभ्रंसे॥

6. व्येञः आदेच इति (VI. 1. 45.) आत्वे प्राप्ते, **न व्यो लिटि** (VI. 1. 46.)—व्येञो लिटि परतः आकारादेशो न भवति। **लिट्यभ्यासस्योभयेषाम्** (VI. 1. 17.)—उभयेषां वच्यादीनां ग्रहिज्यादीनां च लिटि परतोऽभ्यासस्य सम्प्रसारणं भवति। इत्यभ्यासयकारस्य सम्प्रसारणे, सम्प्रसारणाच्च (VI. 1. 108.) इति पूर्वरूपे च कृते, **अचो ञ्णिति**

(VII. 2. 115.) इति वृद्धिः; आयादेशः; **विव्याय** । द्विवचनादिष्व-पित्सु कृतसम्प्रसारणस्य द्विर्वचनम्; एरनेकाच इति (VI. 4. 82.) यणादेशः; **विव्यतुः, विव्युः** । **इडत्त्यर्तिव्ययतीनाम्** (VII. 2. 66.)—अत्ति अर्ति व्ययति इत्येतेषां च थलि परतः इडागमो भवति; **विव्ययिथ** । डु वप् बीजसन्ताने; लिटि द्वित्वे, लिट्यभ्यासस्योभयेषाम् (VI. 1. 17.) इति सम्प्रसारणं पूर्वरूपत्वञ्च; अत उपधायाः (VII. 2. 116.) इति वृद्धिः; **उवाप** । अपित्सु आदौ सम्प्रसारणं विधाय पश्चाद्द्विर्वचनं ततः सवर्णदीर्घः; **ऊपतुः, ऊपुः; उवप्थ उवपिथ** । **जि** जये; **सन्लिटोर्जेः** (VII. 3. 57.)—जयतेरङ्गस्य सन्लिटोः परतः अभ्यासादुत्तरस्य कवर्गादेशो भवति । स च आदेः परस्य (I. 1. 54.) इति परस्य आदेः जकारस्य भवति; वृद्धिः; **जिगाय, जिग्यतुः, जिग्युः; जिगयिथ जिगेथ, जिग्यथुः, जिग्य; जिगाय जिगय, जिग्यिव, जिग्यिम; विजिग्ये, पराजिग्ये** । **ष्मिङ्** ईषद्धसने; संयोगपूर्वत्वादियङादेशः; **विसिष्मिये, विसिष्मियाते, विसिष्मियिरे** । क्षि क्षये; चिक्षाय, चिक्षियतुः, चिक्षियुः । एवमेव शिश्राय, शिश्रियतुः, शिश्रियुः। डीङ्—डिड्ये । णीञ्—निनाय, निन्ये । मिह—मिमेह । क्रीड़—चिक्रीड, अनुचिक्रीडे, सञ्चिक्रीडे, परिचिक्रीडे । गुहू संवरणे; जुगूह, जुगुहतुः, जुगुहुः; उपजुगुहे । गुजि अव्यक्ते शब्दे; जुगुञ्ज, जुगुञ्जतुः, जुगुञ्जुः । इत्यादि ॥

7. **अद** भक्षणे । **लुङ्सनोर्घस्लृ** (II. 4. 39.) इति वर्तमाने, **लिट्यन्यतरस्याम्** (II. 4. 40.)—लिटि परतोऽदेर्घस्लादेशो भवति अन्यतरस्याम् । कुहोश्चुः (VII. 4. 62.) इति कुत्वम्; अत उप-

धायाः (VII. 2. 116.) इति वृद्धिः; **जघास**। गमहनजनखनघसां लोपः क्ङित्यनङि (VI. 4. 98.) इत्यनेनोपधालोपः; घकारस्य चर्त्वम्; **शासिवसिघसीनाञ्च** (VIII. 3. 60.)—निमित्तादुत्तरस्य शासिवसिघसीनां सकारस्य मूर्धन्यादेशो भवति; **जक्षतुः, जक्षुः**। अचस्तास्वत्थल्यनिटो नित्यम् (VII. 2. 61.) इति थलि इटो निषेधः तासौ सत इत्युक्तम्; तेन घस्लादेशस्य तासौ असत्त्वान्नात्र निषेधः; **जघसिथ**। अदेर्घस्लादेशाभावपक्षे, अत आदेः (VII. 4. 70.) इति दीर्घः; **आद, आदतुः, आदुः**। इडत्त्यर्तिव्ययतीनाम् (VII. 2. 66.) इति नित्यम् इट्; **आदिथ**। **शीङ्**; अधिशिश्ये, अधिशिश्याते, अधिशिश्यिरे ॥

8. इतः परं सम्प्रसारणम्। **ब्रूञ्**; ब्रुवो वचिः (II. 4. 53.); द्विर्वचनम्; लिट्यभ्यासस्योभयेषाम् (VI. 1. 17.) इति सम्प्रसारणम्; अत उपधायाः (VII. 2. 116.) इति वृद्धिः; **उवाच**। द्विवचनादौ किति वचिस्वपियजादीनां किति (VI. 1. 15.) इति कृतसम्प्रसारणस्य द्विर्वचनम्; **ऊचतुः, ऊचुः; उवचिथ उवक्थ; ऊचे**। **ञि ष्वप्** शये; द्वित्वसंप्रसारणे; आदेशप्रत्यययोः (VIII. 3. 59.) इति षत्वम्; सुष्वाप, सुषुपतुः, सुषुपुः; सुष्वपिथ सुष्वप्थ। यजादयो नव धातवः। **यज**; इयाज, ईजतुः ईजुः; इयजिथ। इडभावे—व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः (VIII. 2. 36.) इति षत्वम्; ष्टुत्वम्; **इयष्ठ**। ईजे इत्यादि। **वह** प्रापणे; उवाह, ऊहतुः, ऊहुः; उवहिथ। इडभावे—हो ढः (VIII. 2. 31.) इति ढत्वम्; झषस्तथोर्धोऽधः (VIII. 2. 40.) इति धत्वम्; ष्टुत्वम्; ढो ढे लोपः (VIII. 3. 13.) इति ढकारस्य लोपः; **सहिवहोरोदवर्णस्य** (VI. 3. 112.)—सहि वहि इत्येतयोरवर्णस्य ओकारादेशो भवति ढलोपे; **उवोढ**। **वेञ्**; लिट्यन्य-

तरस्याम् (II. 4. 40.) इति वर्तमाने, **वेञो वयिः** (II. 4. 41.)—वेञो वयिरादेशो भवति लिटि परतोऽन्यतरस्याम् । इकार उच्चारणार्थः; द्विर्वचनम्; यकारस्य सम्प्रसारणे प्राप्ते, न सम्प्रसारणे सम्प्रसारणम् (VI. 1. 37.) इति वर्तमाने, **लिटि वयो यः** (VI. 1. 38.)—लिटि परतो वयो यकारस्य सम्प्रसारणं न भवति । इति यकारस्य प्रतिषेधात् वकारस्य सम्प्रसारणम्; **उवाय** । द्विवचनादौ किति ग्रहिज्येत्यादिना (VI. 1. 16.) सम्प्रसारणम्; **ऊयतुः**, **ऊयुः** । **वश्चास्यान्यतरस्यां किति** (VI. 1. 39.)—अस्य वयो यकारस्य किति लिटि परतो वकारादेशो भवति अन्यतरस्याम्; **ऊवतुः**, **ऊवुः** । **ऊये**, **ऊयाते**, **ऊयिरे**; **ऊवे**, **ऊवाते**, **ऊविरे** । यदा वेञो वयिरादेशो न भवति, तदा **न सम्प्रसारणे सम्प्रसारणम्** (VI. 1. 37.) इति वर्तमाने, **वेञः** (VI. 1. 40.)—वेञ् तन्तुसन्ताने इत्यस्य धातोः लिटि परतस्सम्प्रसारणं न भवति । आदेच उपदेशेऽशिति (VI. 1. 45.) इत्यात्वम् । द्वित्वम्; अभ्यासकार्यं च । **आत औ णलः** (VII. 1. 34.)—आकारान्तादङ्गादुत्तरस्य णल औकारादेशो भवति । इत्यौकारादेशः; वृद्धिरेचि इति वृद्धिः; **ववौ** । **आतो लोप इटि च** (VI. 4. 64.)—इटि अजादावार्धधातुके क्ङिति परतः आकारस्य लोपो भवति; **ववतुः**, **ववुः** । इट्पक्षे **वविथ**; अन्यथा **ववाथ** । **ववे**, **ववाते**, **वविरे** । **ह्वेञ्**; आत्वम्; **अभ्यस्तस्य च** (VI. 1. 33.)—ह्व इत्यनुवर्तते; सम्प्रसारणमित्येव; अभ्यस्तस्य कारणं च यो ह्वयतिः तस्य द्विर्वचनात् प्रागेव सम्प्रसारणं भवति । ततो द्वित्वम् अभ्यासकार्यं च; **जुहाव** । उवङादेशः; **जुहुवतुः**, **जुहुवुः**; जुहविथ जुहोथ, जुहुवथुः, जुहुव; **जुहुवे** । **वद्**; उवाद, ऊदतुः, ऊदुः । **वस** निवासे; **उवास**;

शासिवसिघसीनाञ्च (VIII. 3. 60.) इति षत्वम्; **ऊषतुः, ऊषुः** ; उवसिथ उवस्थ । **टु ओ श्वि** गतिवृद्धयोः; **विभाषा श्वेः** (VI. 1. 30.)—लिटि परतश्श्वयतेर्धातोर्विभाषा सम्प्रसारणं भवति ; **शुशाव, शुशुवतुः, शुशुवुः; शुशविथ** । यदा सम्प्रसारणन्न भवति तदा **शिश्वाय, शिश्वियतुः, शिश्वियुः; शिश्वयिथ** । **ग्रह्**; ग्रहिज्येत्यादिना (VI. 1. 16.) सम्प्रसारणम्; **जग्राह, जगृहतुः, जगृहुः; जगृहे** । **ज्या**; द्विर्वचनम्; लिट्यभ्यासस्योभयेषाम् (VI. 1. 17.) इति सम्प्रसारणम्; पूर्वरूपत्वम्; आत औ णलः (VII. 1. 34.) इति औकारः; वृद्धिः; **जिज्यौ** । कृतसम्प्रसारणस्य द्विर्वचनम्; एरनेकाच इत्यादिना (VI. 4. 82.) यणादेशः; **जिज्यतुः, जिज्युः**। थलि—आतो लोप इटि च (VI. 4. 64.) इत्याकारलोपः; **जिज्यिथ जिज्याथ** । **व्यध्** ताडने; विव्याध, विव्यधतुः, विव्यधुः; विव्यधिथ विव्यत्थ । **वश्**; उवाश, ऊशतुः, ऊशुः; उवशिथ । **व्यच्**; **विव्याच, विविचतुः, विविचुः; विव्यचिथ** । **ओ व्रश्च्** छेदने; द्विर्वचनम्; लिट्यभ्यासस्योभयेषाम् (VI. 1. 17.) इति सम्प्रसारणम्; पूर्वरूपत्वम्; उरत् (VII. 4. 66.) इति ऋकारस्य अत्वम्; हलादिश्शेषः; **वव्रश्च**। अत्र संयोगान्तत्वात् कित्त्वाभावः; अतस्सम्प्रसारणं न भवति । एवमुत्तरयोरपि कित्त्वाभावः संयोगान्तत्वात्; **वव्रश्चुः; वव्रश्चिथ**। इडभावे—व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः (VIII. 2. 36.) इति षत्वम्; ष्टुत्वम्; **वव्रष्ठ** । **प्रच्छ्**; पप्रच्छ, पप्रच्छतुः, पप्रच्छुः; पप्रच्छिथ । इडभावे पूर्ववत् षत्वष्टुत्वे; पप्रष्ठ। आङ्पूर्वः;

**आपप्रच्छे** । भ्रस्जेः श्चुत्वेन सस्य शः, जश्त्वेन शस्य जः ; द्विर्वचनादि ; **बभ्रज्ज** । संयोगान्तत्वात् कित्त्वाभावः ; **बभ्रज्जतुः, बभ्रज्जुः ; बभ्रज्जिथ बभ्रष्ठ** । **भ्रस्जो रोपधयो रमन्यतरस्याम्** (VI. 4. 47.)—भ्रस्जो रोपधयो रेफोपधयोः निवृत्तिर्भवति रमागमश्चार्धधातुके परतोऽन्यतरस्याम् । रोपधयोरिति स्थानषष्ठीनिर्देशस्य तयोर्निवृत्तिरेव प्रयोजनं मित्त्वाच्चाग्रमन्त्यात्परो रमागमः ; **बभर्ष्ठ बभर्ज, बभर्जिथ** । **बभ्रज्जे, बभ्रज्जाते, बभ्रज्जिरे ; बभर्जे, बभर्जाते, बभर्जिरे** । **द्युत** दीप्तौ ; **द्युतिस्वाप्योस्सम्प्रसारणम्** (VII. 4. 67.)—द्युति स्वापि इत्येतयोरभ्यासस्य सम्प्रसारणं भवति । हलादिशेषापवादः ; **विद्युते, विद्युताते, विद्युतिरे** । **व्यथ** भयसंचलनयोः ; **व्यथो लिटि** (VII. 4. 68.)—व्यथो लिटि परतः अभ्यासस्य सम्प्रसारणं भवति । हलादिश्शेषः ; **विव्यथे, विव्यथाते, विव्यथिरे** ॥

9. अथोपधालोपो वक्ष्यते । **गम** गतौ ; **जगाम** । **गमहनजनखनघसां लोपः क्ङित्यनङि** (VI. 4. 98.)—अङ्वर्जितेऽजादौ क्ङिति प्रत्यये परतः गमादीनामुपधाया लोपः ; **जग्मतुः, जग्मुः** । **जगमिथ ;** इडभावपक्षे **जगन्थ** । **हन् ;** लिटि उपधावृद्धिः ; हो हन्तेरिति (VII. 3. 54.) कुत्वम् ; हलादिश्शेषः ; कुहोश्चुः (VII. 4. 62.) इति चुत्वम् ; अभ्यासे चर्च (VIII. 4. 54.) इति जश्त्वम् ; **जघान** । द्विवचनादौ द्विर्वचनम् ; उपधालोपः ; नकारपरत्वात् कुत्वम् ; **जघ्नतुः, जघ्नुः** । **अभ्यासाच्च** (VII. 3. 55.)—अभ्यासादुत्तरस्य हन्तेर्धातो-

हकारस्य कवर्गादेशो भवति; **जघनिथ जघन्थ** । **जन** जनने; परस्मैपदी जौहोत्यादिकः; **जजान** । उपधालोपः; चुत्वम्; **जज्ञतुः, जज्ञुः** । **जनी** प्रादुर्भावे; दैवादिक आत्मनेपदी; **जज्ञे, जज्ञाते, जज्ञिरे** । **खन** अवदारणे; **चखान**; उपधालोपः; **चख्नतुः, चख्नुः**। घसिः प्राग्वत् ॥

10 **चक्षिङ्; चक्षिङः ख्याञ्** (II. 4. 54.) इति वर्तमाने, **वा लिटि** (II. 4. 55.)—लिड्विषये चक्षिङः ख्याञादेशो वा भवति । आत औ णलः इति औकारादेशः; वृद्धिरेचि इति वृद्धिः; **आचख्यौ** । आतो लोप इटि च (VI. 4. 64.) इत्याकारलोपः; **आचख्यतुः, आचख्युः; आचख्याथ आचख्यिथ** । **आचख्ये, आचख्याते, आचख्यिरे**; स्थानिवद्भावान्नित्यमात्मनेपदं न भवति ञकारानुबन्धसामर्थ्यात् । यदा चक्षिङः ख्याञादेशो न भवति तदा—आचचक्षे, आचचक्षाते, आचचक्षिरे । **इण्** गतौ; अचो ञ्णिति (VII. 2. 115.) इति वृद्धिः; द्विर्वचनम्; ह्रस्वः (VII. 4. 59.); अभ्यासस्यासवर्णे (VI. 4. 78.) इति इयङादेशः **इयाय**। द्विर्वचनादौ द्वित्वम्; इणो यण् (VI. 4. 81.) इति यणादेशः; **दीर्घ इणः किति** (VII. 4. 69.)—इणोऽभ्यासस्य दीर्घो भवति किति लिटि परतः; **ईयतुः, ईयुः**। धातोर्गुणः; अभ्यासस्येयङादेशः; **इययिथ**; इडभावे—**इयेथ** । एवमेव ईयथुः, ईय; इयाय इयय, ईयिव, ईयिम; इति भवन्ति । **इङ्** अध्ययने; **गाङ् लिटि** (II. 4. 49.)—इङो गाङादेशो भवति लिटि परतः । ङकारो **गाङ्कुटादिभ्योऽञ्णिन्ङित्** (I. 2. 1.) इति विशेषणार्थः;

आतो लोप इटि च इत्याकारलोपः; अधिपूर्वः; **अधिजगे, अधिजगाते, अधिजगिरे; अधिजगिषे, अधिजगाथे । इक्** स्मरणे; अधिपूर्वः; अभ्यासस्येयङादेशः; सवर्णदीर्घः; **अधीयाय**; इयङादेशः—अधीयतुः, अधीयुः; **अधीययिथ अधीयेथ । या** प्रापणे; आत औ णलः (VII. 1. 34.) इत्यौकारादेशः; वृद्धिः; **ययौ** । आतो लोप इटि च इत्याकारलोपः; **ययतुः, ययुः** । ऋतो भारद्वाजस्य (VII. 2. 63.) इति नियमात् पक्षे इट्; ययिथ ययाथ, ययथुः, यय; ययौ, ययिव, ययिम । **वा** गतिगन्धनयोः; ववौ, ववतुः, ववुः । **ष्ठा** गतिनिवृत्तौ; द्विर्वचनम्; **शर्पूर्वाः खयः** (VII. 4. 61.)—अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते अन्ये हलः लुप्यन्ते; अभ्यासे चर्च (VIII. 4. 54.) इति थस्य तः; आत औ णलः (VII. 1. 34.) इत्यौत्वम्; वृद्धिः; **तस्थौ, तस्थतुः, तस्थुः; तस्थिथ तस्थाथ, तस्थथुः, तस्थ; तस्थौ, तस्थिव, तस्थिम । ग्लै**; आदेच उपदेशेऽशिति इत्यात्वम्; द्विर्वचनम्; हलादिश्शेषः; कुहोश्चुरिति गस्य जः; **जग्लौ, जग्लतुः, जग्लुः । म्लै** हर्षक्षये; मम्लौ, मम्लतुः, मम्लुः । **वच** परिभाषणे; उवाच, ऊचतुः, ऊचुः ॥

11. **उषविदजागृभ्योऽन्यतरस्याम्** (III. 1. 38.)—उष दाहे, विद ज्ञाने, जागृ निद्राक्षये, इत्येतेषां लिट्याम्प्रत्ययो भवति । आमः (II. 4. 81.) इति लिटो लुक् । कृञ्चानुप्रयुज्यते लिटि (III. 1. 40.) इति लिडन्तकृञोऽनुप्रयोगः । **विद—विदाञ्चकार, विदाञ्चक्रतुः, विदाञ्चक्रुः**; आमभावपक्षे—**विवेद, विविदतुः,**

**विविदुः**; **विवेदिथ** । **जागृ**—**जागराञ्चकार**; आमभावे—**जजागार** । जाग्रोऽविचिण्णल्ङित्सु (VII. 3. 85.) इति गुणः; **जजागरतुः** इत्यादि । **अस** भुवि; अस्तेर्भूः (II. 4. 52.)—आर्धधातुके विषये अस्तेर्भूभावो भवति; **बभूव** । **मृजू**; मृजेर्वृद्धिः (VII. 2. 114.) इति वृद्धिः; **ममार्ज** । मृजेरजादौ सङ्क्रमे विभाषा वृद्धिरिष्यते (भा.) इति अजादौ वा वृद्धिः; **ममार्जतुः ममृजतुः**, **ममार्जुः ममृजुः**; **ममार्जिथ ममार्ष्ठ** । **भी-ह्री-भृ-हुवां श्लुवच्च** (III. 1. 39.)—ञिभी भये, ह्री लज्जायाम्, डुभृञ् धारणपोषणयोः, हु दानादनयोः, इत्येतेभ्यो धातुभ्यो लिटि परतः आम्प्रत्ययो भवत्यन्यतरस्याम्; श्लाविव चास्मिन् कार्यं भवति । द्विर्वचनमित्वञ्च । **भी**—**बिभयाञ्चकार**; आमभावपक्षे—**बिभाय** । **ह्री**—**जिह्रयाञ्चकार**; आमभावे—**जिह्राय** । **भृ**—**बिभराञ्चकार**; आमभावे—**बभार** । **हु**; गुणावादेशौ; **जुहवाञ्चकार**; आमभावे—**जुहाव** । द्विवचनादौ आमभावे उवङादेशः; **जुहुवतुः**, **जुहुवुः** । अचस्तास्वत्थल्यनिटो नित्यम् (VII. 2. 61.) इति प्रतिषेधे कृते, ऋतो भारद्वाजस्य (VII. 2. 63.) इति थलि इडागमो विकल्पेन; **जुहविथ** । पक्षे **जुहोथ** ॥

12. **ओ हाङ्** गतौ; आतोलोप इटि च (VI. 4. 64.) इत्याकारलोपः; **जहे**, **जहाते**, **जहिरे** । **डु दाञ्** दानेआत औणलः (VII. 1. 34.) इत्यौत्वम्; **ददौ** । इटि आकारलोपः-**ददिथ** । इडभावे-**ददाथ** । आत्मनेपदे—**ददे** । **ओ हाक्** त्यागे; **जहौ**, **जहतुः**,

**जहुः; जहिथ जहाथ, जहथुः, जह । हृञ्** हरणे; अचो ञ्णिति (VII. 2. 115.) इति वृद्धिः; रपरत्वम्; ह्रस्वः (VII. 4. 59.) इति ह्रस्वत्वम्; हलादिश्शेषः (VII. 4. 60.); कुहोश्चुः (VII. 4. 62.) इति चुत्वम्; जश्त्वम्; **जहार, जह्रतुः, जह्रुः ।** ऋतो भारद्वाजस्य (VII. 2. 63.) इति ऋदन्तस्यैवेति नियमादत्र इट्प्रतिषेधः— **जहर्थ; जह्रथुः, जह्र ।** क्रादिनियमान्नित्यमिट्; **जहार जहर, जह्रिव, जह्रिम । दीङ्** क्षये; **दीङो युडचि क्ङिति** (VI. 4. 63.)—दीङो युडागमो भवत्यजादौ किति ङिति प्रत्यये परतः । दीङ इति पञ्चमीनिर्देशवशादेव प्रत्ययस्य युडागमः; विधानसामर्थ्यादेरनेकाच इत्यादिना यणादेशे कर्तव्ये युडागमस्यासिद्धत्वं न भवति, **वुग्युटावुवङ्यणोस्सिद्धौ वक्तव्यौ** (वा. VI. 4. 22.) इति वचनाद्वा—**उपदिदीये, उपदिदीयाते, उपदिदीयिरे; उपदिदीयिषे । देङ्** रक्षणे; **दयतेर्दिगि लिटि** (VII. 4. 9.)—दयतेरङ्गस्य दिग्यादेशो भवति लिटि । **दिग्यादेशेन द्विर्वचनस्य बाधनमिष्यते** (भा. इ.) इति वचनात् द्विर्वचनं न भवति । एरनेकाच इति यणादेशः; **अवदिग्ये, अवदिग्याते, अवदिग्यिरे । तृप** प्रीणने; **ततर्प, ततृपतुः, ततृपुः । रधादिभ्यश्च** (VII. 2. 45.)—रध् नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह् इत्येभ्यो धातुभ्यो वलाद्यार्धधातुकस्य वा इडागमो भवति; **ततर्पिथ ।** इडभावे, **अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्** (VI. 1.59.)— उपदेशेयोऽनुदात्त ऋदुपधस्तस्य अम् वा झलादौ अकिति परतः; **तत्रप्थ ।**

अमागमाभावपक्षे **ततर्पृथ** । **नश** ; **ननाश** ; इटि थलि एत्वाभ्यास-लोपौ—**नेशिथ** । इडभावे, **मस्जिनशोर्झलि** (VII. 1. 60.)—एतयोः नुमागमो भवति झलि ; षत्वष्टुत्वे ; **ननंष्ठ** । **मस्ज** ; अत्र **मस्जे-रन्त्यात्पूर्वो नुम्** (वा.)—**ममङ्क्थ ममज्जिथ** । **सृज** ; **विभाषा सृजिदृशोः** (VII. 2. 65.)—आभ्यां थल इड्वा स्यात् ; **ससर्जिथ** । इडभावे, **सृजिदृशोर्झल्यमकिति** (VI. 1. 58.)—अनयोरमागमस्स्यात् झलादौ, न तु किति । षत्वष्टुत्वे ; **सस्रष्ठ** । **दृश** ; **ददर्शिथ दद्रष्ठ** । **स्वृ** शब्दोपतापयोः ; वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरिष्यते ; **सस्वार** । अन्यत्र, **ऋतश्च संयोगादे-र्गुणः** (VII. 4. 10.)—संयोगादेः ऋकारान्तस्य गुणो भवति लिटि परतः । प्रतिषेधविषयस्यारम्भः ; **सस्वरतुः, सस्वरुः ; सस्वर्थ सस्वरिथ, सस्वरथुः, सस्वर ; सस्वार सस्वर, सस्वरिव, सस्वरिम** । स्वरतिसूतिसूयतिधूञूदितो वा—इति थलि वेट् ; अन्यत्र नित्यमिट् । **ध्वृ** हूर्च्छने ; **दध्वार, दध्वरतुः, दध्वरुः** । **स्मृ** चिन्तायाम् ; **सस्मार ; सस्मर्थ** । **ह्वृ** कौटिल्ये ; **जह्वार** । **गॄ** निगरणे ; वृद्धिविषये तु वृद्धिरेवेष्यते इत्वोत्वाभ्यां पूर्वविप्रतिषेधेन ; **निजगार** । ऋच्छत्यॄताम् (VII. 4. 11.) इति गुणः ; **निजगरतुः, निजगरुः, निजगरिथ** । अचि विभाषा इति लत्वम् ; **निजगाल** ॥

13. **दिवु** क्रीडादौ ; पुगन्तेति गुणः ; **दिदेव, दिदिवतुः, दिदिवुः ; दिदेविथ, दिदिवथुः** । **षूङ्** प्राणिप्रसवे ; **सुषुवे, सुषुवाते, सुषुविरे ; सुषुविषे, सुषुवाथे** । विभाषेटः (VIII. 3. 79.) इति वा ढत्वम् ;

**सुषुविढ्वे सुषुविध्वे** । **णह** बन्धने; **ननाह** । अत एकहल्मध्ये-ऽनादेशादेर्लिटि (VI. 4. 120.) इति एत्वाभ्यासलोपौ; **नेहतुः**, **नेहुः** । नहो धः (VIII. 2. 34.) इति धत्वम्; **ननद्ध** । पक्षे इट्; **नेहिथ** । आत्मनेभाषायां **नेहे** । **षुञ्** अभिषवे; **अभिषुषाव**; **अभिषुषविथ अभिषुषोथ** । **अशू** व्याप्तौ; अत आदेः (VII. 4. 70.) इति दीर्घः । **तस्मान्नुड्द्विहलः** (VII. 4. 71.) इति वर्त-माने, **अश्नोतेश्च** (VII. 4. 72.)—अश्नोतेरङ्गस्य दीर्घीभूतादभ्यासा-दुत्तरस्य नुडागमो भवति लिटि परतः; **आनशे** । विपूर्वः; यणादेशः; **व्यानशे, व्यानशाते, व्यानशिरे; व्यानशिषे व्यानक्षे; व्यान-शिध्वे व्यानड्ढ्वे** । **चिञ्** चयने; **सन्लिटोर्जेः** (VII. 3. 57.) इति वर्तमाने, **विभाषा चेः** (VII. 3. 58.)—चिनोतेरङ्गस्याभ्यासादु-त्तरस्य विभाषा कवर्गादेशो भवति सन्लिटोः परतः; **चिकाय चिचाय; चिक्ये चिच्ये** । **तुद**—**तुतोद, तुतुदतुः, तुतुदुः; तुतोदिथ** । **मृङ्** प्राणत्यागे; म्रियतेर्लुङ्लिङोश्च (I. 3. 61.) इति नियमादन्य-त्र परस्मैपदम्; अचो ञ्णिति (VII. 3. 115.) इति वृद्धिः; **ममार** । ऋतो भारद्वाजस्य (VII. 2. 63.) इति इट्प्रतिषेधः; **ममर्थ** । **मुच्**; **मुमोच** । **रुधिर्**; पुगन्तेति गुणः; **रुरोध, रुरुधतुः, रुरुधुः; रुरोधिथ** । **भुज**—**बुभुजे** । **युजिर्**—**युयोज; युयुजे** । **तनु**—**ततान; तेने** । **मनु**-**मेने** । सिद्धे सत्यारम्भो नियमार्थः—का-दय एवानिटः ततोऽन्ये सेटः इति । **कृञ्**; कुहोश्चुः (VII. 4. 62.)

इति चुत्वम्। क्रादित्वादिडभावः; गुणः; **चकर्थ; चक्रे**। तथान्येऽपि क्रादयः। **सृ** गतौ; **ससार; ससर्थ। डु भृञ्** धारणपोषणयोः; भौवादिकभृञोऽपि रूपं समानम्; **बभर्थ; बभ्रे। वृञ्** वरणे; **ववर्थ; वव्रे। ष्टुञ्** स्तुतौ; **तुष्टोथ; तुष्टुवे। द्रु** गतौ; **दुद्राव; दुद्रोथ। श्रु** श्रवणे; **शुश्राव; शुश्रोथ। स्रु** गतौ; **सुस्राव; सुस्रोथ**। कृञः सम्पूर्वत्वे, अडभ्यासव्यवायेऽपि (VI. 1. 136.) इति वर्तमाने, सम्पर्युपेभ्यः करोतौ भूषणे (VI. 1. 137.) इति सुटि, ऋतश्च संयोगादेर्गुणः (VII. 4. 10.) इत्यत्र, **संयोगादेर्गुणविधाने संयोगोपधग्रहणं कर्तव्यं कृञर्थम्** (वा. VII. 4. 10.), इति संयोगोपधस्यापि **तन्मध्यपतितस्तद्ग्रहणेन गृह्यते** (परि. 91.) इति अङ्गत्वेन गुणे— **सञ्चस्करतुः; सञ्चस्करे**। क्रादिनियमे—**कृञोऽसुट इति वक्तव्यम्** (वा. VII. 2. 13.); **ऋतो भारद्वाजस्य— इत्येतदप्यसुट एवेष्यते**(वा. VII. 2. 13.); इति **सञ्चस्करिथ**। विभाषेटः (VIII. 3. 79.) इति वा ढत्वम्; **सञ्चस्करिढ्वे सञ्चस्करिध्वे। क्रीञ्**; चुत्वम्; **चिक्राय; चिक्रयिथ चिक्रेथ; चिक्रिये। वृङ्** संभक्तौ; **वव्रे**। क्रादित्वादिडभावः; **ववृषे**। इणः षीध्वंलुङ्लिटान्धोऽङ्गात् (VIII. 3. 78.) इति नित्यं ढत्वम्; **ववृढ्वे। ग्रह**; अभ्यासस्य सम्प्रसारणम्; **अनुजग्राह**; ग्रहिज्यत्यादिना सम्प्रसारणम्; **अनुजगृहतुः, अनुजगृहुः; अनुजगृहे**॥

14. **कास्प्रत्ययादाममन्त्रे लिटि** (III. 1. 35.)— कासृ शब्दकुत्सायाम् इत्येतस्मात् प्रत्ययान्तेभ्यो धातुभ्यश्च आमप्रत्ययो

भवति लिटि परतः अमन्त्रविषये । अकारोऽत्र मित्त्वप्रतिषेधार्थं कल्प्यः । **शकन्ध्वादिषु पररूपं वक्तव्यम्** (वा. VI. 1. 94.) इति सूत्रे पररूपत्वम्; **कासाञ्चक्रे** । प्रत्ययान्तेभ्यः आयप्रत्ययान्तादाम्प्रत्ययः; अतो लोपः (VI. 4. 48.) इत्यलोपः; **गोपायाञ्चकार** । **आयादय आर्धधातुके वा**(III.1. 31.)—आर्धधातुके परतः आय ईय णिङ् इत्येते वा भवन्ति । इति आयप्रत्ययस्य पाक्षिकत्वात् आयप्रत्ययाभावपक्षे—

**जुगोप, जुगुपतुः, जुगुपुः; जुगोपिथ जुगोप्थ** । **चुर** स्तेये; णिचि लिटि, **अयामन्ताल्वाय्येत्न्विष्णुषु**(VI.4.55.)—आम् अन्त आलु आय्य इत्नु इष्णु इत्येतेषु परतः णेरयादेशो भवति । णिलोपापवादः; नेति वक्तव्ये अयादेशग्रहणमुत्तरार्थम्; **चोरयाञ्चकार, चोरयाञ्चक्रे; चोरयाम्बभूव; चोरयामास** । पालयांचकार, पालयांचक्रे, पालयाम्बभूव, पालयामास । अर्चयांचक्रे, अर्चयाम्बभूव, अर्चयामास । इत्यादि सर्वमुन्नेयम् । अमन्त इति किम्? कृष्णो **नोनाव**; अत नोनाव इति णुधातोः यङ्लुगन्तस्यापि लिटि कृते, प्रत्ययलक्षणेन यङ्लुगन्तस्यापि प्रत्ययान्तत्वात् आम्प्रत्यये प्राप्ते, मन्त्रविषयत्वादमन्त इति प्रतिषेधान्न भवति; ततस्तिबादिकार्यम् । **कास्यनेकाच इति वक्तव्यं चुलुम्पाद्यर्थम्** (वा. III. 1. 35.)—इति **चुलुम्पाञ्चकार, दरिद्राञ्चकार** । आत औ णलः (VII. 1. 34.) इत्यत्र ओकारे विधातव्ये औकारविधानं दरिद्रातेरार्धधातुके लोपो वक्तव्यः (वा. VI. 4. 114.) इत्यालोपेऽपि औकारस्य श्रवणार्थम्; तेन **ददरिद्रौ** इत्यपि भवति । चुलुम्पतेर्धातुष्वपठितस्यापि कात्यायनवचनप्रामाण्यात् धातुत्वं वेदितव्यम् ।

आमोऽमित्त्वमदन्तत्वादगुणत्वं विदेस्तथा ।
आस्कासोरांविधानाच्च पररूपं कृतन्तवत् ॥

तत्वपक्षमाश्रित्योत्तरार्धेन आम्प्रत्ययस्य वैयर्थ्यं दर्शयति आस्कासोरिति॥

इति लिट्प्रकरणम् ॥

---

## अथ लुङ्प्रकरणम् ॥

. **भूते** (III.2.84.) इति वर्तमाने, **लुङ्**(III.2.110.)—भूतार्थे मानाद्धातोर्लुङ्प्रत्ययो भवति । **भू** सत्तायाम्; धातुसंज्ञायां, **माङि लुङ्** [I.3. 175.)—माङ्युपपदे धातोर्लुङ् प्रत्ययो भवति । **स्मोत्तरे** **च**(III. 3.176.)—स्मशब्दसहिते माङ्युपपदे लङ्प्रत्ययो भवति गल्लुङ् च । भू+लुङ् इति स्थिते, लङ्वदडादिकार्यम् । **च्लि लुङि** [I. 1. 43.)—धातोः च्लिप्रत्ययो भवति लुङि परतः। शपोऽपवादः; र उच्चारणार्थः, चकारः स्वरार्थः । **च्लेस्सिच्** (III. 1. 44.)— प्रत्ययस्य सिच् इत्ययमादेशो भवति । पूर्ववदनुबन्धलोपः। **गाति-स्था-पा-भूभ्यस्सिचः परस्मैपदेषु**(II. 4. 77.)—गाति स्था घु पा भू भ्यः परस्य सिचो लुग्भवति परस्मैपदेषु परतः । गापोर्ग्रहणेन त्योर्ग्रहणं, न गायतेः पातेश्च; अतस्तयोस्सिचो लुग्न भवति; अगासीत्, सीत् । इतश्च इति तिपः इकारलोपः। इति अभू+त् इति जाते, गुणे प्राप्ते, **यस्तस्याचि पिति सार्वधातुके** इति वर्तमाने, **भूसुवोस्तिङि** II. 3. 88.)–भू सू इत्येतयोः तिङि सार्वधातुके परतः गुणो न । **अभूत्, अभूताम्** । भुवो वुग्लुङ्लिटोः इति वुगागमः । सिद्धवदत्राभात् (VI. 4. 22.) इति वुगागमस्य असिद्धतया

उवङि प्राप्ते, वुग्युटावुवङ्यणोस्सिद्धौ वक्तव्यौ (वा. VI. 4. 22.) इति वचनादसिद्धत्वं न भवति; **अभूवन्; अभूः, अभूतम्, अभूत; अभूवम्, अभूव, अभूम। एध**; आर्धधातुकस्येड्वलादेः(VII. 2.35.)इति इडागमः; आट्; वृद्धिश्च; षत्वष्टुत्वे; **ऐधिष्ट, ऐधिषाताम्, ऐधिषत; ऐधिष्ठाः; ऐधिषाथाम्। रात्सस्य** (VIII. 2. 24.) इत्यनुवर्तमाने, **धि च** (VIII.2. 25.)—धकारादौ प्रत्यये सकारस्य लोपो भवति; **ऐधिध्वम्। ऐधिषि, ऐधिष्वहि, ऐधिष्महि। न माङ्योगे** (VI. 4.74)—लुङ्लङ्लृङ्क्षु परतो यदुक्तम् अडागम आडागमश्च यथायथं, तत् माङ्योगे न भवति। तदिहेदानीं स्पष्टार्थं मध्ये भवान्शब्दः प्रयुज्यते; **मा भवानेधिष्ट, मा स्म भवानेधिष्ट**। इत्यादि सर्वमुन्नेयम्॥

2. **डु पचष्** पाके; **सिचि वृद्धिः परस्मैपदेषु** (VII. 2. 1.) इति वर्तमाने, **वदव्रजहलन्तस्याचः** (VII. 2. 3.)—वदव्रजोर्हलन्तानामचः स्थाने वृद्धिर्भवति परस्मैपदपरसिचि परतः। **अस्तिसिचोऽपृक्ते** (VII. 3. 96.)—अस्तेरङ्गात्सिजन्ताङ्गादुत्तरस्यापृक्तस्य पितः सार्वधातुकस्य ईडागमो भवति। चोः कुः इति कुत्वम्; आदेशप्रत्ययोः इति षत्वम्; **अपाक्षीत्। झलो झलि** (VIII. 2. 26.)—झल उत्तरस्य सकारस्य लोपो भवति झलि परतः; **अपाक्ताम्**। सिजभ्यस्तविदिभ्यश्च (III. 4. 109.) इति झेर्जुसादेशो भवति; **अपाक्षुः; अपाक्षीः, अपाक्तम्, अपाक्त; अपाक्षम्, अपाक्ष्व, अपाक्ष्म**। आत्मनेपदे—**अपक्त, अपक्षाताम्, अपक्षत; अपक्थाः, अपक्षाथाम्, अपग्ध्वम्; अपक्षि, अपक्ष्वहि, अपक्ष्महि**॥

3. **वस** निवासे। **सस्स्यार्धधातुके** (VII. 4. 49.)—सः सि इति पदच्छेदः; सकारान्तस्याङ्गस्य तकारादेशो भवति आर्धधातुके परतः।

पूर्ववद्वृद्धिः ; सिच ईडागमश्च ; **अवात्सीत्, अवात्ताम्, अवात्सुः ; अवात्सीः, अवात्तम्, अवात्त; अवात्सम्, अवात्स्व, अवात्स्म।** **वह्** ; वहेरादौ वदव्रजहलन्तस्याचः (VII. 2. 3.) इति हलन्तलक्षणा वृद्धिः ; पश्चात् धत्वढत्वकत्वानि; ढत्वादीनां पूर्वत्रासिद्धम् (VIII. 2. 1.) इति असिद्धत्वात् षत्वम् ; **अवाक्षीत्** । द्विवचनेऽप्यादौ वृद्धिः; ततस्सलोपढत्वधत्वष्टुत्वढलोपेषु कृतेषु, **सहिवहोरोदवर्णस्य** (VI. 3. 112.) —सहि वहि इत्येतयोरवर्णस्य ओकारादेशो भवति । इत्योत्वम् ; पुनर्वृद्धिर्न भवति कृतार्थत्वात्—**अवोढाम्, अवाक्षुः; अवाक्षीः, अवोढम्, अवोढ ; अवाक्षम्, अवाक्ष्व, अवाक्ष्म** । आत्मनेभाषायाम्—**अवोढ**; षढोः कस्सि (VIII. 3. 41.) इति कत्वम्—**अवक्षाताम्, अवक्षत; अवोढाः, अवक्षाथाम्, अवोढ्वम्; अवक्षि, अवक्ष्वहि, अवक्ष्महि**। **भिदिर्** इति धातोः—**अभैत्सीत्, अभैत्ताम्, अभैत्सुः**। आत्मनेपदे अडादौ कृते, **इको झल्** (I. 2. 9.), **हलन्ताच्च** (I. 2. 10.), इति वर्तमाने, **लिङ्सिचावात्मनेपदेषु** (I. 2. 11.)—इक्समीपाद्धलः परौ झलादी लिङ् सिच् एतौ कितौ स्तः। इति कित्त्वान्न गुणः; **अभित्त, अभित्साताम्, अभित्सत** । इरित्त्वात् पक्षे परस्मैपदे, **अस्यतिवक्तिख्यातिभ्योऽङ्** (III. 1. 52.) इति वर्तमाने, **इरितो वा** (III. 1. 57.)—इरितो धातोः परस्य च्लेः अङादेशो वा भवति । सिचोऽपवादः ; **अभिदत्, अभिदताम्, अभिदन्** । **छिदिर्** इत्यस्य—**अच्छैत्सीत्, अच्छैत्ताम्, अच्छैत्सुः**। अत्रापि इरित्त्वात् पक्षे वा अङ् ; **अच्छिदत्, अच्छिदताम्, अच्छिदन्** । आत्मनेपदे पूर्ववत् कित्त्वान्न गुणः ; **अच्छित्त, अच्छित्साताम्** ;

**अच्छित्सत** । **तृप** प्रीणने ; **स्पृशमृशकृषतृपदृपां सिज्वा वाच्यः** (वा. III. 1. 44.) इति सिचि, रधादिभ्यश्च (VII. 2. 45.) इति इट्पक्षे, वदव्रजहलन्तस्याचः (VII. 2. 3.) इति वृद्धौ प्राप्तायां, **नेटि** (VII. 2. 4.)—इडादौ सिचि हलन्तस्य वृद्धिर्न भवति । गुणः । अतर्प्+इ+स्+ईत इति स्थिते, **इट ईटि** (VIII. 2. 28.)—इट उत्तरस्य सिचो लोपः ईटि परतः । इति सिचो लोपे सवर्णदीर्घे कर्तव्ये, पूर्वत्रासिद्धम् (VIII. 2. 1.) इत्यसिद्धत्वे सिज्लोपस्य प्राप्ते, **सिज्लोप एकादेशे सिद्धो वक्तव्यः** (वा. VIII. 2. 3.) इति असिद्धत्वं न भवति; **अतर्पीत्, अतर्पिष्टाम्, अतर्पिषुः**; इत्यादि ।

रधिर्नशिस्तृपिदृपी द्रुहिष्णुहिमुहिष्णिहाः ।
रधादयोऽमी पठिता दिवादिष्वष्ट कृष्टिभिः ॥

सिचि इडभावे, अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् (VI. 1. 59.) इति अमागमपक्षे—**अत्राप्सीत्, अत्राप्ताम्, अत्राप्सुः** । तदभावे—**अतार्प्सीत्, अतार्प्ताम्, अतार्प्सुः** । उभयत्र वदव्रजहलन्तस्याचः (VII. 2. 3.) इति वृद्धिः । सिजभावे, **पुषादिद्युताद्य्लृदितः परस्मैपदेषु** (III. 1. 55.)—पुषादिभ्यो धातुभ्यः द्युतादिभ्यः लृदिद्भ्यश्च परस्य च्लेरङादेशो भवति परस्मैपदेषु परतः । सिचोऽपवादः; **अतृपत्, अतृपताम्, अतृपन्**; इत्यादि । **नद** अव्यक्ते शब्दे । पूर्ववत् अडागमः; सिचः इट्; ईडागमः । नेटि

(VII. 2. 4.) इति वृद्धिनिषेधे प्राप्ते, **अतो हलादेर्लघोः** (VII. 2. 7.)—हलादेर्लघोरकारस्य इडादौ परस्मैपदे सिचि वृद्धिर्वा भवति; **अनादीत्**। पक्षे—**अनदीत्**। अत्रापि इट ईटि (VIII. 2. 28.) इति सलोपः। **वद्**; अत्रापि अतो हलादेर्लघोः इति वृद्धिविकल्पे प्राप्ते, वदव्रजहलन्तस्याचः (VII. 2. 3.) इति वृद्धिः नित्या भवति। इह इट ईटि इति सकारस्य लोपो भवति; **अवादीत्, अवादिष्टाम्, अवादिषुः**। अत्र वदव्रज्योः पृथगुपादानम् अतो हलादेर्लघोः इति विकल्पबाधनार्थम्; तयोरपि हलन्तत्वादेव वृद्धेस्सिद्धत्वात्। **टु नदि** समृद्धौ; सिचि इडागमः; नेटि (VII. 2. 4.) इति वृद्धिर्न भवति। तत्र सङ्ग्रहश्लोकः—

> हलस्सेट्सिचि वृद्धिर्नातो हलादेर्लघोस्तु वा।
> स्याद्धलन्तस्य वदव्रज्योः न श्वसक्षणहृम्येदिताम्॥

इट ईटीति सलोपः; इटो गुणे प्राप्ते, **न धातुलोप आर्धधातुके** (I. 1. 4.) इति वर्तमाने, **दीधीवेवीटाम्** (I. 1. 6.)—दीधीवेव्योरिटश्च ये गुणवृद्धी प्राप्नुतः, ते न भवतः। **सिज्लोप एकादेशे सिद्धो वक्तव्यः** (वा. VIII. 2. 3.) इति सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घः; **अनन्दीत्, अनन्दिष्टाम्, अनन्दिषुः**। **षिवु**; नेटि (VII. 2. 4.) इति वृद्धौ प्रतिषिद्धायां लघूपधगुणः; **असेवीत्**। **कुष** निष्कोषे; **अकोषीत्**।

**मुष** स्तेये; **अमोषीत्**। **ध्वंसु** गतौ; **अध्वंसिष्ट, अध्वंसिषाताम्, अध्वंसिषत**। एवम् **अस्रंसिष्ट, अभ्रंसिष्ट,** इत्यादि। **व्येञ्**; आदेच उपदेशेऽशिति (V. 1. 45.) इति आत्वम्;

**यमरमनमातां सक् च** (V. 2. 73.)—यम रम नम इत्येतेषाम् आकारान्तानां च सगागमो भवति परस्मैपदपरे सिचि परतः; चकारात्सिच इडागमश्च। इट ईटि इति सलोपः; सवर्णदीर्घः; **अव्यासीत्, अव्यासिष्टाम्**, सिजभ्यस्तविदिभ्यश्च (III. 4. 109.) इति झेर्जुस्—**अव्यासिषुः; अव्यासीः, अव्यासिष्टम्, अव्यासिष्ट; अव्यासिषम्, अव्यासिष्व, अव्यासिष्म**। **अव्यास्त, अव्यासाताम्, अव्यासत; अव्यास्थाः, अव्यासाथाम्,** धि च (VIII. 2. 25.) इति सलोपः—**अव्याध्वम्; अव्यासि, अव्यास्वहि, अव्यास्महि**। **यम** उपयमे; यमरमनमातां सक् च इति सगिटौ, अस्तिसिचोऽपृक्ते (VII. 3.96.) इति ईडागमः; इट ईटि इति सलोपः; सवर्णदीर्घः; **अयंसीत्**। **रमु** क्रीडायाम्; **व्यरंसीत्; आरंसीत्; पर्यरंसीत्; उपारंसीत्;** इत्यादि। **णमु** प्रह्वत्वे शब्दे च; **अनंसीत्**। आकारान्तानाम्—**या** प्रापणे; **अयासीत्**। **ग्लै म्लै** हर्षक्षये; आदेच उपदेशेऽशिति इत्यात्वम्; **अग्लासीत्, अम्लासीत्**। **कै गै रै** शब्दे; **अकासीत्; अगासीत्; अरासीत्**। यमादीनां हलन्तलक्षणा वृद्धिः प्राप्ता नेटि इति प्रतिषिध्यते। परस्मैपदेष्वित्येव; नेह—**आयंस्त, अरंस्त**.

**अनंस्त**—इत्यादिषु। **गृहू** गर्हणे; लुङि पूर्ववदडागमः; स्वरति-सूति-सूयति-धूञूदितो वा ( VII. 2. 44.) इति ऊदित्त्वेन सिच इटि गुणे च कृते, **अगर्हिष्ट**। इडभावे, **शल इगुपधादनिटः क्सः** (III. 1. 45.)—इगुपधो यश्शलन्तः तस्मादनिटश्च्लेः क्सादेशस्स्यात्। सिचोऽपवादः। हो ढः ( VIII. 2. 31.) इति ढत्वम्; एकाचो बशो भष् झषन्तस्य स्ध्वोः (VIII. 2. 37.) इति भष्भावः; षढोः कस्सि इति कत्वम्; षत्वम्; **अघृक्षत**। **क्सस्याचि** ( VII. 3. 72.)—अजादौ तङि क्सस्य लोपो भवति। अलोऽन्त्यस्य; **अघृक्षाताम्**, **अघृक्षन्त**; इत्यादि। **स्पृश;** स्पृशमृशकृषतृपदृपां च्लेस्सिज्वा वक्तव्यः—इति पक्षे सिचि, अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् (VI. 1. 59.) इति अमागमे वृद्धौ, **अस्प्राक्षीत्**, **अस्प्राष्टाम्**, **अस्प्राक्षुः**। अमभावे गुणे, **अस्पार्क्षीत्**, **अस्पार्ष्टाम्**, **अस्पार्क्षुः**। सिजभावे पूर्वेण क्सः; **अस्पृक्षत्**। **दृशिर्** प्रेक्षणे; **इर इत्संज्ञा वाच्या** (वा.)— इति इर इत्त्वे, पूर्ववल्लुङि अडादौ, **इरितो वा** (III. 1. 57.)—इरितो धातोः च्लेरङ् वा स्यात् परस्मैपदे। **ऋदृशोऽङि गुणः** (VII. 4. 16.)—ऋवर्णान्तानां दृशेश्च अङि परतो गुणो भवति। इति गुणे **अदर्शत्**। पक्षे क्से प्राप्ते, **न दृशः** (III. 1. 47.)—दृशः च्लेः क्सो न भवति; सिचि ईडागमे **सृजिदृशोर्झल्यमकिति** (VI. 1. 58.)—सृजि दृश् इत्येतयोर्धात्वोः अमागमो झलादौ प्रत्यये, न तु किति। वदव्रजहलन्तस्याचः (VII. 2. 3.) इति सिचि वृद्धिः; **अद्राक्षीत्**,

**अद्राष्टाम्** , **अद्राक्षुः** । **श्लिष्** ; लुङि, **श्लिष आलिङ्गने** (III. 1. 46.)—श्लिष्धातोः च्लेः क्सः स्यात् आलिङ्गनार्थे । षढोः कस्सि (VIII. 2. 41.) इति कत्वम् ; षत्वम् ; **अश्लिक्षत्** । अत्र योगविभागः क्रियते श्लिषः इति पुषाद्यङ्बाधनायैव, न तु कर्मणि चिण्बाधनाय; **पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्** (परि 59.) इति न्यायात् । तेन **समाश्लेषि** कन्या चैत्रेण । आलिङ्गने इति योगः अर्थविशेषे नियम्यते; आलिङ्गने एव क्सः न त्वर्थान्तरे। तेन **समाश्लिषत् जतु काष्ठम्** इत्यत्र पुषादीनां वक्ष्यमाणः अङ् भवति ॥

5. **पुषादिद्युताद्य्लृदितः परस्मैपदेषु** (III. 1. 55.)—पुषादिः दिवाद्यन्तर्गणो गृह्यते, न भ्वादिक्र्याद्यन्तर्गणः; एषां पुषादीनां द्युतादीनां लृदितां च च्लेरङ् । पुषादय उच्यन्ते । **पुष** पुष्टौ—**अपुषत्**; **तुष** तुष्टौ —**अतुषत्**; **शुष** शोषणे—**अशुषत्**; **दुष** वैकृत्ये—**अदुषत्**; **श्लिष** आलिङ्गने—**समाश्लिषत्** जतु काष्ठम् ; **शक** विभाषितो मर्षणे—**अशकत्**; **ञि ष्विदा** गात्रप्रक्षरणे—**अस्विदत्** ; **क्रुध** क्रोधे—**अक्रुधत्**; **क्षुध** बुभुक्षायाम्—**अक्षुधत्**; **शुध** शौचे—**अशुधत्**; **षिधु** संराद्धौ—**असिधत्**; **रध** हिंसासंराद्ध्योः—**अरधत्**; **णश** अदर्शने— **अनशत्** ; **तृप** प्रीणने—**अतृपत्** ; **दृप** हर्षणमोचनयोः —**अदृपत्** । स्पृशमृशकृषतृपदृपां च्लेस्सिज्वा वक्तव्यः इति सिचि, रधादिभ्यश्च इति इटि,**अतर्पीत्**, **अदर्पीत्**। इडभावे

अमागमे वृद्धौ—**अत्राप्सीत्, अद्राप्सीत्।** अमभावे—**अतार्प्सीत्, अदार्प्सीत्।** **द्रुह** जिघांसायाम्—**अद्रुहत्;** **मुह** वैचित्ये—**अमुहत्;** **ष्णुह** उद्गिरणे—**अस्नुहत्;** **ष्णिह** प्रीतौ—**अस्निहत्;** **शम** उपशमे—**अशमत्;** **तमु** ग्लानौ—**अतमत्;** **दम** उपशमने—**अदमत्;** **श्रमु** तपसि खेदे च—**अश्रमत्;** **भ्रमु** अनवस्थाने—**अभ्रमत्;** **क्षमूष्** सहने—**अक्षमत्;** **क्लमु** ग्लानौ—**अक्लमत्;** **मदी** हर्षे—**अमदत्।** **असु** क्षेपणे; अङि कृते, **ऋदृशोऽङि गुणः** (VII. 4. 16.) इत्यतः अङि इत्यनुवर्तमाने, **अस्यतेस्थुक्** (VII. 4. 17.)—अस्यतेरङ्गस्य थुगागमो भवति अङि परतः; **आस्थत्।** सोपसर्गस्य तु असु इत्यस्य उपसर्गादस्यत्यूह्योर्वा वचनम् (वा. I. 3. 30.) इति तङि, पुंषादित्वङः आत्मनेपदे अप्रवृत्त्या, **अस्यतिवक्तिख्यातिभ्योऽङ्** (III. 1. 52.)—असु क्षेपणे, वच परिभाषणे ब्रूञादेशो वचिर्वा, ख्या प्रकथने चक्षिङादेशो वा, इत्येतेभ्यः परस्य च्लेरङादेशः। इत्यङेव अस्यतौ सर्वत्र न्याय्यः; **अवास्थत।** पक्षे परस्मैपदम्; **अवास्थत्।** **यसु** यत्ने—**अयसत्;** **जसु** मोक्षणे—**अजसत्;** **तसु** उपक्षये—**अतसत्,** **दसु** च—**अदसत्;** **वसु** स्तम्भे—**अवसत्;** **व्युस** विभागे—**अव्युसत्;** **प्लुष** दाहे—**अप्लुषत्;** **बिस** प्रेरणे—**अबिसत्;** **कुस** श्लेषणे—**अकुसत्;** **बुस** उत्सर्गे—**अबुसत्;** **मुस**

खण्डने—अमुसत्; **मसी** परिणामे— अमसत्; **लुठ** विलोडने—अलुठत्; **उच** समवाये—औचत्; **भ्रंशु भ्लंशु** अधःपतने— अभ्रशत्, अभ्लशत्; **वृश** वरणे—अवृशत्; **कृश** तनूकरणे—अकृशत्; **ञि तृषा** पिपासायाम्—अतृषत्; **हृष** तुष्टौ—अहृषत्; **रुष** रोषे—अरुषत्; **डिप** क्षेपे—अडिपत्; **कुप** क्रोधे—अकुपत्; **गुप** व्याकुलत्वे—अगुपत्; **युपु रुपु लुपु** विमोहने—अयुपत्, अरुपत्, अलुपत्; **लुभ** गार्ध्ये—अलुभत्; **क्षुभ** सञ्चलने—अक्षुभत्; **णभ तुभ** हिंसायाम्—अनभत्, अतुभत्; **क्लिदू** आर्द्रीभावे—अक्लिदत्; **ञि मिदा** स्नेहने — अमिदत्; **ञि क्ष्विदा** स्नेहनमोचनयोः—अक्ष्विदत्; **ऋधु** वृद्धौ—आडागमो वृद्धिश्च—आर्धत्; **गृधु** अभिकाङ्क्षायाम्—अगृधत्। उदात्ताः उदात्तेतः इति पुषादयः परस्मैभाषाः॥

6. अथ द्युतादयः। **द्युत** दीप्तौ। **वा क्यषः** (I. 3. 90.) इति वर्तमाने, **द्युद्भ्यो लुङि** (I. 3. 91.)—द्युतसाहचर्यात् लुठादयोऽपि कृपूपर्यन्तास्तथैव व्यपदिश्यन्ते; बहुवचननिर्देशादाद्यर्थो गृह्यते; अनुदात्तेत्त्वात् नित्यमात्मनेपदे प्राप्ते अनेन परस्मैपदं विधीयते; द्युतादिभ्यो धातुभ्यः अङि परतो वा परस्मैपदं भवति। यदा परस्मैपदं तदा अङ् भवति; अद्युतत्। **श्विता** वर्णे—अश्वितत्; **ञि मिदा** स्नेहने—

अमिदत्; **ञि ष्विदा** स्नेहनमोचनयोः—अस्विदत्; **रुच** दीप्तौ—अरुचत्; **घुट** परिवर्तने—अघुटत्; **रुट लुट लुठ** परिघाते—अरुटत्, अलुटत्, अलुठत्। **शुभ** दीप्तौ—अशुभत्; **क्षुभ** सञ्चलने—अक्षुभत्; **णभ तुभ** हिंसायाम्—अनभत्, अतुभत्; **स्रंसु ध्वंसु भ्रंसु** अवस्रंसने—सर्वत्रानिदितामिति नलोपः—अस्रसत्, अध्वसत्, अभ्रसत्; **स्रम्भु** विश्वासे—अस्रभत्; **वृतु** वर्तने—अवृतत्; **वृधु** वृद्धौ—अवृधत्; **शृधु** शब्दकुत्सायाम्—अशृधत्; **स्यन्दू** प्रस्रवणे—अस्यदत्; **कृपू** सामर्थ्ये—अकृपत्। आत्मनेपदे तु अङ् नास्ति, सिजेव; व्यद्योतिष्ट, अश्वेतिष्ट, अरोचिष्ट, अलोटिष्ट, अलोठिष्ट, अशोभिष्ट, अनभिष्ट, अतोभिष्ट अस्रंसिष्ट, अध्वंसिष्ट, अभ्रंसिष्ट, अवर्तिष्ट, अवर्धिष्ट, अस्यन्दिष्ट, अकल्पिष्ट, इत्यादीनि भवन्ति। इति द्युतादयः॥

अथ लृदितः। **गम सृप** गतौ—अगमत्, असृपत्; **शक** शक्तौ—अशकत्; **लुप** छेदने—अलुपत्; **विद** लाभे—अविदत्। **पत** गतौ; **पतः पुम्** (VII. 4. 16.)—पतेरङ्गस्य अङि पुमागमः; अपप्तत्। **घस** अदने—अघसत्। **अद** भक्षणे; **लुङ्सनोर्घसॢ** (II. 4. 37.)—लुङि सनि च परतः अदो घस्लादेशो भवति; **अघसत्**। इति लृदितः॥

7. **शीङ्**; **अशयिष्ट**। **ब्रूञ्**—वा वचिरादेशः; **अस्यतिवक्तिख्यातिभ्योऽङ्** (III. 1. 52.) इति असु क्षेपणे, वच परिभाषणे ब्रूञादेशो वा, ख्या प्रकथने चक्षिङादेशो वा, इत्येतेभ्यः परस्य

च्लेरङादेशो भवति कर्तृवाचिनि लुङि परतः; **वच उम्** (VII. 4. 20.) वचोऽङ्गस्योमागमो भवत्यङि परतः; आद्गुणः (VI. 1. 87.); **अवोचत्, अवोचत**। अन्यनिग्रहणमात्मनेपदार्थम्; परस्मैपदेषु पुषादित्वादङ्। आङागमो; वृद्धिश्च: परिपूर्वः; यणादेशः; **पर्यास्थत**। ख्या प्रकथने; **आतो लोप इटि च** (VI. 4. 64.) इत्याकारलोपः, आख्यत्॥

**पत्लृ** गतौ; लृदित्वादङ्; **पतः पुम्** (VII. 4. 19.)—पतेरङ्गस्य पुमागमो भवति अङि परतः; **अपप्तत्**। **लिपिसिचिह्वश्च** (III. 1. 53.)–लिपादिभ्यः परस्य च्लेरङादेशो भवति कर्तृवाचिनि लुङि परतः; **अलिपत्**; असिचत्; अह्वत्। **आत्मनेपदेष्वन्यतरस्याम्** (III. 1. 54.)—आत्मनेपदेषु परतः लिपिसिचि ह्व इत्येतेभ्यः परस्य च्लेरन्यतरस्यामङादेशो भवति; **स्वरितञितः कर्त्रभिप्राये क्रियाफले** (I. 3. 72.) इत्यात्मनेपदम्; **झलो झलि** (VIII. 2. 26.) इति सकारलोपः; **अलिप्त अलिपत; असिक्त असिचत; आह्वास्त आह्वत**; अत **स्पर्धायामाङः** (I. 3. 31.) इत्यात्मनेपदं बोध्यम्। **सर्तिशास्त्यर्तिभ्यश्च** (III. 1. 56.) —सृ गतौ, शासु अनुशिष्टौ, ऋ गतौ इत्येतेभ्यः परस्य च्लेरङादेशो भवति; **ऋदृशोऽङि गुणः** (VII. 4. 16.)—ऋवर्णान्तानामङ्गानाम् दृशेश्चाङि परतो गुणो भवति; **असरत्**। **शास इदङ्हलोः** (VI. 4. 34.)—शास उपधाया इकारादेशो भवत्यङि हलादौ क्ङिति प्रत्यये परतः; **अन्वशिषत्** आरत्। **इरितो वा** (III. 1. 57.) इति वर्तमाने; **जॄस्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च** (III. 1. 58.)—जॄष् वयोहानौ, स्तन्भुः सौत्रो-धातुः, म्रुचु म्लुचु गत्यर्थे, ग्रुचु ग्लुचु स्तेयकरणे, ग्लुञ्चु गतौ, टुओश्वि गतिवृद्ध्योः, इत्येतेभ्यः परस्य च्लेर्वा अङादेशो भवति कर्तृवाचिनि लुङि

परतः; **ऋदृशोऽङि गुणः** (VII. 4. 16.)—इति गुणः; **अजरत्**; अङभावे **सिचिवृद्धिः परस्मैपदेषु** (VII. 2. 1.)—परस्मैपदपरे सिचि परतः इगन्तस्याङ्गस्य वृद्धिर्भवति; **अजारीत्**। अनिदितां (VI. 4. 24.) इत्यादिना नलोपः; **अस्तभत् अस्तम्भीत्**; विपूर्वः; **स्तन्भेः** (VIII. 3. 67.)—स्तन्भेस्सकारस्योपसर्गस्थान्निमित्तात्परस्य मूर्धन्यादेशो भवति; **प्राक्सितादड्व्यवायेऽपि** (VIII. 3. 63.)–इति षत्वम्; **व्यष्टभत् अम्रुचत् अम्रोचीत्** । **अम्लुचत् अम्लोचीत्** । **अग्रुचत् अग्रोचीत्** । **अग्लुचत् अग्लोचीत्** । **अग्लुञ्चत् अग्लुञ्चीत्** । **श्वयतेरः** (VII. 4. 18.)—श्वयतेरङ्गस्याकारादेशो भवत्यङि परतः; **आश्वत् आश्वताम् आश्वन्**; सिचिवृद्धौ प्राप्तायाम्; नेटि (VII. 2. 4.) इति वर्तमाने; **ह्म्यन्तक्षणश्वसिजागृणिश्व्येदिताम्** (VII. 2. 5.)—हकार मकार यकारान्तानाम्, क्षण श्वस जागृ णि श्वि इत्येतेषामेदितांच इडादौ परस्मैपदपरसिचि परतो वृद्धिर्न भवति इति प्रतिषेधः; गुणायादेशौ; **अश्वयीत्** ।

कित्त्वमुच्यते; गम्लृ; गमेः समोगमि (I. 3. 29.) इत्यादिना आत्मनेपदम्; **लिङ्सिचावात्मनेपदेषु** (I. 2. 11.) इति वर्तमाने, **वागमः** (I. 2. 13.)—गमेः परौ यौ लिङ्सिचौ तावात्मनेपदेषु झलादी वा कितौ स्तः; कित्वपक्षे **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (VI. 4. 37.) इत्यादिना अनुनासिकलोपः; **ह्रस्वादङ्गात्** (VIII. 2. 27.)—ह्रस्वादङ्गादुत्तरस्य सकारस्य लोपो भवति झलि परतः; संपूर्वः **समगत**, कित्त्वाभावे, **नश्चापदान्तस्य झलि** (VIII. 3. 24.) इत्यनुस्वारादेशः; **समगंस्त, समगंसाम्, समगंसत** । हन; **हनो वध लिङि** (II. 4. 42.) इति वर्तमाने, **लुङिच**

(II. 4. 43.)—हनो वधादेशो भवति लुङि परतः । अकारान्तोऽयमादेशः; **अतो लोपः** (VI. 4. 48.) इत्यकारलोपः; तस्य स्थानिवद्भावाद्धलन्तलक्षणा वृद्धिर्न भवति; **अवधीत**, योगविभाग उत्तरार्थः; तेन आत्मनेपदेषु लिङि विकल्पो माभूत्: **आत्मनेपदेष्वन्यतरस्याम्** (II. 4. 44.)—पूर्वेण नित्ये प्राप्ते विकल्प उच्यते, आत्मनेपदेषु परतोऽन्यतरस्यां लुङि हन्तेर्वध इत्ययमादेशो भवति; आङ्पूर्वः आवधिष्ट, यदा वधादेशो न भवति तदा **हनःसिच्** (I. 2. 14.)—हन्तेर्धातोः परः सिच् किद्भवति; सिचः कित्त्वादनुनासिकलोपः; **ह्रस्वादङ्गात्** (I. 2. 27.) इति सलोपः; **आहत**, परस्मैपदेषु हन्तेर्वधादेशस्य नित्यत्वात् कित्वस्य प्रयोजनं नास्ति । **यम** उपरमे; आङ्पूर्वः; **आङोयमहनः** (I. 3. 28.) इत्यात्मनेपदम्; **च्लेःसिच्** (III. 1. 44.) इति सिचि; **लिङ्सिचावात्मनेपदेषु** (I. 2. 11.) इति वर्तमाने, **यमोगन्धने** (I. 2. 15.)—यमेर्धातोर्गन्धने वर्तमानात् परःसिच् किद्भवत्यात्मनेपदेषु परतः; गन्धनं सूचनम्; परेण प्रच्छाद्यमानस्या वद्यस्याविष्करणम्; अनेकार्थत्वाद्धातूनां यमिस्तत्र वर्तते; इति कित्त्वादनुनासिकलोपः; उत्पूर्वः **उदायत, उदायसाताम्, उदायसत** । सूचितवानित्यर्थः । **गन्धने** इति किम्? उदायंस्त पादौ; उदायंस्त कूपाद्रज्जुम् । सकर्मकत्वेऽपि **समुदाङ्भ्यो यमोऽग्रन्थे** (I. 3. 75.) इत्यात्मनेपदम्; **लिङ्सिचावात्मनेपदेषु** (I. 2. 11.) इति वर्तमाने, **विभाषोपयमने** (I. 2. 16.)—यमधातोरुपयमने वर्तमानात्परः सिज्विभाषा किद्भवति आत्मनेपदेषु परतः; **उपायत** कन्याम्; **उपायंस्त** कन्याम्; उपयमनं स्वीकरणम्; विवाहो दारकर्म पाणिग्रहणमिति यावत्; **उपाद्यमःस्वकरणे** (I. 3. 56.) इत्यात्मनेपदम् ।

**इण्** गतौ; **इणोगालुङि** (II. 4. 45.)—इणो गा इत्ययमादेशो

भवति लुङि परतः; **इतश्च** (III. 4. 100.) इति इकार लोपः; **च्लेः स्सिच्** (III. 1. 44.) इति सिच्; **गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु** (II. 4. 77.) इति सिचो लुक्; **अगात्**, **अगाताम्**, **सिजभ्यस्तविदिभ्यश्च** (III. 4. 109.) इति वर्तमाने; **आतः** (III. 4. 110.)— सिचि आकारान्तादुत्तरस्य झेर्जुसादेशो भवति; कथमाभ्यामानन्तर्यम्? सिचि लुकि कृते प्रत्ययलक्षणेन सिचः अनन्तरः, श्रुत्या च आकारादिति पूर्वसूत्रेणैव सिद्धे नियमार्थम्; आत एव सिज्लुगन्तादेव नान्यस्मादिति नियमादिह न भवति; अभूवन्निति । झेर्जुसः पररूपत्वम्; **उस्यपदान्तात्** (VI. 1. 96.) इत्यनेन भवति; अगुः । इक् स्मरणे; इण्वदिक इति वक्तव्यम् (वा. II. 4. 45.) इति गादेशः; **अध्यगात्** । इङ् अध्ययने; **विभाषा लुङ्लृङोः** (II. 4. 50.)—इङो विभाषा गाङ्इत्ययमादेशो भवति लुङि परतः लृङि च; यदा गाङादेशः तदा **गाङ्कुटादिभ्योऽञ्णिन्ङित्** (I. 2. 1.)—गाङिति इङादेशो गृह्यते न गाङ् गताविति; ङकारस्यानन्यार्थत्वात्; कुटादयोऽपि कुट कौटिल्ये इत्यारभ्य यावत् कुङ्शब्दे इति एतेभ्यो गाङ्कुटादिभ्यः परे अञ्णितः प्रत्ययाः ङिद्वद्भवन्तीत्यर्थः, इति सिचो ङित्वात् **घुमास्थागापाजहातिसां हलि** (VI. 4. 66.) इति ईत्वम्; **अध्यगीष्ट**, गाङभावे **अध्यैष्ट** । कुटादिभ्यः; **कुट** कौटिल्ये; कुटादिषु ङित्त्वाद् गुणवृध्द्योरभावः; **न्यकुटीत्** । पुट संश्लेषणे—**अपुटीत्**; **कुच** सङ्कोचे—**अकुचीत्**, **गुञ्ज** शब्दे—**अगुञ्जीत्**; **गुड** रक्षायाम्—**अगुडीत्**; **डिप** क्षेपे—**अडिपीत्**; **छुर** छेदने—**अच्छुरीत्**; स्फुट विकसने —**अस्फुटीत्**; **मुट** आक्षेपमर्दनयोः—**अमुटीत्**; **त्रुट** छेदने—**अत्रुटीत्**; **तुट** कलहकर्मणि—**अतुटीत्**; **चुट** छेदने—**अचुटीत्**; **जुड** बन्धने—**अजुडीत्**; **कड** मदे—**अकडीत्**; **लुठ** संश्लेषणे—**अलुठीत्**; **कुड** घनत्वे—

अकूडीत्; कुडि दाहे—अकुण्डीत्; घुट प्रतिघाते—अघुटीत्; तुड ताडने—अतुडीत्; थुड संवरणे—अथुडीत् स्फुर संचलने—अस्फुरीत्; स्फुल संचलने—अस्फुलीत्; स्फुड, चुड, व्रुड संवरणे—अस्फुडीत्; अचुडीत्, अव्रुडीत्; गुरी उद्यमने, आत्मनेभाषा–अगुरिष्ट; णु स्तवने; उवङादेशः; न्यनुवीत्; धू विधूनने–न्यधुवीत्; गुद पुरिषोत्सर्गे—अगुदीत्; ध्रुव गतिस्थैर्ययोः—अध्रुवीत्; कुङ् शब्दे; अकूतइति वेदलोकप्रयोगदर्शनाद्दीर्घान्तएवायं हरदत्ताभिमतः, तदा सेट्त्वात् अकुविष्ट—इत्यपि भवति; जिनेन्द्रस्तु ह्रस्वान्तमेवापाठीत् तदा अकुत—इति भवति। वृत् इति कुटादयः; स तुदाद्यन्तर्गणोऽयम्।

**विजइट्** (I. 2. 2.)—ओ विजी भयचलनयोः; अनुदात्तेत्; प्रायेणायमुत्पूर्वः; अस्मात्परः इडादिप्रत्ययोङिद्भवति; **उदविजिष्ट**। **विभाषोर्णोः** (I. 2. 3.)—ऊर्णुञ् आच्छादने, अस्मात् परः इडादिप्रत्ययोङिद्भवति विभाषा; ङित्वपक्षे उवङादेशः; **प्रौर्णुवीत्**; ङित्त्वाभावपक्षे नित्यमेव सिचि वृद्धौ प्राप्तायाम्, **ऊर्णोतेर्विभाषा** (VII. 2. 6.)—ऊर्णोतेरङ्गस्य विभाषा वृद्धिर्भवति, इडादौ सिचि परस्मैपदेषु परतः; वृद्धिपक्षे **प्रौर्णावीत्**; वृध्यभावे गुणः; **प्रौर्णवीत्**। अण–रण–वण–क्वण इति भ्वादौ शब्दार्थाः पठ्यन्ते; तत्र रण इत्येतस्माल्लुङि सिचि इडागमे कृते, **नेटि** (VII. 2. 4.) इति निषेधे प्राप्ते, **अतो हलादेर्लघोः** (VII. 2. 7.) –हलादेरङ्गस्य लघोरकारस्य विभाषा वृद्धिर्भवति, इडादौ परस्मैपदपरे सिचि परतः; **अराणीत्**, **अरणीत्**; **अवाणीत्**, **अवणीत्**; **अक्वाणीत्** **अक्वणीत्**; अत इति किम्? अदेवीत्, असेवीत्; अत्र गुणः। **न्यकुटीत्**, **न्यपुटीत्**, अत्र **गाङ्कुटादिभ्योऽञ्णिन्ङित्** (I. 2. 1.) इति ङित्त्वे गुणो न

भवति । हलादिरिति किम्? मा भवानटीत्, मा भवानशीत्; अत्र **नेटि** (VII. 2. 4.) इति प्रतिषेधः । लघोरिति किम्? अतक्षीत्, अरक्षीत् ।

**क्रुश** आह्वाने रोदनेच ; अस्मात् लुङि **च्लेः सिच्** (III. 1. 44.) इति प्राप्ते, **शल इगुपधादनिटः क्सः** (III. 1. 45.) इति क्सादेशः; व्रश्चादिना षत्वम्; **षढोःकस्सि** (VIII. 2. 41.) इति कत्वम्: **आदेशप्रत्यययोः** (VIII. 3. 59.) इति षत्वम्; **अक्रुक्षत्** । एवं **विश** प्रवेशने, **अविक्षत्** । **द्विष** अप्रीतौ ; **अद्विक्षत्** । **कृष** विलेखने ; **अकृक्षत** ; **स्पृश मृशकृषतृपदृपां च्लेस्सिच्वा वक्तव्यः** (III. 1. 44. वा) इति पक्षे सिचि अमागमे वृद्धौ **अक्राक्षीत् अकार्क्षीत्** इत्यपि भवति । **दुह** प्रपूरणे : च्लेः क्सादेशः; **दादेर्धातोर्घः** (VIII. 2. 32.) इति घत्वम्; भष्भावः; चर्त्वं ; आदेशप्रत्यययोः (VIII. 3. 59.) इति षत्वम् ; **अधुक्षत्** । **दिह** उपचये ; घत्वादि पूर्ववत्; **अधिक्षत्** । **लिह** आस्वादने; **होढः** (VIII. 2. 31.) इति ढत्वं; **षढोःकस्सि** (VIII. 2. 41.) इति कत्वम्; **अलिक्षत्** । **गुहू** संवरणे; ऊदित्वादिडभावेन च्लेः क्सादेशः ततः होढः (VIII. 2. 31.) इति ढत्वम्; भष्भावः; षढोःकस्सि (VIII. 2. 41.) इति कत्वम्, षत्वम्; **अघुक्षत्** । शल इति किम्? अभैत्सीत्; अच्छैत्सीत्; इगुपधादिति किम्? अवाक्षीत् । अनिट इति किम्? अतोषीत्, अमोषीत् ॥

अथ दुहादीनां चतुर्णामात्मनेपदेषु क्सादेशे कृते **लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये** (VII. 3. 73.)—दुह–दिह–लिह–गुह–इत्येतेषामङ्गानां क्सस्य वा लुग्भवति, दन्त्यादावात्मनेपदे परतः । इति क्सस्य लोपः ; घत्व धत्वादि पूर्ववत्; वर्णाश्रयविधौ प्रत्ययलक्षणं न भवति;

( परि. ) इति भष्भावो न भवति ; **अदुग्ध** ; क्सस्य लोपाभावपक्षे भष्भावः ; **अधुक्षत** । एवं द्विवचने अधुक्ष आताम् इति स्थिते घोर्लोपो लेटि वा (VII. 3. 70.) इत्यतः लोप इति वर्तमाने **क्सस्याचि** (VII. 3. 72.) —अजादौ प्रत्यये परतः क्सस्य लोपो भवति ; अलोऽन्त्यस्य (I. 1. 52.) इत्यकारलोपः : **अधुक्षाताम्** , **अधुक्षन्त** । अत्र केचित् क्सस्य भाविनीमनकारान्ततामाश्रित्य झस्याद्भावे क्सस्याचि इत्यल्लोपे अधुक्षतेति रूपमिच्छन्ति ; तदसत् , तत्राचीत्यस्य परसप्तमीत्वात् ; **अधुग्धाः**, **अधुक्षथाः**, **अधुक्षाथाम्** , **अधुग्ध्वम्** , **अधुक्षध्वम्** ; **अधुक्षि**; लोप इति वर्तमाने पुनर्लुग्ग्रहणं सर्वादेशार्थम् ; **लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये** — इति क्सस्य सर्वस्य लोपः ; **अदुह्वहि**, **अधुक्षावहि** ; अत्र दन्त्योष्ठ्योऽपि वकारो दन्त्य इत्युच्यते । अन्यथा तौग्रहणमेव कृतंस्यात् । एवं दिहादीनां त्रयाणाम् ; **अदिग्ध**, **अधिक्षत**, **अधिक्षाताम्** , **अधिक्षन्त** । **अलीढ**, **अलिक्षाताम्** , **अलिक्षन्त** । **अगूढ**, भष्भावः ; **अघुक्षत**, **अघुक्षाताम्** , **अघुक्षन्त** ॥

हु दानादनयोः ; **सिचि वृद्धिः परस्मैपदेषु** (VII. 2. 1.) इति वृद्धिः ; गुणस्यापवादः ; **अहौषीत्**, **अहौष्टाम्**, **अहौषुः** । पूञ् पवने ; **अपावीत्** , **अपाविष्टाम्** , **अपाविषुः** । लूञ् छेदने ; **अलावीत्** **अलाविष्टाम्** , **अलाविषुः** । एवम् **अनावीत्** ; अन्तरङ्गमपि गुणमेषां वृद्धिर्वचनाद्बाधते । **न्यनुवीत्** , **न्यधुवीत्** इत्यत्र कुटादित्वात् ङित्वे सति वृद्धौ प्रतिषिद्धायामुवङादेशः । **अतोल्रान्तस्य** (VII. 2. 2.)—रेफलकारौ यौ अतः समीपौ तदन्तस्याङ्गस्यातः स्थाने वृद्धिर्भवति इडादौ परस्मैपदे सिचि परतः; **क्षर** संचलने ; **अक्षारीत्** । ल्रान्तस्येति किम् ? मा भवानटीत् । अन्तग्रहणं किम् ? व्यवधाने मा भूत्—श्वभ्र ; अश्वभ्रीत् ; श्वल्ल, अश्वल्लीत् । अत्र

यौ रेफलकारौ अङ्गस्यान्तौ न तौ अतः समीपौ, यश्च लकारोऽतः समीपः न तदन्तमङ्गम् उभयत्र एषा वृद्धिर्न भवति । **त्सर** छद्म गतौ; **अत्सारीत्** । **ज्वल** दीप्तौ; **अज्वालीत्** । **ह्मल** संचलने; **अह्मालीत्** । अत इति किम्? **खुर** विलेखने; **अखोरीत्** । **मील** निमेषणे; **न्यमीलीत्** ॥

**ष्ठा** गतिनिवृत्तौ; **गातिस्था**–(II. 4. 77.) इत्यादिना सिचो लुक्, **अस्थात्**; **दाधाघ्वदाप्** (I. 1. 20.)—दारूपा धारूपाश्च घुसंज्ञका भवन्ति । इति घुसंज्ञकानां '**डुदाञ्** दाने', '**डुधाञ्** धारणपोषणयोः' इत्यादीनाम् **अदात्**, **अधात्**, इति रूपम् । **पा** पाने; अपात् । **अस** भुवि; च्लेः सिचि; **अस्तेर्भूः** (II. 4. 52.) इति भूभावे; गातिस्था—(II. 4. 77.) इति सिचो लुक्; **भूसुवोस्तिङि** (VII. 3. 88.) इति गुणो न भवति; अभूत्, अभूताम्; **भुवो वुग् लुङ् लिटोः** (VI. 4. 88.) इति वुगागमः; **अभूवन्** । **विभाषा घ्राधेट्शाच्छासः** (II. 4. 78.)–घ्रा गन्धोपादाने, धेट् पाने, शो तनूकरणे, छो छेदने, षो अन्तकर्मणि इत्येतेभ्यो धातुभ्यः उत्तरस्य सिचो विभाषा लुग्भवति परस्मैपदेषु परतः धेटः पूर्वेण प्राप्ते विभाषा, परिशिष्टानामप्राप्ते; **अघ्रात्** । परस्मैपदेषु इति किम्? अघ्रायिषातां सुमनसौ चैत्रेण । लुगभावे, **यमरमनमातां सक्च** (VII. 2. 73.) इति सक्; सिच इट्; **अघ्रासीत्** । **विभाषाधेट्श्व्योः** (III. 1. 49.)—धेट्पाने, टुओश्विगतिवृद्ध्योः इत्येताभ्याम् धातुभ्याम् उत्तरस्य च्लेर्विभाषा चङादेशो भवति कर्तृवाचिनि लुङि परतः; **एकाचो द्वे प्रथमस्य** (VI. 1. 1.) **अजादेर्द्वितीयस्य** (VI. 1. 2.) इत्यधिकृत्य, **चङि** (VI. 1. 11.)–चङि परतोऽनभ्यासस्य धात्ववयवस्य प्रथमस्यैकाचोऽजादेर्द्वितीयस्य वा यथायोगं द्वे भवतः; अभ्यासकार्यम्; **आतो लोप**

**इटि च** (VI. 4. 64.) इत्याकारलोपः; **अद्धत्**। सिच्पक्षे; विभाषाघ्राधेट्शाच्छासः इति सिचो लुक्; **अधात्**; लुगभावे, यमरमनमातां सक् च इति सकि **अधासीत्**। श्वयतेः चङ् पक्षे इयङादेशः; **अशिश्वियत्**। जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च (III. 1. 58.) इत्यङप्यत्र विकल्प्यते; तदा श्वयतेरः (VII. 4. 18.) श्वयतेरिकारस्य अकारः स्यादङि इत्यकारादेशः; अतोलोपः; (VI. 4. 48.) इत्यल्लोपः; **अश्वत्**, **अश्वताम्**, **अश्वन्**। सिच्पक्षे इडागमः; सिचि वृद्धौ प्राप्तायाम्; **ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्** (VII. 2. 5.) इति निषेधः; इट ईटि (VIII. 2. 28.) इति सलोपः; सवर्णदीर्घः; गुणायादेशौ; **अश्वयीत्**, **अश्वयिष्टाम्**, **अश्वयिषुः**। **शो** तनूकरणे; **अशात्**, **अशासीत्**, **छो** छेदने; **अच्छात्**, **अच्छासीत्**। **षो** अन्तकर्मणि; **असात्**, **असासीत्**। संपूर्वात् तिष्ठतेः **समवप्रविभ्यः स्थः** (I. 3. 22.) इत्यात्मनेपदे लुङि **स्थाघ्वोरिच्च** (I. 2. 17.)—तिष्ठतेर्घुसंज्ञकानां च इकारादेशो भवति सिच्च कित् भवत्यात्मनेपदेषु परतः; ह्रस्वादङ्गात् (VIII. 2. 27.) इति सकारलोपः; **समस्थित**, **समस्थिषाताम्**, **समस्थिषत**। तथा घुसंज्ञकानाम्, **अदित**, **अदिषाताम्**, **अदिषत**; **अदिथाः**, **अदिषाथाम्**, **अदिढ्वम्**; **इणः** ^ **षीध्वं लुङ् लिटां धोऽङ्गात्** (VIII. 3. 78.) इति मूर्धन्यादेशः। **अधित**, **अधिढ्वम्**। **दरिद्रा** दुर्गतौ; दरिद्रातेरार्धधातुके विवक्षिते **आतो लोपो वाच्यः लुङि वा सनि ण्वुलि ल्युटि च न** (VI. 4. 114. वा.) इति वचनादाकारलोपः; **अदरिद्रीत्**, **अदरिद्रिष्टाम्**, **अदरिद्रिषुः**। **अद्यतन्यां वेति वक्तव्यम्** (वा.) इति दरिद्रातेराकारलोपस्य लुङि विकल्पनात् तदभावे सगिटौ; **अदरिद्रासीत्**,। **दिवु** क्रीडादौ; लघूपध-

^ न दरिद्रायके लोपो दरिद्राणे च नेष्यते। दिदरिद्रासतीत्येके दिदरिद्रिषतीति च॥ इति वा सनि ण्वुलि ल्युटि ... [illegible]

गुणः ; **अदेवीत्** । **पूङ्** प्राणिप्रसवे ; **स्वरति, सूति सूयति धूञूदितो वा** (VII. 2. 44.) इति वेट् ; **असविष्ट** ; इडभावे **असोष्ट, असविषाताम्, असोषाताम्, असविषत, असोषत** ; विभाषेटः (VIII. 3. 79.) इति वाढत्वम् ; **असविढ्वम् असविध्वम्** । इडभावे इणः षीध्वम् इति मूर्धन्यादेशः ; **असोढ्वम्** । **णह** बन्धने ; वदव्रज—इत्यादिना वृद्धिः ; **नहो धः** (VIII. 2. 34.) इति धत्वम् ; खरिच इति चर्त्वम् ; **अनात्सीत्** ; झलो झलि (VIII. 2. 26.) इति सलोपः ; **अनाद्धाम्, अनात्सुः** ; अनद्ध, अनत्साताम्, अनत्सत ॥

**अञ्चू** श्लक्ष्णकान्तिव्यक्तिगतिषु ; **अञ्चेः सिचि** (VII. 2. 71.)—ऊदित्वाद्विकल्पेनेडागमे प्राप्ते नित्यार्थमिदं वचनम् ; अञ्चेः सिचि परतः इडागमो भवति ; **आञ्जीत्, आञ्जिष्टाम्, आञ्जिषुः** । सिचीति किम् ? अङ्क्ता, अञ्जिता ; ऊदित्वात् विभाषेड्भवति । **स्तुसुधूञ्भ्यः परस्मैपदेषु** (VII. 2. 72.)—ष्टुञ् स्तुतौ, षुञ् अभिषवे, अनयोरनुदात्तत्वादिट्प्रतिषेधे प्राप्ते, धूञ् कम्पने अस्य स्वरतीत्यादिना विकल्पेन प्राप्ते इदमारभ्यते ; स्तु सु धूञ् इत्येतेभ्यः परस्मैपदेषु सिच इडागमो भवति ; सिचि वृद्धिः ; **अस्तावीत्, असावीत्, अधावीत्** । परस्मैपदेष्विति किम् ? अस्तोष्ट, असोष्ट, अधविष्ट, अधोष्ट । **अशू** व्याप्तौ, **आशिष्ट, आशिषाताम्, आशिषत** ; इडभावे व्रश्चादिना षत्वम् ; झलो झलि इति सलोपः ; ष्टुत्वम् षढोः कः सि इति कत्वम् ; **आष्ट, आक्षाताम्, आक्षत ; आष्ठाः, आक्षाथाम् ; आड्ढ्वम्, आक्षि, आक्ष्वहि, आक्ष्महि** । **चिञ्** चयने ; **निरचैषीत् निरचैष्टाम्, निरचैषुः** ; समचेष्ट । जि जये , व्यजेष्ट । **तुद** व्यथने ; वदव्रज इत्यादिना वृद्धिः ; चर्त्वम् ; **अतौत्सीत्, अतौत्ताम्, अतौत्सुः** । **मृङ्**

प्राणत्यागे; **उश्च** (I. 2. 12.)—ऋवर्णात्परो लिङ् तङ् परः सिच्च कितौ स्तः इति कित्वम् : ह्रस्वादङ्गात् इति सलोपः; **अमृत, अमृषाताम्, अमृषत** । **मुच्लृ** मोचने; लृदित्वादङ्; **अमुचत्, अमुचताम्, अमुचन्**; लिङ् सिचावात्मनेपदेषु इति कित्वम्; झलो झलि इति सलोपः; **अमुक्त, अमुक्षाताम्, अमुक्षत** । **रुधिर्** आवरणे : **इरितो वा** (III. 1. 57.) इरितो धातोः परस्य च्लेर्वा अङादेशो भवति परस्मैपदे परतः; **अरुधत् अरुधताम्, अरुधन्**; अङभावे वदव्रजेत्यादिना वृद्धिः । **अरौत्सीत्, अरौत्ताम्, अरौत्सुः** । **भिदिर्** विदारणे; **अभिदत्, अभैत्सीत्** । **छिदिर्** द्वैधीकरणे; **अच्छिदत्; अच्छैत्सीत्**; परस्मैपदेष्वित्येव; अरुद्ध, अभित्त, अच्छित्त । **भुज** पालनाभ्यवहारयोः; **भुजोऽनवने** (I. 3. 66.) इति आत्मनेपदम्; झलो झलि इति सलोपः; चोः कुः इति कुत्वम्; **अभुक्त**, पालने तु परस्मैपदम् । **युजिर** योगे; **अयुजत् अयौक्षीत्; प्रायुक्त, प्रायुक्षाताम्, प्रायुक्षत** । **तनु** विस्तारे; अतो हलादेर्लघोः इति विभाषावृद्धिः; **अतानीत्, अतानिष्टाम्, अतानिषुः**, अतनीत्, अतनिष्टाम्, अतनिषुः; **तनादिभ्यस्तथासोः** (II. 4. 79.)—तनादिभ्यो धातुभ्य उत्तरस्य सिचोविभाषा लुग्भवति तथासोः परतः; थासा साहचर्यादात्मनेपदतशब्दस्यैवग्रहणम्, यूयमतनिष्ट । **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (VI. 4. 37.) इत्यनुनासिकलोपः; **अतत अतनिष्ट, अतथाः** अतनिष्ठाः । **मनु** अवबोधने; **अमनिष्ट अमत**; अमनिष्ठाः अमथाः । **डुकृञ्** करणे; सिचि वृद्धिः; **अकार्षीत्**, उश्च इति कित्वम्; ह्रस्वादङ्गात् इति सलोपः; **अकृत** । एवं **हृञ्** हरणे; **अहार्षीत्**; आत्मनेपदे **अहृत** । **डुक्रीञ्** द्रव्यविनिमये; सिचिवृद्धिः; **अक्रैषीत्, अक्रेष्ट** । **वृञ्** वरणे **लिङ्सिचोरात्मनेपदेषु** (VII. 2. 42.)

—वृतःपरस्मिन् लिङि सिचि आत्मनेपदे वा इडागमः; वृतो वा (VII. 2. 38.)—वृङ् वृञ् इत्याभ्याम् ऋदन्ताच्च इटो दीर्घो वा स्यात् नतु लिटि; इति दीर्घविकल्पः; **अवरीष्ट**, दीर्घाभावे **अवरिष्ट**; इडभावे उश्च इति कित्वाद्गुणाभावः; सलोपः; **अवृत** । **वृङ्** संभक्तौ; तथा **प्रावरीष्ट, प्रावरिष्ट, प्रावृत** । ॠकारान्तेभ्यः; आडागमः; आङ्पूर्वः; सवर्णदीर्घः; **आस्तरीष्ट, आस्तरीषाताम्, आस्तरीषत**; दीर्घाभावे **अस्तरिष्ट, अस्तरिषाताम्** इत्यादि; इडभावे कित्वाद् गुणाभावः; ॠत इद्धातोः इति इत्वं; हलि च इति दीर्घः; **अस्तीर्ष्ट, अस्तीर्षाताम् अस्तीर्षत**; **नलिङि** (VII. 2. 39.) इति वर्तमाने, **सिचि च परस्मैपदेषु** (VII. 2. 40.) परस्मैपदपरे सिचि परतः वृत उत्तरस्येटो दीर्घो न भवति; **प्रावारीत्, प्रावारिष्टाम्, प्रावारिषुः** । **अस्तारीत्, अस्तारिष्टाम्** इत्यादि । **शॄ** हिंसायाम्; विपूर्वः, यणादेशः; **व्यशारीत्**, व्यशारिष्टाम्, व्यशारिषुः । **ध्वृ** छेदने; **स्मृ** चिन्तायाम्; अनयोः परस्मैपदित्वात् कर्मव्यतिहार एवोदाह्रियते; **कर्तरिकर्मव्यतिहारे** (I. 3. 14.) इत्यात्मनेपदविधानात्; **ऋतश्चसंयोगादेः** (VII. 2. 43.) ऋकारान्तात्संयोगादेर्धातोरुत्तरयोर्लिङ्सिचोरात्मनेपदेषु वा इडागमो भवति; **व्यत्यध्वरिष्ट**, इडभावे **व्यत्यध्वृत**, व्यत्यध्वृषाताम्; व्यत्यध्वरिषाताम् । व्यत्यस्मरीष्ट, इडभावे व्यत्यस्मृत, व्यत्यस्मृषाताम्, व्यत्यस्मरिषाताम् । **ग्रह** उपादाने, ग्रहोऽलिटिदीर्घः (VII. 2. 37.) इति दीर्घः, नेटि इति वर्तमाने, ह्म्यन्तेति वृद्धिनिषेधः; **अग्रहीत्, अग्रहीष्ट** । **स्यम, स्वन, ध्वन** शब्दे; **अस्यमीत्, अस्यमिष्टाम्** इत्यादि । **टुवमु** उद्गिरणे; **अवमीत्, अवामिष्टाम्** इत्यादि । **व्यय** वित्तसमुत्सर्गे; **अव्ययीत्** । **क्षणु** हिंसायाम्; **अक्षणीत्** । **श्वस** प्राणने; **अश्वसीत्** ।

इति । **ऊन** परिहाणे; **इल** प्रेरणे; उभयत्र चुरादित्वाण्णिच् । **नोनयति** (III. 1. 51.)—इत्यादिना छन्दसि चङ्प्रतिषेधे सिजेव भवति; आगद्धि काममौनयीत्, काममैलयीत्। भाषायां चङेव भवति; **औननत्**, **ऐलिलत्**। **टु ओश्वि** गतिवृद्ध्योः **अश्वयीत्**। **रगे लगे स्थगे** सङ्गे; **अरगीत्**, **अलगीत्**, **अस्थगीत्**। **कखे** हसने; अकखीत्। **हसे** हसने; **अहसीत्**; ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् इत्यनेन अतो हलादेर्लघोः इति विकल्पः प्रतिषिध्यते। जागृणिश्विनां तु सिचि वृद्धिः प्राप्ता नेटि ( ) इत्यनेन न प्रतिषिध्यते, नवान्तरङ्गत्वादत्र पूर्वं गुणो भवति; सिचि वृद्धेरनवकाशत्वाद्यदि पूर्वं गुणः णिश्विग्रहणमनर्थकं स्यात्; गुणायादेशयोः कृतयोर्यकारान्तत्वादेव प्रतिषेधस्य सिद्धत्वात् तस्मादेतदेव णिश्विग्रहणं ज्ञापकम्—सिच्यन्तरङ्गं भवति ( ) इत्यस्य। अथ जागृग्रहणं किमर्थम्?

**जागृ** निद्राक्षये; **जाग्रोऽविचिण्णल्ङित्सु** (VII. 3. 85.)—जागर्तेर्गुणो भवति विचिण्णल्ङिद्भिन्नेषु परतः; वृद्धिविषये प्रतिषेधविषये च यथा स्यादिति जागर्तेर्गुण आरभ्यते; अजागरीत्। अविचिण्णल्ङित्स्विति किम्? **जॄशॄस्तृजागृभ्यः क्विन्** (उ. णा. 503.) इति विन्; जागृविः; चिण्, अजागारि; णल्; जजागार; ङित्; जागृथः, जागृतः। तथा चोक्तम्—

"गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम्।
पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नव॥"

यावता जाग्रोऽविचिण्णल्ङित्सु इति जागर्तेर्गुणो वृद्धेरपवादो विधीयते; साच अचो ञ्णिति इति यथा वृद्धिं बाधते तथा सिचि वृद्धिमपि बाधिष्यते। गुणे कृते अतो ल्रान्तस्य इति या वृद्धिः प्राप्नोति सा प्रतिषिध्यताम्।

अथ गुणविधानसामर्थ्यादुत्तरकालभाविन्यपि वृद्धिर्बाधिष्यते यथा जागरयतीत्यत्र अत उपधायाः इति वृद्धिर्न भवति ; तथा चिण्णलोः प्रतिषेधोऽर्थवान् भवति ; एवं च जागृग्रहणं शक्यमकर्तुं तत्क्रियते विस्पष्टार्थम् । **चिण् ते पदः** (III. I. 60.)—पद गतौ ; अस्माद्धातोः परस्य च्लेः चिणादेशो भवति तशब्दे परतः ; सामर्थ्येनात्मनेपदप्रथमपुरुषैकवचनं गृह्यते, नतु परस्मैपदमध्यमपुरुषबहुवचनम् ; चकारः **चिणो लुक्** (VI. 4. 104.) इति विशेषणार्थः ; णकारो वृध्द्यर्थः ; अत उपधायाः इति वृद्धिः ; **चिणो लुक्**—चिण उत्तरस्य तत्प्रत्ययस्य लुग्भवति, द्विवचनादिषु सिजेव भवति ; **उदपादि** सस्यम्, **समपादि** भैक्षम् । त इति किम्? उदपत्साताम्, उदपत्सत । **दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्** (III. 1. 61.)—दीपी दीप्तौ ; जनी प्रादुर्भावे ; बुध अवगमने ; पूरि आप्यायने ; तायृ संतानपालनयोः ; स्फायी ओप्यायी वृद्धौ एतेभ्यः परस्य च्लेश्चिणादेशो भवति तशब्दे परतोऽन्यतरस्याम् ; **अदीपि**, पक्षे सिच् ; **अदीपिष्ट, जनिवध्योश्च** (VII. 3. 35.)—जनिवधि इत्येतयोश्चिणि कृति ञिति णिति च यदुक्तं तन्न भवति ; इति वृद्धिप्रतिषेधः ; **अजनि अजनिष्ट । अबोधि अबुद्ध** ; भष्भावः ; **अभुत्साताम्, अभुत्सत । अपूरि अपूरिष्ट । अतायि अतायिष्ट ; अप्यायि अप्यायिष्ट** ; अप्राप्ते विभाषेयमित्यादि सर्वमुन्नेयम् ॥

**श्रिञ्** सेवायाम् । लुङि **णिश्रिद्रुस्रुभ्यः कर्तरिचङ्**, (III. 1. 48.)—ण्यन्तेभ्यो धातुभ्यः श्रिद्रुस्रु इत्येतेभ्यः परस्यच्लेश्चङादेशो भवति कर्तृवाचिनि लुङि परतः । **णौचङ्युपधायाह्रस्वः** (VII. 4. 1.)—चङ्परे णौपरतः यदङ्गं तस्योपधायाह्रस्वो भवति । **चङि** (VI. 1. 11.)—

चङि परतो अनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचोऽजादेर्द्वितीयस्य वा यथायोगं द्वे भवतः । अचिश्नुधातुभ्रुवामित्यादिना इयङुवङादेशः ; **अशिश्रियत्**, **अदुद्रुवत्**; **असुस्रुवत्** । **कमु** कान्तौ । **कमेर्णिङ्** (III. 1. 30.) इति स्वार्थे णिङि, चङि द्वित्वे च कृते, **सन्वल्लघुनि चङ्परेऽनग्लोपे** (VII. 4. 93.)—लघुनि धात्वक्षरे परतो योऽभ्यासस्तस्य चङ्परे णौ सनीव कार्यं भवति अनग्लोपे । इति सन्वद्भावः । **भृञामित्** (VII. 4. 76.) इति वर्तमाने; **सन्यतः** (VII. 4. 79.)—सनिपरतः अकारान्तस्याभ्यासस्य इकारादेशो भवति । **दीर्घो लघोः** (VII. 4. 94.)—लघोरभ्यासस्यदीर्घो भवति चङ्परे णौपरतः । इति अचीकम्+इ+अ+त इति जाते, **णेरनिटि** (VI. 4. 51.)—अनिडादावार्धधातुके णे लोपो भवति । इति णिलोपः ; **अचीकमत** । **चुर** स्तेये : **अचूचुरत्**, **अचूचुरत** । **पाल** रक्षणे ; **अपीपलत्**, **अपीपलत** इत्यादिनेयम् । **अर्च** पूजायाम् । **अजादेर्द्वितीयस्य** (VI. 1. 2.)—अजादेर्धातोर्द्वितीयस्यैकाचोऽवयवस्य द्वे भवतः । **नन्द्राःसंयोगादयः** (VI. 1. 3.)—नकारदकाररेफाः द्वितीयस्यैकाचोऽवयवभूताः संयोगादयः न द्विरुच्यन्ते । पूर्ववण्णिलोपः ; णिलोपस्य स्थानिवद्भावात् चिशब्द स्यद्वित्वम् ; **आर्चिचत्** । कर्तरि इति किम् ? अकारयिषातां कटौ देवदत्तेन । अत्र कर्मणिप्रथमपुरुषद्विवचनमाताम्, सिचि, इट्, गुणायादेशौषत्वम् । अनग्लोप इति किम् ? अचकथत् । **कथ** वाक्यप्रबन्धे; चुरादिरयमदन्तः । णिपरिग्रहणं किम् ? केवले चङ्माभूत्; **अचकमत** । अत्र **च्लेः कमेरुपसङ्ख्यानम्** (वा. III. 1. 48.) इति चङ् । आयादयआर्धधातुकेवा (III. 1. 31.) इति यदा णिङ् नास्ति तदैतदुपसङ्ख्यानम् । इत्यादि सर्वमवगन्तव्यम् ॥

॥ **इति लुङ्प्रकरणम्** ॥

## ॥ अथ लुट्प्रकरणम् ॥

### ॥ अथ भ्वादौ शब्विकरणे लुट् ॥

अथैतेभ्य एवधातुभ्यः लुड्विधीयते । **भविष्यति गम्यादयः** (III. 3. 3.) इति वर्तमाने, **अनद्यतने लुट्** (III. 3. 15.)—भविष्यत्यनद्यतने अर्थेवर्तमानाद्धातोर्लुट्प्रत्ययो भवति लृटोऽपवादः । स्यतासी-लृलुटोः (III. 1. 33.)—लृ इति लृङ्लृटोःसामान्येनग्रहणम्; अतस्त-योर्लुटिच परतो यथासंख्यं स्य तासि इत्येतौ प्रत्ययौ भवतः । अत्र तासिप्र-त्यये इकारः **तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः** (VI.1 .186.) इति विशेषणार्थः । इडागमः; गुणायादेशौ । **लुटः प्रथ-मस्य डारौरसः** (II. 4. 85.)—लुडादेशस्यप्रथमपुरुषस्य परस्मैपदस्या-त्मनेपदस्य च एकवचनद्विवचनबहुवचनानां यथासङ्ख्यं डारौरस् इत्येते आदेशाभवन्ति । डिति अभस्याप्यनुबन्धकरणसामर्थ्यात् टेः (IV. 4. 143.) इति टिलोपः; **भविता** । **तासस्त्योर्लोपः** इति वर्तमाने, **रिच** (VII. 4. 51,)—रेफादौ प्रत्यये परतः तासस्त्योर्लोपो भवति; **भवि-तारौ, भवितारः** । **तासस्त्योर्लोपः** (VII. 4. 50.)—तासेरस्तेश्च सकारस्यलोपो भवति सकारादौ प्रत्यये परतः; भवितासि, भवितास्थः, भवितास्थ; भवितास्मि, भवितास्वः, भवितास्मः । एवमेव आत्मनेपदम्; **एधिता, एधितारौ, एधितारः; एधितासे, एधितासाथे । धिच** (VIII. 2. 25.)—धकारादौ प्रत्यये परतः सकारस्य लोपो भवति; **एधिताध्वे** । **हएति** (VII. 4. 52.)—तासस्त्योस्सकारस्य हकारादेशो भवति एति परतः; **एधिताहे, एधितास्वहे, एधितास्महे** । पचिधातोः चोः कुः (VIII. 2. 30.) इति कुत्वम्; पक्ता, पक्तारौ, पक्तारः; पक्तासि,

पक्तास्थः, इत्यादि । आत्मनेपदञ्च; पक्ता, पक्तारौ, पक्तारः; पक्तासे, इत्यादि । एवमेव—**नन्दिता, नन्दितारौ, नन्दितारः; ध्वंसिता, ध्वंसितारौ, ध्वंसितारः; ध्वंसितासे, ध्वंसितासाथे; संख्याता, संख्यातारौ, संख्यातारः**; इत्यादिनेयम् ॥ **षह** मर्षणे; तासि—**तीषसहलुभरुषरिषः** (VII. 2. 48.)—इष–सह–लुभ–रुष–रिष इत्येतेभ्यो धातुभ्य उत्तरस्य तादेरार्धधातुकस्य इडागमो वा भवति—**सहिता**; इडभावे—ढत्वधत्वष्टुत्वढलोपाः; सहिवहोरोदवर्णस्य (VI. 3. 112.) इत्योकारः; **सोढा** । परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् (VIII. 3. 70.) इति षत्वे प्राप्ते, **सोढः** (VIII. 3. 115.)—सोढ्रूपस्य सहेः सस्य षत्वं न भवति; **परिसोढा** । **वह** प्रापणे; **वोढा** । **अद** भक्षणे; **अत्ता, अत्तारौ, अत्तारः** । एवमेव **शयिता, शयितारौ, शयितारः; शयितासे; वक्ता, वक्तारौ, वक्तारः; वक्तासि, वक्तासे** । **दरिद्रा** दुर्गतौ; सेट्; दरिद्रातेरार्धधातुके लोपोवक्तव्यः (वा. VI. 4. 114.); **दरिद्रिता, दरिद्रितारौ, दरिद्रितारः; दरिद्रितासि** । **हु** दानादनयोः; **होता, होतारौ, होतारः**; इत्यादि । **डु धाञ्**; प्रपूर्वः; नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च (VIII. 4. 17.) इति उपसर्गस्थान्निमित्तादुत्तरस्य रेफनकारस्य णकारादेशो भवति; **प्रणिधाता; प्रणिधातासि, प्रणिधातासे**; इत्यादि । **दिवु** क्रीडादौ; **देविता, देवितारौ, देवितारः**; एवमेव **सविता, सवितारौ, सवितारः; सवितासे** । इडभावे **सोता, सोतारौ, सोतारः; सोतासे** । **णह**; उपसर्गादसमासेऽपि णोपदेशस्य (VIII. 4. 14.) इति णत्वम्; **परिणद्धा, परिणद्धासि, परिणद्धासे** । **षुञ्**; षत्वम्; **अभिषोता, अभिषोतासि, अभिषोतासे** । एवमेव **अशिता, अशितासे** । ऊदित्वादिडभावपक्षे व्रश्चा-

दिना षत्वम्; **अष्टा, अष्टासे** । तुद व्यथने; लघूपधगुणः; **तोत्ता, तोत्तासि, तोत्तासे** । भ्रस्ज पाके । **भ्रस्जो रोपधयोरमन्यतरस्याम्** (VI. 4. 47.)—भ्रस्जो रेफस्य उपधायाश्च निवृत्तिर्भवति आर्धधातुके परतः; अन्यतरस्यां रमागमः । रोपधयोरिति स्थानषष्ठीनिर्देशस्य तयोर्निवृत्तिरेव प्रयोजनम्; मकारो मिदचोन्त्यात्परः (I. 1. 47.) इति विशेषणार्थः; अकारस्सुखमुखोच्चारणार्थः; व्रश्चादिना षत्वम्; ष्टुत्वम्; **भर्ष्टा, भर्ष्टासि, भर्ष्टासे** । यदारमागमोनभवति तदा, स्कोस्संयोगाद्योरन्तेच (VIII. 2. 29.) इति सकारलोपः; षत्वष्टुत्वे; **भ्रष्टा** । **टुमस्जो** शुद्धौ; **णश** अदर्शने । **मस्जि न शोर्झलि** (VII. 1. 60.)—मस्जि, नश् इत्येतयोर्धात्वोर्झलादिप्रत्यये परतः नुमागमो भवति । **मस्जेरन्त्यात्पूर्वन्नुममिच्छन्त्यनुषङ्गसंयोगादिलोपार्थम्** (वा.) अनुषङ्गोनुमागमः; इति जकारात् पूर्वं नुमागमः; स्कोस्संयोगाद्योरिति सकारलोपः; चोः कुः इति कुत्वम्; खरिच; इति चर्त्वम्; अनुस्वारपरसवर्णौ; **मङ्क्ता** । **सृज** विसर्गे; **दृशिर्** प्रेक्षणे । **सृजिदृशोर्झल्यमकिति** (VI. 1. 58.)—सृजि दृशि इत्येतयोः धात्वोर्झलादावकिति प्रत्यये परतः अमागमो भवति । यणादेशः; व्रश्चादिना षत्वम्; ष्टुत्वंच; **स्रष्टा, द्रष्टा** । **मृजूष्** शुद्धौ । मृजेर्वृद्धिः (VII. 2. 114.) इति वृद्धिर्भवति; गुणस्यापवादः; **मार्ष्टा** । ऊदित्वाद्विकल्प नेट्; **मार्जिता** । **विद** ज्ञाने; **वेदिता** । अन्यत्र सत्तायां विचारणे च **वेत्ता** । **तृप** प्रीणने । **अनुदात्तस्यचर्दुपधस्यान्यतरस्याम्** (VI. 1. 59.)—उपदेशे अनुदात्तस्य धातोरुकारोपधस्य झलादावकिति परतोऽन्यतरस्याममागमो भवति । यणादेशः; **त्रप्ता** । अमभावे गुणः; **तर्प्ता** । रधादिभ्यश्च (VII. 2. 45.) इति इटि **तर्पिता** । **सृप्लृ** गतौ; **स्रप्ता, सर्प्ता** । **रभ** राभस्ये; झषस्तथोर्धोधः (VIII. 2. 40.) इति धत्वम्;

झलां जश् झशि (VIII. 4. 53.) इति जश्त्वम्; आङ्पूर्वः; **आरब्धा । मन** ज्ञाने, **मन्ता । मनु** अवबोधने, सेट्; **मनिता । स्पृश** संस्पर्शने; **स्पर्ष्टा, स्प्रष्टा । कृष** विलेखने; **क्रष्टा, कर्ष्टा । मिह** सेचने; षत्वढत्वादिपूर्ववत्; **मेढा । दुह** प्रपूरणे, **दिह** उपचये; **दोग्धा, देग्धा । दह** भस्मीकरणे; **दग्धा ।**

इत उपरि सेट्का उच्यन्ते । **हिक्क** अव्यक्ते शब्दे; **हिक्किता । शुच** शोके; **शोचिता । राजृ** दीप्तौ; **राजिता । अण** शब्दे; **अणिता । भ्राजृ** तेजने; **भ्राजिता । षिवु** तन्तुसन्ताने; **सेविता । वृधु** वृद्धौ; **वर्धिता ।**

अथ विभाषेट उच्यन्ते । **स्वरतिसूतिसूयतिधूञूदितोवा** (VII. 2. 44.)—स्वृ शब्दोपतापयोः, षूङ् प्राणिप्रसवे, धूञ् कम्पने, इत्येतेभ्यो धातुभ्यः ऊदिद्भ्यश्चोत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति; **स्वरिता स्वर्ता, प्रसविता प्रसोता, धविता धोता ।** ऊदितः खल्वपि—**गाहू** विलोडने; **अवगाहिता,** इडभावे ढत्वष्टुत्वढलोपादि **अवगाढा; गुपू** रक्षणे, **गोपिता गोप्ता; तक्षू त्वक्षू** तनूकरणे, तक्षितेः स्कोस्संयोगाद्योरन्तेच (VIII. 2. 29.) इति ककारलोपः, ष्टुत्वम्, **तष्टा; अक्षू** व्याप्तौ **अक्षिता अष्टा ।** सूतिसूयत्योर्विकरणेन निर्देशः षूप्रेरण इत्यस्य निवृत्त्यर्थम् । धूञिति सानुबन्धनिर्देशः धू विधूनने इत्यस्य निवृत्त्यर्थः । **रध** हिंसायाम्; रधादिभ्यश्च (VII. 2. 45.)—रध इत्येवमादिभ्य उत्तरस्य वलादेरार्धधातुकस्य इडागमो वा भवति; **रधिता ।** इडभावे धत्वजश्त्वे; **रद्धा । णश** अदर्शने; **नशिता ।** मस्जिनशोर्झलि (VII. 1. 60.) इति नुमागमः; व्रश्चादिना षत्वं ष्टुत्वञ्च; **नंष्टा । द्रुह** जिघांसायाम्; रधादि-

भ्यश्च इति विभाषा इडागमः; इट्पक्षे **द्रोहिता**; इडभावे **वाद्रुहमुहष्णुहष्णिहाम्** (VIII. 2. 33.)—द्रुह मुह ष्णुह ष्णिह इत्येतेषां हकारस्य वा घकारादेशो भवति झलि परतः पदान्तेच; झषस्तथोर्धोधः (VIII. 2. 40.) इति धत्वं जश्त्वंच; **द्रोग्धा**। घत्वाभावे होढः (VIII. 2. 31.) इति ढत्वं, ष्टुत्वं, ढो ढे लोपः (VIII. 3. 13.) इति ढलोपः; **द्रोढा**। **मुह** वैचित्त्ये; **मोहिता मोग्धा मोढा**। **ष्णुह** उद्गिरणे; **स्नोहिता स्नोग्धा स्नोढा**। **कृपू** सामर्थ्ये; **लुटिच कृपः** (I. 3. 93.)—लुटिचस्यसनोश्च परतः कृपेर्धातोः परस्मैपदं भवति। ततस्तासिप्रत्ययः; लघूपधगुणः; **कृपो रोलः** (VIII. 2. 18.)—ल इति सामान्यमुपादीयते; तेन यः केवलोरेफः ऋकारस्थश्च तयोर्द्वयोरपिग्रहणम्; कृपेर्धातोरेफस्य लकारादेशो भवति। इत्यत्र रेफस्यलकारः; यत्र गुणो नास्ति तत्र ऋवर्णस्य ऌकारः। ऊदित्वाद्विभाषेटि प्राप्ते, **तासिच कृपः** (VII. 2. 60.)—कृप उत्तरस्य तासेर्वलादेरार्धधातुकस्य परस्मैपदेष्विडागमो न भवति। लुटः प्रथमस्य डारौरसः (II. 4. 85.) इति लुडादेशः; कल्प्ता, कल्प्तारौ, कल्प्तारः। परस्मैपदेष्वित्येव; **कल्पिता, कल्पितासे**।

**रोद्धा, भोक्ता, प्रयोक्ता, तनिता, मनिता, अधिकर्ता**, इत्यादि। **ग्रहोऽलिटि दीर्घः** (VII. 2. 37.)—ग्रहउत्तरस्येटो दीर्घो भवति अलिटिपरतः; **ग्रहीता** इत्यादि। **चोरयिता, पारयिता, अर्चयिता**।

॥ इति लुट् प्रकरणम् ॥

---

॥ अथ लृङ् प्रकरणम् ॥

अथ लृङुच्यते। **लिङ्निमित्ते लृङ्क्रियातिपत्तौ** (III. 3. 139.)—भविष्यति इत्यनुवर्तते; हेतु हेतुमतोर्लिङ् (III. 3. 156.) इत्येव-

मादिवचनाद्धेतुहेतुमद्भावादिकोऽर्थो लिङ्निमित्तम्; तस्मिन् हेतुमद्भवार्थे भविष्यति काले वर्तमानाद्धातोः लृङ्प्रत्ययोभवति क्रियातिपत्तौ सत्याम् । कुतश्चिद्वैगुण्यात् क्रियाया अनभिनिर्वृत्तिः क्रियातिपत्तिः; दक्षिणेन चेत् आयास्यत् न शकटं पर्याभविष्यत्; यदि कमलकम् आह्वास्यत् न शकटं पर्याभविष्यत्; अभोक्ष्यत भवान् घृतेन यदि मत्समीपे आसिष्यत । भविष्यत् कालविषयमेतद्वचनम्; भविष्यदपर्याभवनंच हेतुमत्; तत्र हेतुभूतं कमलकाह्वानं च लिङ्गेन बुद्ध्वा तदतिपत्तिञ्च प्रमाणान्तरादवगम्य वक्ता वाक्यं प्रयुङ्क्ते। भूतेच (III. 3. 140.)—लिङ्निमित्ते लृङ् क्रियातिपत्तौ इति सर्वमनुवर्तते; पूर्वेण भविष्यति विहितः सम्प्रति भूते विधीयेते; भूतेच काले लिङ्निमित्ते क्रियातिपत्तौ सत्यां लृङ् भवति । उताप्योरित्यारभ्य लिङ्निमित्तेषु विधानमेतत् प्राक्; ततो विकल्पं वक्ष्यति—दृष्टो मया भवत्पुत्रोऽन्नार्थी चङ्क्रम्यमाणः अपरश्चद्विजः ब्राह्मणार्थी; यदि सतेन दृष्टः अभविष्यत् तदा अभोक्ष्यत; नतु भुक्तवान्; अन्येन पथागतः । स्यतासीलृलुटोः (III. 1. 33.) इति स्यप्रत्ययो भवति । निरनुनासिकत्वादकारस्येत्संज्ञा न भवति; अडागमः; नित्यं ङितः (III. 4. 99.) इति सलोपः; इतश्च (III. 4. 100.) इतीकारलोपादिकार्यं पूर्ववत्; अभविष्यत्, अभविष्यताम्, अभविष्यन् । एवमेव—ऐधिष्यत, ऐधिष्येताम्, ऐधिष्यन्त; अपक्ष्यत्; अपक्ष्यत; अनन्दिष्यत्; अध्वंसिष्यत; अभ्यास्यत्, अभ्यास्यत; अजेष्यत्, व्यजेष्यत, पराजेष्यत; इत्यादि ॥

गमेरिट् परस्मैपदेषु (VII. 2. 58.)—गमेः परस्य सकारादेरिडागमो भवति परस्मैपदेषु; अगमिष्यत् । वृतु वर्तने नवृद्भ्यश्चतुर्भ्यः

^ यदि कमलकमाह्वास्यत् न शकटं पर्याभविष्यदिति ।

(VII. 2. 59.)—एभ्यः परस्य सकारादेरार्धधातुकस्य इडागमो न भवति । परस्मैपदे वृद्भ्यस्स्यसनोः (I. 3. 92.)—वृतादिभ्यः स्ये सनिच परस्मैपदं वा भवति; **अवर्त्स्यत्** । परस्मैपदाभावपक्षे **अवर्तिष्यत** । एवमेव वृधु्‌–शृधु्‌–स्यन्दामपि रूपं नेयम् । **वस** निवासे; **सःस्यार्धधातुके** (VII. 4. 49.)—सस्यतःस्यात् सकारादावार्धधातुके परतः; **अवत्स्यत्** । अहास्यत्, अहोष्यत्, आत्स्यत्, अशयिष्यत, अवक्ष्यत्, अवक्ष्यत, अहास्यत, आयस्यत्, अदेविष्यत्, प्रासविष्यत, प्रासोष्यत, अनत्स्यत्, असोष्यत्, आशिष्यत, आक्ष्यत, निरचेष्यत्, निरचेष्यत, अतोत्स्यत्। **कृती** छेदने । **सेऽसिचिकृतचृतछृदतृदनृतः** (VII. 2. 57.)—एभ्यः परस्यसिज्भिन्नस्य सकारादेरार्धधातुकस्य इड्वा भवति; **अकर्तिष्यत्** । इडभावपक्षे **अकर्त्स्यत्** । **हन** हिंसागत्योः; **ऋद्धनोःस्ये** (VII. 2. 70,)—ऋकारान्तानामङ्गानां हन्तेश्चस्ये परतः इडागमो भवति; **अमरिष्यत्**, **अहनिष्यत्** । अमोक्ष्यत् अमोक्ष्यत, अभोक्ष्यत् अभोक्ष्यत, अयोक्ष्यत् अयोक्ष्यत, अतनिष्यत् अतनिष्यत, अकरिष्यत् अकरिष्यत, अक्रेष्यत् अक्रेष्यत, अवरीष्यत, अग्रहीष्यत् अग्रहीष्यत, अचोरयिष्यत् अचोरयिष्यत, अपालयिष्यत् अपालयिष्यत, आर्चयिष्यत् आर्चयिष्यत ॥

॥ इति **लृङ्प्रकरणम्** ॥

---

॥ **अथ लृट्प्रकरणम्** ॥

अथ लृडुच्यते । **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** (III. 3. 10.) इति वर्तमाने, **लृट्शेषेच** (III. 3. 13)—कश्च शेषः? क्रियार्थोपपदादन्यश्शेषः; तस्मिन् शेषे शुद्धे भविष्यति काले वर्तमानाद्धातोः लृट् प्रत्ययो भवति चकारात् क्रियायां क्रियार्थायाञ्च उपपदे । स्यतासी लृलुटोः

(III. 1. 33.)—इति स्यप्रत्ययः; **भविष्यति; भोक्ष्यामि** इति व्रजति। एधिष्यते, पक्ष्यति पक्ष्यते, नन्दिष्यति, ध्वंसिष्यते, व्यास्यति व्यास्यते, लास्यति, यास्यति, सेत्स्यति, भेत्स्यति, चेत्स्यति, लविष्यति, पविष्यति, अत्स्यति, शयिष्यते, वक्ष्यति वक्ष्यते, होष्यति, भासिष्यते, श्रद्धास्यते, देविष्यते, अशिष्यति, प्रसविष्यते प्रसोष्यते, नत्स्यति नत्स्यते, अभिषोस्यति अभिषोस्यते, अशिष्यते, अक्ष्यते, निचेष्यते, तोत्स्यति तोत्स्यते। ऋद्धनोः स्ये (VII. 2. 70.) इति इडागमः; मरिष्यति, मोक्ष्यति, रोत्स्यति, भोक्ष्यते, योक्ष्यति, तनिष्यति तनिष्यते, मनिष्यते, करिष्यति करिष्यते, भरिष्यति भरिष्यते, हरिष्यति, वरिष्यति। व्रश्चादिना षत्वम्ः षढोःकस्सि (VIII. 2. 41.) इति कत्वम्; **व्रक्ष्यति**। दह भस्मीकरणे; भष्भावः; **धक्ष्यति**। सृजिदृशोर्झल्यमकिति (VI. 1. 58.) इत्यमागमः; **स्रक्ष्यति, द्रक्ष्यति**। बुध अवगमने; भष्भावः; चर्त्वम्; **भोत्स्यति**। रप्स्यति; **लप्स्यते**॥

विभाषेट उच्यन्ते। **सेऽसिचिकृतचृतछृदतृदनृतः** (VII. 2. 57.)—कृतिवेष्टने, चृती हिंसाग्रन्थनयोः, उच्छृदिर्दीप्तिदेवनयोः, उतृदिर्हिंसानादरयोः, नृती गात्रविक्षेपे इत्येतेभ्यो धातुभ्यः वा इडागमो भवति सकारादावार्धधातुकेऽसिचिपरतः; **कर्तिष्यति कर्त्स्यति, चर्तिष्यति चर्त्स्यति, छर्दिष्यति छर्त्स्यति, तर्दिष्यति तर्त्स्यति, नर्तिष्यति नर्त्स्यति**। **गम्लृ सृप्लृ** गतौ; **गमेरिट् परस्मैपदेषु** (VII. 2. 58.)—गमेर्धातोस्सकारादावार्धधातुके परस्मैपदेषु इडागमो भवति; **गमिष्यति**। परस्मैपदेष्विति किम्? सङ्गंस्यते। **वृद्भ्यःस्यसनोः** (I. 3. 92.)—द्युतादिष्वेव वृतादयः पठ्यन्ते; वृतुवर्तने, वृधु वृद्धौ, शृधु शब्दकुत्सायाम्, स्यन्दूप्रस्रवणे, कृपू सामर्थ्ये, इत्येतेभ्यः स्ये सनि परस्मैपदं वा भवति।

स्यप्रत्ययस्य इडागमेप्राप्ते, **नवृद्भ्यश्चतुर्भ्यः** (VII. 2. 59.)—वृतादिभ्यश्चतुर्भ्य उत्तरस्य सकारादेरार्धधातुकस्य परस्मैपदेषु इडागमो न भवति ; **वर्त्स्यति, वर्तिष्यते** । वृधु—**वर्त्स्यति, वर्धिष्यते** ; स्यन्दू—स्यन्त्स्यति, स्यन्दिष्यते ; शृधु–शर्त्स्यति, **शर्धिष्यते** । कृपू; **लुटिचक्लृपः** (I. 3. 93.)—लुटिचस्यसनोश्च कृपेर्धातोर्वा परस्मैपदं भवति । स्यप्रत्ययः ; गुणः ; कृपोरोलः (VIII. 2. 18.)इति लत्वम् । इडागमे प्राप्ते, **तासिच क्लृपः** (VII. 2. 60.)—क्लृप उत्तरस्य तासेस्सकारादेरार्धधातुकस्य परस्मैपदेषु इडागमो न भवति; **कल्प्स्यति** । आत्मनेपदे—**कल्पिष्यते, कल्प्स्यते** ॥ एवमेव परिष्यते, वरिष्यते, चोरयिष्यति, इत्यादि सर्वमुह्नेयम् ॥

॥ इति लृट् प्रकरणम् ॥

---

**—अथेदानीं चिण्वद्भावप्रकरणे भावकर्मणोर्लिङादयः प्रदर्श्यन्ते—**

**॥ अथ भावकर्मणोर्लिङ् ॥**

**स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनगृहदृशां वा चिण्वदिट् च** (VI. 4. 62.)—स्य सिच् सीयुट्तासि इत्येतेषु भावकर्मविहितेषु परतः उपदेशे अजन्तानां धातूनां हन-गृह-दृशां वा चिण्वत्कार्यं भवति ; चकारात् स्यादीनामिडागमश्च । अचोञ्णिति (VII. 2. 115.) इति वृद्धिः ; आवादेशः ; **पुत्रेण भाविषीष्ट** । चिण्वदिडभावे–**पुत्रेण भविषीष्ट** । कर्मणि–**अनुभाविषीष्ट** लक्ष्मीर्देवदत्तेन, **अनुभविषीष्ट** वा । अनुभाविषीष्ट, अनुभाविषीयास्ताम्, अनुभाविषीरन् ; इत्यादि सर्वं कर्तृतुल्यमेवज्ञेयम् । उपदेशे इति किम् ? **करिष्यते** इत्यत्र परत्वात् गुणे रपरत्वेच कृते ततो अनजन्तत्वात् चिण्वदिडागमो नस्यात् । उपदेश-

ग्रहणाद्भवति ; यद्यपि करोतिरुपदेशोत्तरकालमनजन्तः तथाप्युपदेशोऽजन्त एव । एधिषीष्ट ; पक्षीष्ट ; नान्दिषीष्ट ; ध्वंसिसीष्ट । **व्येञ्** संवरणे ; आदेच उपदेशेऽशिति (VI. 1. 45.) इत्यात्वम् ; चिण्वदिड्भावपक्षे, **आतो युक्चिण्कृतोः** (VII. 3. 33.)—आकारान्तस्याङ्गस्य युगागमो भवति चिणि, कृति ञिति णिति च, प्रत्यये परतः । एवं **व्यायिषीष्ट** इत्यादि । इडभावे **संव्यासीष्ट** इत्यादि । शायिषीष्ट शयिषीष्ट, वक्षीष्ट, निश्वायिषीष्ट निश्वेषीष्ट, कृत्सीष्ट, मारिषीष्ट—उश्च (I. 2. 12.) इति कित्त्वे—मृषीष्ट । लिङ्सिचावात्मनेपदेषु (I. 2. 11.) इति कित्त्वे मुक्षीष्ट, रुत्सीष्ट, भुक्षीष्ट, तनिषीष्ट, मनिषीष्ट, करिषीष्ट कृषीष्ट, कायिषीष्ट केषीष्ट ॥

लिङ् सिचोरात्मनेपदेषु (VII. 2. 42.) इति विभाषा इडागमः । वृतोवा (VII. 2. 38.) इति इटो दीर्घत्वे प्राप्ते, न लिङि (VII. 2. 39.) इति प्रतिषेधः : **वरिषीष्ट** । इडभावे—**वृषीष्ट** । **शमु** उपशमे ; अस्माण्णिच् ; अत उपधायाः (VII. 2. 116.) इति वृद्धिः ; अमन्तत्वात् जनीजृष्क्नसुरञ्जोऽमन्ताश्च (ग. ) इति मित्संज्ञायां, मितां ह्रस्वः (VI. 4. 92.) इति ह्रस्वत्वम् । सनाद्यन्ताधातवः (III. 1. 32.) इति धातुसंज्ञायां भावे आशिषि लिङ् । भावकर्मणोः (I. 3. 13.) इत्यात्मनेपदम् ; प्रथमपुरुषैकवचनम् ; तस्य स्यसिच् सीयुडिति चिण्वद्भावः । धातुसंज्ञाविधानकालेऽजन्तत्वात् सनाद्यन्ता अपि उपदेशे अजन्ता उच्यन्ते । **चिण्णमुलोर्दीर्घोऽन्यतरस्याम्** (VI. 4. 93.)—चिण्णमुल्परे णौ परतो मितामङ्गानाम् उपधाया वा दीर्घो भवति । असिद्धवदत्राभात् (VI. 4. 22.) इति चिण्वदिटः, असिद्धवद्भावात् उभयत्रापि णेरनिटि (VI. 4. 51.) इति णिलोपः ; गुणायादेशौ ; **शमिषीष्ट शामिषीष्ट** ।

चिण्वदिडभावे—**शमयिषीष्ट** । **हन** ; वधादेशः ; **वधिषीष्ट** । वधादेशापवादे चिण्वद्भावे—अत उपधायाः (VII. 2. 116.) इति वृद्धिः ; होहन्तेरिति (VII. 3. 54.) कुत्वम् ; **घानिषीष्ट** । **ग्रह** उपादाने ; **ग्राहिषीष्ट**, **ग्रहिषीष्ट** । अत्र ग्रहोलिटि दीर्घः (VII 2. 37.) इति वलादिलक्षणस्येट एवदीर्घः ; चिण्वदिटः अप्रकृतत्वात् । **दृशिर्** प्रेक्षणे ; **दर्शिषीष्ट** । चिण्वदिडभावे किच्वात् सृजिदृशोर्झल्यमकिति (VI. 1. 58.) इति अमागमो न भवति ; व्रश्चादिनाषत्वम् ; षढोः कस्सि (VIII. 2. 41.) इति कत्वम् ; **दृक्षीष्ट** । **चुर** स्तेये ; अस्मात् ण्यन्तात् कर्मण्याशिषिलिङ् ; चिण्वदिट् ; असिद्धवदत्राभात् (VI. 4. 22.) इति चिण्वदिटोऽसिद्धत्वाण्णेरनिटि इति णिलोपः ; **चोरिषीष्ट** । चिण्वदिडभावे इडागमः ; **चोरयिषीष्ट** । एवं पालिषीष्ट पालयिषीष्ट, इत्यादिसर्वमुन्नेयम् ॥

**॥ इति भावकर्मणोराशीर्लिङ् प्रकरणम् ॥**

---

**॥ अथ भावकर्मणोर्लिट् ॥**

भू ; भुवोवुग्लुङ्लिटोः (VI. 4. 88.) इतिवुगागमः ; ततोद्विर्वचनम् ; भवतेरः (VII. 4. 73.) इत्यभ्यासस्यात्वम् । भावे—**बभूवे** ; कर्मणि—**अनुबभूवे** । **एध** ; इजादेश्चगुरुमतोऽनृच्छः (III. 1. 36.) इत्याम्प्रत्ययः ; **एधाञ्चक्रे एधाम्बभूवे, एधामासे** । **पच्** ; अत एकहल्मध्येऽनादेशादेर्लिटि (VI. 4. 120.) इत्येत्वाभ्यासलोपौ ; **पेचे** । ननन्दे, दध्वंसे, संविव्ये । **अद** ; अदेर्घस्लादेशः ; गमहनेत्यादिना उपधालोपः ; खरिचेति चर्त्वम् ; शासिवसीतिषत्वम् ; **जक्षे** । पक्षे—अत आदेः (VII. 4. 70.) इति दीर्घः ; **आदे** । अतिशिश्ये । **ब्रूञ्** ; ब्रुवोवचिरादेशः ; वचिस्वपीति सम्प्रसारणम् ; **ऊचे, ऊचाते, ऊचिरे** । **हु** ; भीह्रीभृहुवां-

श्लुवच्च (III. 1. 39.) इत्याम्प्रत्ययो वा ; **जुहवाञ्चक्रे**, **जुहुवे** । **ओहाक्** ; आतोलोप इटिच (VI. 4. 64.) इत्याकारलोपः ; **जहे** । दधे, दिदिवे, सुषुवे अभिषुषुवे । **अशू** ; अश्नोतेश्च (VII. 4. 72.) इति नुडागमः ; **आनशे** । **चिञ्** ; विभाषाचेः (VII. 3. 58.) इति चिनोतेरङ्गस्याभ्यासादुत्तरस्य विभाषा कवर्गादेशो भवति सन्लिटोः परतः ; उभयत्र एरनेकाच इति यणादेशः ; **सञ्चिक्ये**, **संचिच्ये** । तुतुदे, मुमुचे । **ग्लै म्लै** ; आदेच उपदेशेऽशिति (VI. 1. 45.) इत्यात्वम् ; आतो लोप इटिच ; इत्याकार लोपः, जग्ले, मम्ले । रुरुधे, बुभुजे, युयुजे, तेने, मेने, चक्रे । करोतिः सम्पूर्वः ; अडभ्यासव्यवायेऽपि (VI. I. 136.) इति सुडागमः ; ऋतश्च संयोगादेर्गुणः (VII. 4. 10.) इति संयोगादेर्गुणविधाने—संयोगोपधग्रहणं कर्तव्यं कृञर्थम्–इति गुणः ; सञ्चस्करे । चिक्रिये, वव्रे, जगृहे । **चुर्** ; कास्प्रत्ययादाममन्त्रेलिटि (III. 1. 35.) इत्याम्प्रत्ययः ; णेरनिटि (VI. 4. 51.) इति णिलोपे प्राप्ते अयामन्ताल्वाय्येत्न्विष्णुषु (VI. 4. 55.) इति णेरयादेशः ; **चोरयाञ्चक्रे**, **चोरयाम्बभूवे**, **चोरयामासे** । पालयाञ्चक्रे, पालयांबभूवे, पालयामासे ; अर्चयाञ्चक्रे, अर्चयाम्बभूवे, अर्चयामासे ; इत्यादिसर्वमुन्नेयम् ॥

॥ **इति भावकर्मणोर्लिट्** ॥

———

॥ **अथ भावकर्मणोर्लुङ्** ॥

**भू** ; च्लेस्सिच् (III. 1. 44.) इति सिजादेशेप्राप्ते, **चिण्भावकर्मणोः** (III. 1. 66.)—धातोः परस्य च्लेश्चिणादेशो भवति भावकर्मवाचिनि तशब्दे परतः । चिणोलुक् (VI. 4. 104.) इति चिण उत्तरस्य तशब्दस्य लोपो भवति ; **अभावि** । अनुपूर्वः ; यणादेशः ; **अन्वभावि** । आता-

मादौ सिजादेशः; स्यसिच्सीयुडिति (VI. 4. 62.) पक्षेचिण्वदिडागमः; **अन्वभाविषाताम्** । चिण्वदिडभावे इडागमोगुणश्च; **अन्वभाविषाताम्** । ऐधि; अपाचि; अपक्षाताम्; अनन्दि; अध्वंसि, अध्वंसिषाताम्; युगागमः —अव्यायि, अव्यायिषाताम्, अव्यायिषत; इडभावे—अव्यासाताम् । अद; अदेर्घस्लादेशः; **अघासि** । सः स्यार्धधातुके (VII. 4. 49.) इति सकारादावार्धधातुकेपरतस्सकारस्य तकारादेशोभवति; **अघत्साताम्, अघत्सत** । पूर्वत्रासिद्धमिति सिज्लोपस्यासिद्धत्वात्तत्वम्; **अघत्थाः** । अत्यशायि, अत्यशायिषाताम्, अत्यशायिषत; अत्यशयिषाताम्, अत्यशयिषत । ब्रुवोवचिरादेशः; अवाचि, अवक्षाताम्, अवक्षत । अह्नावि, अह्नाविषाताम्, अह्नोषाताम्, अह्नाविषत, अह्नोषत । युगागमः; अह्नायि, अह्नायिषाताम्, अह्नायिषत । पक्षे—अह्नासाताम्, अह्नासत । **धा**; अधायि, अधायिषाताम्, अधायिषत । चिण्वदिडभावे, **स्थाघ्वोरिच्च** (I. 2. 17.)—तिष्ठतेर्धातोर्घुसंज्ञकानां चाकारस्येकारादेशो भवति सच किद्भवति आत्मनेपदेषु परतः; **अधिषाताम्, अधिषत** । अदायि, अदायिषाताम्, अदायिषत; अदिषाताम्, अदिषत । अस्थायि । अस्थायिषाताम्, अस्थायिषत । कर्मणि—उपास्थायि, उपास्थायिषाताम्, उपास्थायिषत । चिण्वदिडभावे—उपास्थिषाताम्, उपास्थिषत । अनायि, अनायिषाताम्, अनायिषत; चिण्वदिडभावे—अनेषाताम्, अनेषत । अश्रायि, अश्रायिषाताम्, अश्रायिषत; असावि, असाविषाताम्, असाविषत; चिण्वदिडभावे—असविषाताम्, असोषाताम्; अह्नारि, अह्नारिषाताम्, अह्नारिषत; इडभावे, उश्च (I. 2. 12.) इति कित्त्वम्; **अहृषाताम्, अहृषत** । **हन**; आत्मनेपदेष्वन्यतरस्याम् (II. 4. 44.) इति हनो वध इत्ययमादेशो भवति; **अवधि, अवधिषाताम्, अवधिषत** । अत्र जनिवध्योश्च (VII. 3. 35.)

इति वृद्धिप्रतिषेधः; वधादेशाभावे हो हन्तेरिति कुत्वम्; अत उपधायाः (VII. 2. 116.) इति वृद्धिः; **अघानि, अघानिषाताम्, अघानिषत** । चिण्वदिडभावे, हनस्सिच् (I. 2. 14.) इति किच्वे, अनुदात्तोपदेशेत्यादिना अनुनासिकलोपः **अहसाताम्, अहसत** । **अदर्शि, अदर्शिषाताम्, अदर्शिषत**; चिण्वदिडभावे लिङ्सिचावात्मनेपदेषु (I. 2. 11.) इति कित्वात्, अमागमो गुणश्च न भवति; **अदृक्षाताम्, अदृक्षत** । **अदोहि**; द्विवचनादिषु च्लेः क्सादेशः क्सस्याचि (VII. 3. 72.) इत्यकारलोपः, घत्वभष्भावादिपूर्ववत्—**अधुक्षाताम्, अधुक्षन्त**; इत्यादि । लुग्वा दुहदिहेत्यादिना (VII. 3. 73.) क्सस्य वालुक्; **अदुग्धाः**; लोपाभावपक्षे—**अधुक्षथाः** । **शमु** उपशमने; **नोदात्तोपदेशस्यमान्तस्यानाचमेः** (VII. 3. 34.)—उदात्तोपदेशस्य मकारान्ताङ्गस्य आचमिवर्जितस्य चिणि कृति ञिति च प्रत्यये परतो यदुक्तन्तन्नभवति । इति अत उपधायाः (VII. 2. 116.) इति वृद्धिप्रतिषेधः; **अशमि, अशमिषाताम्, अशमिषत** । अतमि, अतमिषाताम्, अतमिषत; अदमि, अदमिषाताम्, अदमिषत । उदात्तोपदेशस्येत्येव; **यम** उपरमे; अतउपधायाः (VII. 2. 116.) इति वृद्धिः; **अयामि** । **रमु** क्रीडायाम्; **अरामि, अरंसाताम्, अरंसत** । **णम** प्रह्वत्वे शब्दे च; **अनामि, अनंसाताम्, अनंसत** । **भञ्जो** आमर्दने; **भञ्जेश्च चिणि** (VI. 4. 33.)—भञ्जेश्च धातोश्चिणिप्रत्यये परतो विभाषानकारस्य लोपो भवति । अत उपधायाः इति वृद्धिः; **अभाजि** । पक्षे—**अभञ्जि, अभङ्क्षाताम्, अभङ्क्षत** । **रधिजभोरचि** (VII. 1. 61.)—रधिहिंसागत्योः जभजृम्भीगात्राविनामे इत्येतयोर्धात्वोः नुमागमो भवति अजादौ प्रत्यये परतः; **अरन्धि, अरन्धिषाताम्, अरन्धिषत; अजम्भि, अजम्भिषाताम्, अजम्भिषत** । **रभेरशब्लिटोः**

(VII. 1. 63.)—रभेरङ्गस्य नुमागमो भवति शब्लिड्वर्जिते अजादौ प्रत्यये परतः; **प्रारम्भि, प्रारप्सताम्, प्रारप्सत । लभेश्च** (VII. 1. 64.)—लभेश्च नुम् पूर्ववत्; **अलम्भि । विभाषा चिण्णमुलोः** (VII. 1. 69.)—चिण् णमुल् इत्येतयोः परयोः वा नुम् केवलस्य लभेः; **अलाभि** । सोपसर्गस्य तु नित्यम्; **प्रालम्भि** । अदेवि, अदेविषाताम्, अदेविषत; असावि, असाविषाताम्, असाविषत; असोषताम्, असोषत; असविषाताम्, असविषत । अनाहि, अनत्साताम्, अनत्सत; आशि, आशिषाताम्, आशिषत; आक्षाताम्, आक्षत । निरचायि, निरचायिषा-ताम् निरचेषाताम् । अतोदि, लिङ्सिचावात्मनेपदेषु (I. 2. 11.) इति कित्वम्–अतुत्साताम्, अतुत्सत; अनोदि, अनुत्साताम्, अनुत्सत । अमारि, अमारिषाताम्; अमृषाताम्, अमृषत । अमोचि, अमुक्षाताम्, अमुक्षत; अरोधि, अरुत्साताम्, अरुत्सत; अभोजि, अभुक्षाताम्, अभुक्षत; अयोजि, अयुक्षाताम्, अयुक्षत; अतानि, अतनिषाताम्; अमानि, अमनिषाताम्; अकारि, अकारिषाताम् अकृषाताम्; अक्रायि, अक्रायिषाताम् अक्रेषाताम् । अवारि, अवारिषाताम्, अवारिषत; अवारी-षाताम्, अवारीषत; अवृषाताम्, अवृषत । अग्राहि, अग्राहिषाताम्, अग्रा-हिषत; अग्रहीषाताम्, अग्रहीषत । अचोरि; असिद्धवदत्राभात् (VI. 4. 22) इति चिण्वदिटोऽसिद्धत्वात् णेरनिटि (VI. 4. 51.) इति णिलोपः; अचोरिषाताम् अचोरयिषाताम् । अपालि, अपालिषाताम् अपालयिषाताम्; आर्चि, आर्चिषाताम् आर्चयिषाताम्; इत्यादि सर्वमुन्नेयम् ॥

॥ इति भावकर्मणोर्लुङ् ॥

---

॥ अथ भावकर्मणोर्लुट् ॥

लुटस्तासौ उपदेशे अजन्तानां धातूनां हन-ग्रह-दृशां च चिण्व-द्भावात् गुणवृद्धियुगिडागमादयो यथासंभवं भवन्ति । अन्यत्र कर्तरीव रूपम् । **भाविता भविता, एधिता, पक्ता,** नन्दिता, ध्वंसिता, **ध्यायिता ध्याता,** अत्ता, शायिता शयिता, वक्ता, हाविता होता, हाता हायिता, परिधायिता, दायिता दाता, स्थायिता स्थाता, लायिता लाता, नायिता नेता, लायिता लाता लेता, लोता लाविता, हारिता हर्ता, आस्तारिता आस्तरिता, धारिता धर्ता, **घानिता हन्ता** । दृशेः चिण्वदिटि गुणे **दर्शिता ;** चिण्वदिडभावे झलादौ सृजि दृशो र्झल्यमकिति (VI. 1. 58.) इत्यमा-गमः ; यणादेशः ; व्रश्चादिना षत्वम् ; ष्टुत्वम् ; **द्रष्टा** । देविता, साविता सविता सोता, परिणद्धा, अभिषाविता अभिषोता, अशिता अष्टा, निश्वा-यिता निश्वेता, तोत्ता, मारिता मर्ता, मोक्ता, रोद्धा, भोक्ता, योक्ता, तनिता, मनिता, कारिता कर्ता, क्रायिता क्रेता, वारिता वरिता वरीता, ग्राहिता ग्रहीता, चोरिता चोरयिता, पालिता पालयिता, अर्चिता अर्चयिता इत्यादि सर्वसुज्ञेयम् ॥

॥ इति भावकर्मणोर्लुट् ॥

---

॥ अथ भावकर्मणोर्लृङ् ॥

चिण्वदिडभावादिकं पूर्ववत् । **अभाविष्यत अभविष्यत,** कर्मणि— **अन्वभाविष्यत अन्वभविष्यत, ऐधिष्यत, अपक्ष्यत,** अनन्दिष्यत, अध्वं-सिष्यत, **अध्यायिष्यत अध्यास्यत,** आत्स्यत, अशायिष्यत अशयिष्यत, अ-वक्ष्यत, अहाविष्यत अहोष्यत, अहायिष्यत अहास्यत, अधायिष्यत अधा-स्यत, अदेविष्यत, असाविष्यत असविष्यत असोष्यत, अभ्यषाविष्यत अ-

भ्यषोष्यत, आशिष्यत, निरचायिष्यत निरचेष्यत, अतोत्स्यत, अमारिष्यत अमरिष्यत, अमोक्ष्यत, अरोत्स्यत, अभोक्ष्यत, अयोक्ष्यत, अतनिष्यत, अमनिष्यत; अकारिष्यत अकरिष्यत, अक्रायिष्यत अक्रेष्यत, अवारिष्यत अवरीष्यत अवरिष्यत। **अघानिष्यत**; ऋद्धनोरिति (VII. 2. 70.) इडागमः–**अहनिष्यत** । अग्राहिष्यत अग्रहीष्यत, **अदर्शिष्यत** अद्रक्ष्यत, अचोरिष्यत अचोरयिष्यत, अपालिष्यत अपालयिष्यत, आर्चिष्यत आर्चयिष्यत । इत्यादि सर्वमुन्नेयम् ॥

**॥ इति भावकर्मणोर्लृङ् ॥**

---

**॥ अथ भावकर्मणोर्लृट् ॥**

चिण्वद्भावादिकं पूर्ववत् । **भाविष्यते भविष्यते**; **अनुभाविष्यते अनुभविष्यते**; **एधिष्यते, पक्ष्यते**, नन्दिष्यते, ध्वंसिष्यते, **व्यायिष्यते व्यास्यते**, अत्स्यते, अतिशयिष्यते अतिशायिष्यते, वक्ष्यते, हाविष्यते होष्यते, हायिष्यते हास्यते, निधायिष्यते निधास्यते, दायिष्यते दास्यते, लायिष्यते लास्यते, नायिष्यते नेष्यते, प्रसाविष्यते प्रसविष्यते प्रसोष्यते, अभिषाविष्यते अभिषोष्यते, अशिष्यते अक्ष्यते, निश्चायिष्यते निश्चेष्यते, तोत्स्यते, मारिष्यते मरिष्यते, मोक्ष्यते, रोत्स्यते, भोक्ष्यते, योक्ष्यते, तनिष्यते, मनिष्यते, कारिष्यते करिष्यते, हारिष्यते हरिष्यते, क्रायिष्यते क्रेष्यते, वारिष्यते वरिष्यते वरीष्यते, **घानिष्यते हनिष्यते**, ग्राहिष्यते ग्रहीष्यते, **दर्शिष्यते द्रक्ष्यते**, चोरिष्यते चोरयिष्यते, पालिष्यते पालयिष्यते, अर्चिष्यते अर्चयिष्यते । इत्यादिसर्वमुन्नेयम् ।

**॥ इति भावकर्मणोर्लृट् ॥**

---

अत्र सङ्ग्रह श्लोकः ।

चिण्वद्वृद्धिर्युक् च हन्तेश्च घत्वं
दीर्घश्चोक्तो यो मितां वा चिणीति ।
इट् चासिद्धस्तेन मे लुप्यते णि-
र्नित्यश्चायं वल्निमित्तो विघाती ॥

**कर्मवत्कर्मणा तुल्यक्रियः** (III. 1. 87.)—कर्तरिशविति कर्तृ-ग्रहणमिहानुवर्तते; तत् प्रथमया विपरिणम्यते; कर्मणा कर्मणि क्रियया कर्मस्थया क्रियया तुल्यक्रियो यः कर्ता सकर्मवद्भवति; **भिद्यते कुसूलं स्वयमेव** । एवन्तर्हि घटं करोतीत्यत्रापि कर्मवद्भावः कथं न स्यात्? मैवम्; यस्मिन्कर्मणि कर्तृभूतेऽपि कर्मणीव क्रिया लक्ष्यते स कर्ता कर्मवद्भवति । इति कर्मवद्भावात् कर्मकर्तर्यपि कर्माश्रिता आत्मनेपद–चिण्–चिण्वद्भावा-दयः भवन्ति । एवं च कर्मकर्तर्यपि एतान्येवोदाहरणानि सर्वेषां धातूनां संभवन्ति । लुङि तु विशेषः । **अचः कर्मकर्तरि** (III. 1. 62.)—अज-न्ताद्धातोः परस्य च्लेः कर्मकर्तरि तशब्दे परतोऽन्यनरस्यां चिणादेशो भवति । प्राप्तविभाषेयम्; **अलावि केदारः स्वयमेव** । चिणभावे–**अला-विष्ट केदारः स्वयमेव** । चिण्वदिडभावे–**अलविष्ट केदारः स्वयमेव** । एवमेव अहारि भारः स्वयमेव; अहारिष्ट भारः स्वयमेव; अहृत भारः स्वयमेव । अच इति किम्? **अभेदि काष्ठं स्वयमेव** । कर्मकर्तरीति किम्? अकारि घटो देवदत्तेन । **दुहश्च** (III. 1. 63.)—दुहेर्धातोः परस्य च्लेः कर्मकर्तरि तशब्दे परतः अन्यतरस्यां चिणादेशो भवति; **अदोहि गौः स्वयमेव** । चिणभावे–क्सादेशे कृते, लुग्वा दुहदिहेत्यादिना (VII. 3. 73.) क्सस्य वा लुक्; **अदुग्ध गौः स्वयमेव** । लुगभावे–**अधुक्षत गौः**

**स्वयमेव** । कर्मकर्तरीत्येव; अदोहि गौर्गोपालकेन । न रुधः (III. 1. 64.)—रुधिर् इत्यस्मात्परस्य च्लेः कर्मकर्तरि चिणादेशो न भवति; **अन्ववारुद्ध गौः स्वयमेव** । कर्मकर्तरीति किम्? अन्ववारोधि गौर्गोपालेन । **तपोऽनुतापेच** (III. 1. 65.)—नेति वर्तते; तपसन्तापे इत्यस्मात्परस्य च्लेः कर्मकर्तरि तशब्दे परतः चिणादेशो न भवति; अनुतापेच । अनुतापः पश्चात्तापः; तस्य ग्रहणमकर्मकर्त्रर्थम्; तत्र हि भावकर्मणोरपि प्रतिषेधो भवति । **अतप्त तपस्तापसः** । तपस्तपकर्मकस्यैव (III. 1. 88.) इति; अत्र कर्मवद्भावः । **अन्ववातप्त** पापेन कर्मणा; अत्र शब्दे कर्मणि लकारः, पापेनेति कर्तरि तृतीया ॥

॥ इति **चिण्वद्भावप्रकरणम्** ॥

॥ **इत्यार्धधातुकपरिच्छेदः समाप्तः** ॥

---

॥ **अथ सनाद्यन्ताः प्रदर्श्यन्ते** ॥

**गुप्तिज्किद्भ्यस्सन्** (III. 1. 5.)—गुपगोपने, तिजनिशाने, कितनिवासे, इत्येतेभ्यो धातुभ्यः सन्प्रत्ययो भवति । निन्दा–क्षमा–व्याधि प्रतीकारेषु सन्निष्यते । नकारःसन्यङोः (VI. 1. 9.) इति विशेषणार्थः, धात्वधिकाराविहितत्वादनार्धधातुकः; तस्मादिड्गुणौ नभवतः । गुप्–स इति स्थिते, सनाद्यन्ताधातवः (III. 1. 32.) इति धातुसंज्ञायां **सन्यङोः** (VI. 1. 9.)—षष्ठ्यन्तमेतत्; सन्नन्तस्य यङन्तस्य चानभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचोद्वितीयस्य वा यथा योगं द्वे भवतः । हलादिश्शेषः; कुहोश्चुः इति चुत्वम् । जुगुप्–स इति स्थिते, पूर्ववल्लडादयः । गुपादि-

ष्वनुबन्धकरणमात्मनेपदार्थम् । तस्मादवयवेकृतं लिङ्गंसमुदायस्य विशेषकं भवति इति गुपादिभ्यः परस्य लकारस्य स्थाने आत्मनेपदम् । शबादि-कार्यं पूर्ववत् : **जुगुप्सते** ; चोः कुः (VIII. 2. 30.) इति कुत्वम्—**तितिक्षते** : **चिकित्सते** । **मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य** (III. 1. 6.)—अत्राप्यर्थविशेषे सन्निष्यते ; मान पूजायां : बध बन्धने, दान अवखण्डने, शान तेजने, इत्येतेभ्यो धातुभ्यो जिज्ञासावैरूप्यावतर्जननिशा तनेषु यथायथं सन्प्रत्ययो भवति ; अभ्यासस्य इकारस्य च दीर्घो भवति । अस्याप्यनार्धधातुकत्वादिडभावः : नश्चापदान्तस्य झलि (VIII. 3. 24.) इत्यनुस्वारः । धातुसंज्ञायां सन्यङोः इति द्विर्वचनम् ; हलादिश्शेषः ; ह्रस्वः । **भृञामित्** (VII. 4. 76.) इति वर्तमाने **सन्यतः** (VII. 4. 79.)—सनि परतोऽकारान्तस्याभ्यासस्य इकारादेशो भवति । पश्चाद्दीर्घ-श्चाभ्यासस्येति दीर्घः । लडादिकार्यं पूर्ववत् ; **मीमांसते** । भष्भावः, धकारस्य चर्त्वेन तकारः : **बीभत्सते** ; **दीदांसते** ; **शीशांसते** ॥

अथेच्छार्थे सन् प्रत्ययो विधीयते । भू सत्तायाम् । **धातोः कर्मणस्समानकर्तृकादिच्छायां वा** (III. 1. 7.)—**इषिकर्मा यो धातुः** इषिणैव समानकर्तृकः तस्मादिच्छायाम् अर्थे वा सन्प्रत्ययो भवति । **नेड्वशि कृति** (VII. 2. 8.), **श्र्युकः किति** (VII. 2. 11.) इत्यनु-वर्तमाने, **सनिग्रहगुहोश्च** (VII. 2. 12.)—ग्रह गुह इत्येतयोरुगन्तानां चाङ्गानां सनिपरत इडागमो न भवति । **इको झल्** (I. 2. 9.)—इगन्ताद्धातोः परो झलादिस्सन् किद्भवति । इति कित्वात् गुणाभावः ; आदेशप्रत्यययोः (VIII. 3. 59.) इति षत्वम् ; सनाद्यन्ता धातवः (III. 1. 32.) इति धातुसंज्ञायां, सन्यङोः (VI. 1. 9.) इति

द्विर्वचनादि पूर्ववत् । बुभूष इति स्थिते पूर्ववल्लडादयः; शप्; अतो गुणे (VI. 1. 97.) इति पररूपत्वम्; **बुभूषति, बुभूषतः, बुभूषन्ति**; इत्यादि । लङि–**अबुभूषत्, अबुभूषताम्, अबुभूषन्**; इत्यादि । लोटि–**बुभूषतु बुभूषतात्, बुभूषताम्, बुभूषन्तु**; इत्यादि । लिङि— **बुभूषेत्, बुभूषेताम्, बुभूषेयुः**; इत्यादि । **अतो लोपः** (VI. 4. 48.) —अकारान्तस्याङ्गस्य लोपो भवति आर्धधातुके परतः । यकि–**बुभूष्यते; अबुभूष्यत; बुभूष्यताम्; बुभूष्येत**; इत्येवमादयः । आशिषि– **बुभूष्यात्, बुभूष्यास्ताम्, बुभूष्यासुः** । लिटि–**बुभूषाञ्चकार, बुभूषाञ्चक्रतुः, बुभूषाञ्चक्रुः** । लुङि–**अबुभूषीत्, अबुभूषिष्टाम्, अबुभूषिषुः** । लुटि–**बुभूषिता, बुभूषितारौ, बुभूषितारः** । लृङि–**अबुभूषिष्यत्** । लृटि–**बुभूषिष्यति** । चिण्वदिटि–**बुभूषिषीष्ट; बुभूषाञ्चक्रे; अबुभूषि; बुभूषिता; अबुभूषिष्यत; बुभूषिष्यते** ॥

**एध वृद्धौ । अजादेर्द्वितीयस्य** (VI. 1. 2.)—अजादेर्धातोरवयवस्य द्वितीयस्यैकाचो द्वे भवतः । अभ्यासकार्यं पूर्ववत्; एदिधिष इति स्थिते लट्; तस्य स्थाने तिप् । **पूर्ववत्सनः** (I. 3. 62.)—सनः पूर्वो यो धातुरात्मनेपदी तद्वत् सन्नन्तादप्यात्मनेपदं भवति; **एदिधिषते; एदिधिषताम्; ऐदिधिषत; एदिधिषेत** । यकि–**एदिधिष्यते; ऐदिधिष्यत; एदिधिष्यताम्; एदिधिष्येत** । आशिषि–**एदिधिषिषीष्ट** । लुङि–**ऐदिधिषिष्ट** । लिटि–**एदिधिषाञ्चक्रे** । लुटि–**एदिधिषिता** । लृङि–**ऐदिधिषिष्यत** । लृटि–**एदिधिषिष्यते** । चिणि लुङि–**ऐदिधिषि** । अन्यत्पूर्ववत् । **डुपचष् पाके** । सन्; चोः कुः इति कुत्वम्; आदेशप्रत्यययोः इति षत्वम्; हलादित्वात्प्रथमस्यैकाचो द्विर्वचनम्; हलादिश्शेषः;

सन्यतः इत्तीत्वम्; पिपक्षति पिपक्षते; अपिपक्षत् अपिपक्षत; पिपक्षतु पिपक्षताम्; पिपक्षेत् पिपक्षेत । यकि–पिपक्ष्यते, अपिपक्ष्यत, पिपक्ष्यताम्, पिपक्ष्येत । आशिषि–पिपक्ष्यात् पिपक्षिषीष्ट । लिटि–पिपक्षांचकार पिपक्षांचक्रे । लुङि–अपिपक्षीत् अपिपक्षिष्ट । लुटि–पिपक्षिता । लृङि–अपिपक्षिष्यत् अपिपक्षिष्यत । लृटि–पिपक्षिष्यति पिपक्षिष्यते । चिणि–अपिपक्षि । एवमेवान्येषामपि भ्वादीनां सन्नन्त-रूपाणि नेयानि ॥

अद् भक्षणे । सन्; लुङ्सनोर्घस्लृ (VI. I. 37.) इति घस्लादेशः । सस्यार्धधातुके (VII. 4. 49.)—सकारान्तस्याङ्गस्य सकारादावार्ध-धातुके परतस्तकारादेशो भवति; जिघत्सति, अजिघत्सत्, जिघत्सतु, जिघत्सेत् । यकि–जिघत्स्यते, अजिघत्स्यत, जिघत्स्यताम्, जिघ-त्स्येत । आशिषि–जिघत्स्यात् । लिटि–जिघत्साञ्चकार । लुङि–अजिघत्सीत् । लुटि–जिघत्सिता । लृङि–अजिघत्सिष्यत् । लृटि–जिघत्सिष्यति । चिण्वदिटि–जिघत्सिषीष्ट, जिघत्साञ्चक्रे, अजिघत्सि, जिघत्सिता, अजिघत्सिष्यत, जिघत्सिष्यते । शीङ् स्वप्ने, शिशयिषते, अशिशयिषत, शिशयिषताम्, शिशयिषेत । यकि–शिशयिष्यते, अशिशयिष्यत, शिशयिष्यताम्, शिशयिष्येत । आशीरादिषु–शिश-यिषिषीष्ट, शिशयिषाञ्चक्रे, अशिशयिषिष्ट, शिशयिषिता, अशिशयि-षिष्यत, शिशयिषिष्यते । ब्रूञ्; ब्रुवोवचिरादेशः; चोःकुरिति कुत्वम्; द्विर्वचनम् अभ्यासकार्यञ्च; विवक्षति विवक्षते, अविवक्षत् अविवक्षत, विवक्षतु विवक्षताम्, विवक्षेत् विवक्षेत । यकि–विवक्ष्यते । आशीरादिषु–विवक्ष्यात् विवक्षिषीष्ट, विवक्षाञ्चकार विवक्षाञ्चक्रे, अविवक्षीत् अविवक्षिष्ट,

विवक्षिता, अविवक्षिष्यत् अविवक्षिष्यत, विवक्षिष्यते । चिण्वदिटि आत्मनेपदरूपं कृत्स्नं समानम्; लुङि—अविवक्षि—इति भेदः ॥

**गम्लृ सृप्लृ** गतौ; अस्मात् सन् । **गमेरिट् । परस्मैपदेषु** (VII. 2. 58.)—गमेर्धातोस्सकारादावार्धधातुके परस्मैपदेषु इडागमो भवति । द्विर्वचनादिकार्यं पूर्ववत्; **जिगमिषति** । परस्मैपदेष्वित्यत्र; **संजिगंसते** । इड्ग्रहणं नित्यार्थम् । **इण्** गतौ; **णौगमिरबोधने** (II. 4. 46.) इत्यनुवर्तमाने, **सनिच** (II. 4. 47.)—सनि परतः इणो अबोधनार्थे वर्तमानस्य गमिरादेशो भवति । इकार उच्चारणार्थः; पूर्ववत् गमेरिट् परस्मैपदेषु इति इडागमः; ततोद्विर्वचनम् अभ्यासकार्यञ्च; **जिगमिषति** । यदा बोधने गमिरादेशो न भवति तदा—अजादेर्द्वितीयस्य (VI. 1. 2.) इति द्वितीयस्यैकाचो द्विर्वचनम्; सवर्णदीर्घः; **प्रतीषिषति** । **इण्वदिक इतिवक्तव्यम्** (वा. II. 4. 45.); अत्रापि धातोस्सनिचेति गमिरादेशः; **अधिजिगमिषति** । **इङ्** अध्ययने; **इङ्श्च** (II. 4. 48.)—इङश्च गमिरादेशो भवति सनि परतः । अधिजिगम्—स इति स्थिते, **अज्झनगमां-सनि** (VI. 4. 16.)—अजन्तानामङ्गानां हनगम इत्येतयोश्च झलादौ सनि परतो दीर्घो भवति । द्विर्वचनादिकार्यं पूर्ववत्; **अधिजिगांसते** । **गमेरिङादेशस्यैव दीर्घो भवतीति वक्तव्यम्** (वा.); इहमाभूत्—**सञ्जिगंसते वत्सो माता** । **हन** हिंसागत्योः; अस्मात् सन्; अज्झनगमांसनि इति दीर्घः; नश्चापदान्तस्य झलि (VIII. 3. 24.) इत्यनुस्वारः; ततो द्विर्वचनमभ्यासकार्यञ्च । **अभ्यासाच्च** (VII. 3. 55.) —अभ्यासादुत्तरस्य हन्तेर्हकारस्य कवर्गादेशो भवति; **जिघांसति** । **षणु** दाने; धात्वादेष्षस्सः (VI. 1. 64.) इति षत्वनिवृत्तौ णत्वनिवृत्तिः;

ततस्सन्प्रत्ययः । **सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्**—(VII. 2. 49.)—इवन्तेभ्य ऋधादिभ्यश्च सन इड्वास्यात् । इति पक्षे इडागमः । तदभावपक्षे, **जनसनखनांसन् झलोः** (VI. 4. 42.)—झलि क्ङिति निवर्तते; जन सन खन इत्येतेषां सनि झलादौ क्ङिति प्रत्ययेपरतः आकारादेशो भवति । मचालोन्त्यस्येति नकारस्य भवति; सवर्णदीर्घः; द्विर्वचनादिकार्यं पूर्ववत्; **सिषासति** । झल्ग्रहणं सन्विशेषणमिहानुवर्तते; तेन सनीवन्तर्धेति यदा इडागमः तदा आकारादेशो न भवति; **सिसनिषति** । **जनी** प्रादुर्भावे: **जिजनिषते** । **खन** अवदारणे: **चिखनिषति** ॥

**दह** भस्मीकरणे: दादेर्धातोर्घः (VIII. 2. 32.) इति घत्वम्; भष्भावः; **दिधक्षति** । **स्मिपूङ्रञ्ज्वशां सनि** (VII. 2. 74.)—स्मिङ् ईषद्धसने, पूङ् पवने—ङकारानुबन्धोच्चारणं पूञो निवृत्त्यर्थम्, ऋ गतिप्रापणयोः भौवादिकः, ऋ गतौ—जौहोत्यादिकः, उभयोरपि ग्रहणम्—अञ्जू श्लक्षण व्यक्तिकान्तिगतिषु, अशू व्याप्तौ, इत्येतेषां धातूनां वा सनि परत इडागमो भवति । स्मयतेस्सनः अनेन इडागमः; गुणः; द्विर्वचनमभ्यासकार्यञ्च; लट्; पूर्ववत्सनः (I. 3. 62.) इत्यात्मनेपदम्; **सिस्मयिषते** । पूङः सन इटि गुणेचकृते द्विर्वचनेऽचि (I. 1. 59.)—द्वित्वनिमित्ते अचि अजादेशः स्थानिवद्भवति द्वित्वेकार्ये । इति स्थानिवद्भावात् पूशब्दस्यद्वित्वे, **ओः पुयण्ज्यपरे** (VII. 4. 80.)—सनिपरे यदङ्गं तदवयवस्य अभ्यासोकारस्य इत्वं स्यात् पवर्गयण्जकारेषु अवर्णपरेषु परतः । इत्यभ्यासस्य इकारः; **पिपविषते** । ऋ धातोः सनः इडागमः; गुणः; अजादित्वात् द्वितीयस्यैकाचो द्विर्वचनम्; **अरिरिषति** । अञ्जू

धातोरपि सनि इडागमे कृते द्वितीयस्यैकाचो द्विर्वचनम्; नन्द्राःसंयोगादयः (VI. 1. 3.) इति नकारस्य द्विर्वचननिषेधः; **अञ्जिजिषति** । अशू व्याप्तौ; **अशिशिषते** । अश भोजने इत्यस्य ग्रहणं न भवति उदात्तत्वादेवेटास्सिद्धत्वात्; अञ्जेस्तु ऊदित्वादिड्विकल्पे प्राप्तेऽनेन नित्यमिट् । किरादेस्तुऽगन्तत्वादनुदात्तत्वाच्च सनिग्रहगुहोश्च (VII. 2. 12.) इति प्रतिषेधे, एकाचउपदेशेऽनुदात्तात् (VII. 2. 10.) इति प्रतिषेधे च प्राप्ते, इदमारभ्यते । **किरश्चपञ्चभ्यः** (VII. 2. 75.)—कॄ विक्षेपे, गॄ निगरणे, दृङ् अनादरे, धृङ् अवस्थाने, प्रच्छज्ञीप्सायाम्, इत्येभ्यः पञ्चभ्यः सनि परत इडागमो भवति; **चिकरिषति, जिगरिषति, दिदरिषते, दिधरिषते** । प्रच्छ; अस्मात्सन् इडागमः; रुदविदमुषग्रहिस्वपि प्रच्छस्संश्च (I. 2. 8.) इति वक्ष्यमाणं कित्वम्; ग्रहिज्यादिना सम्प्रसारणम्;—छे चेति तुगागमः; द्विर्वचनं, हलादिश्शेषः, उरदित्यत्वं, सन्यतः इतीत्वम्; **पिपृच्छिषति** । पञ्चभ्य इति किम्? सृज विसर्गे—सिसृक्षति ।

**रुदविदमुषग्रहिस्वपिप्रच्छस्संश्च** (I. 2. 8.)—रुदिर् अश्रुविमोचने, विद ज्ञाने, मुषस्तेये, ग्रह उपादाने, ञिष्वप् शये, प्रच्छज्ञीप्सायाम्, इत्येतेभ्यो धातुभ्यः परौ सन् क्त्वा च कितौ भवतः; कित्वाद्गुणाभावः; द्विर्वचनादिकार्यं पूर्ववत्; **रुरुदिषति, विविदिषति, मुमुषिषति** । ग्रहेस्सनि सनिग्रहगुहोश्च इति इडागमप्रतिषेधः; रुदविदेतिकित्वम्, ग्रहिज्यादिना सम्प्रसारणम्, परपूर्वत्वम्; होढः इति ढत्वम्, भष्भावात् गकारस्य घकारः, षढोः कस्सि इति कत्वम्, षत्वम् ततोद्विर्वचनादि; **जिघृक्षति** । वचिस्वपि (VI. 1. 15.) इति सम्प्रसारणम्; **सुषुप्सति** ।

**भिदिर्** विदारणे; **इको झल्** (I. 2. 9.) इति वर्तमाने, **हलन्ताच्च** (I. 2. 10.)—समीपवचनोऽन्तशब्दः; हल् चासावन्तश्चेति हलन्तः; हलन्तादिक्समीपात्परो झलादिस्सन् किद्भवति। कित्त्वाद्गुणाभावः; खरि च इति चर्त्वम्, द्विर्वचनादिपूर्ववत्; **बिभित्सति**। **बुध** अवगमने; सन्; एकाचो बशो भषित्यादिना (VIII. 2. 37.) भष्भावः; चर्त्वम्, द्विर्वचनादिकार्यम्; **बुभुत्सते**। **दुह**—प्रपूरणे; सन्; कित्वाद्गुणाभावः; घत्वभष्भावचर्त्वादि; द्विर्वचनम्, अभ्यासकार्यञ्च; **दुधुक्षति**। दिह उपचये; दिधक्षति। लिह आस्वादने; लिलिक्षति। **नोपधात्थफान्ताद्वा** (I. 2. 23.) इत्यतोवेति अनुवर्तमाने, **रलो व्युपधाद्धलादेस्संश्च** (I. 2. 26.)—उश्च इश्च तावुपधे यस्य सः व्युपधः; उकारोपधादिकारोपधाच्च हलादेर्धातोः रलन्तात् परौ संश्च क्त्वाच सेटौ वा कितौ भवतः। कित्वपक्षे गुणाभावः; द्विर्वचनम्। **द्युतिस्वाप्योस्सम्प्रसारणम्** (VII. 4. 67.)—द्युति स्वापि इत्येतयोरभ्यासस्य सम्प्रसारणम्भवति। हलादिशेषापवादः; **विदिद्युतिषते**। कित्वाभावे गुणः; **विदिद्योतिषते**। स्वापिर्ण्यन्तो गृह्यते; तस्याभ्यासनिमित्तप्रत्ययेनानन्तर्ये सति सम्प्रसारणमिष्यते; **सुष्वापयिषति**। अण्यन्तपक्षे रुदविदेति कित्वम्; वचस्वपीति सम्प्रसारणम्; **सुषुप्सति**। लुभ; लुलुभिषति, लुलोभिषति। शुभ; शुशुभिषते, शुशोभिषते। लिख्; लिलिखिषति, लिलेखिषति। रल इति किम्? दिदेविषति। व्युपधादिति किम्? विवर्तिषते। हलादेरिति किम्? इषु इच्छायाम्; सन्; इडागमः; गुणः; अजादित्वात् द्वितीयस्यैकाचो द्विर्वचनम्; एषिषिषति। सेडित्येव; बुभुत्सते। विद सत्तायाम्; विवित्सते। विद विचारणे; विवित्सति। विद ज्ञाने; सेट्; विविदिषति, संविविदिषते। कुट; गाङ्कुटादिभ्योऽञ्णिन्ङित् (I. 2. 1.)

इति ङित्वाद्गुणाभावः; चुकुटिषति, पुपुटिषति । ओविजी भयचलनयोः; विज इट् (I. 2. 2.) इति इडादिप्रत्ययस्य ङित्वान्नगुणः; उद्विविजिषते । **न वृद्भ्यश्चतुर्भ्यः** (VII. 2. 59.)—वृतु वर्तने, वृधु वृद्धौ, शृधु शब्दकुत्सायाम्, स्यन्दू प्रस्रवणे इत्येतेभ्यो धातुभ्यः उत्तरस्य इडागमो न भवति परस्मैपदेषु परतः । पूर्ववत्सनः (I. 3. 62.) इत्यात्मनेपदेप्राप्ते, वृद्भ्यस्स्यसनोः (I. 3. 92.) इति वृतादिभ्यो धातुभ्यः स्ये सनि च परतः परस्मैपदम्भवति; विवृत्सति विवर्तिषते, विवृत्सति विवर्धिषते, शिशृत्सति शिशर्धिषते; सिस्यत्सति; सिस्यन्दिषते । विभाषेट उच्यन्ते। सेऽसिचिकृतचृतछृदतृदनृतः (VII. 2. 57.) इति कृतीवेष्टने, चृतीहिंसा-ग्रन्थनयोः, उच्छृदिर् दीप्तिदेवनयोः, उतृदिर् हिंसानादरयोः, नृती गात्रविक्षेपे, इत्येतेभ्यो धातुभ्यो वा इडागमो भवति सकारादावसिच्यार्ध-धातुके परतः; चिकृत्सति चिकर्तिषति, चिचृत्सति चिचर्तिषति, चिच्छृत्सति चिच्छर्दिषति, तितृत्सति तितर्दिषति, निनृत्सति निनर्तिषति । अनिट् पक्षे सर्वत्र हलन्ताच्च (I. 2. 10.) इति कित्वम् ॥

अर्च पूजायाम्; अजादित्वाद्द्वितीयस्यैकाचो द्विर्वचनम्; तदन्तर्भा-वात् रेफस्य द्विर्वचने प्राप्ते, नन्द्राःसंयोगादयः (VI. 1. 3.) इति द्वि-तीयस्यैकाचोऽवयवभूता नकार–दकार–रेफा न द्विरुच्यन्ते; **अर्चिचिषति** । नन्द्रा इति किम्? ईक्ष दर्शने; ईचिक्षिषते । संयोगादय इति किम्? प्राणिणिषति । **बकारस्याप्ययं प्रतिषेधो वक्तव्यः** (वा. VI. 1. 3.) इति **उब्ज** आर्जवे इत्यस्य **उब्जिजिषति** इति भवति । **स्पर्ध** संघर्षे; शर्पूर्वाः खयः (VII. 4. 61.) इति पकारशेषः; पिस्पर्धिषते । **ष्टुञ्** स्तुतौ; अभ्यासे तुकारः शेषः; इको झल् इति कित्त्वम्; दीर्घः षत्वं च; **तुष्टूषति** ॥

हु दानादानयोः ; **अज्झनगमां सनि** (VI. 4. 16.)—अजन्तानाम् अङ्गानां हनः अजादेशगमेश्च झलादौ सनि परतो दीर्घो भवति ; **जुहूषति** । ओहाङ् गतौ : **जिहासते** । ओहाक् त्यागे ; **जिहासति** । डुदाञ् दाने ; **सनिमीमाघुरभलभशकपतपदामच इस्** (VII. 4. 54.)—सकारादौ सनि प्रत्यये परतो मी मा घु रभ लभ शक पत पद इत्येतेषामचः स्थाने इस् इत्ययमादेशो भवति । सः स्यार्धधातुके (VII. 4. 49.) इति तत्वम्; द्विर्वचनम् ; **अत्रलोपोऽभ्यासस्य** (VII. 4. 58.)—यदेतनुक्रान्तं सनिमीमित्यादि मुचोऽकर्मकस्य गुणोवेति यावत् अत्राभ्यासस्य लोपोभवति ; **दित्सति** । मीञ् हिंसायाम , डुमिञ् प्रक्षेपणे ; विशेषानुपादानादुभयोरपि ग्रहणम् । ननु मी इत्येतस्मिन्रूपे उच्चार्यमाणे मिनोतेर्ग्रहणं न लभ्यते । नैषदोषः ; तस्याप्यज्झनगमां सनीति दीर्घत्वे तद्रूपं सम्भवत्येव । लडादिकार्यम् ; **मित्सति, मित्सते** । मा इत्यविशेषेण माङ्मेङोर्ग्रहणम् ; मित्सते, अपमित्सते । **रभ** राभस्ये ; स्कोस्संयोगाद्योरिति सकारलोपः ; खरिचेति चर्त्वम् ; आङ् पूर्वः ; **आरिप्सते** । एवमेव लभः **लिप्सते**; शकः **शिक्षति** ; पतः **पित्सति** ; पदः **पित्सते** । **आप्ज्ञप्यृधामीत्** (VII. 4. 55.)—आप्लृ ज्ञपि ऋध इत्येतेषामचस्स्थाने ईकारादेशो भवति सनि सकारादौ प्रत्यये परतः ; **ईप्सति** । ज्ञपेर्धातोस्तु णेः पूर्वविप्रतिषेधेन लोपः ; **ज्ञीप्सति** । सनीत्येव ; **प्राप्स्यति** । सीत्येव ; **जिज्ञपयिषति** । अत्र सनीवन्तर्धेति ज्ञपेरिड्विकल्पः । दन्भु दम्भने ; **दम्भ इच्च** (VI. 4. 56.)—दन्भेरचः स्थाने इकारादेशो भवति चकारादीत्वञ्च सनि सकारादौ प्रत्यये परतः । हलन्ताच्च (I. 2. 10.) इत्यत्र हल्ग्रहणस्य जातिवाचकत्वात् दन्भेः परस्य सनः कित्वम् ; कित्वात् अनिदितामिति नलोपः ; भष्भावः ; चर्त्वद्विर्वचने ; अभ्यासलोपश्च ; **धिप्सति धीप्सति** ।

सात्येव दिदम्भिषति । **मुमुक्ष्यति** वत्सं देवदत्तः; **मुमुक्षते** यदा वत्सः स्वयमेव मोक्तुमिच्छति तदा । मुचोऽकर्मकस्य गुणो वा (VII. 4. 57.) —मुचेरकर्मकस्य वा गुणो भवति सनि सकारादौ प्रत्यये परतः । अभ्यासलोपश्च; मोक्षते वत्सः स्वयमेव । गुणाभावे अभ्यासलोपस्याप्यभावः; मुमुक्षते वत्सः स्वयमेव । कर्मवद्भावादात्मनेपदम् । अकर्मकस्येति किम्? मुमुक्षति वत्सं देवदत्तः । कर्मकर्तरि मुचिरकर्मको भवति, कर्मविशेषस्याविवक्षितत्वात् । चक्षिङः ख्याञादेशः, आचिख्यासते । **ज्ञाश्रुस्मृदृशां सनः** (I. 3. 57.)—ज्ञा श्रु स्मृ दृश् इत्येतेषां सनन्तानामात्मनेपदं भवति । तत्र जानातेः अपह्नवे ज्ञः (I. 3. 44.) इत्यादिभिः त्रिभिस्सूत्रैरात्मनेपदं विहितम्; श्रुदृशोरपि समोगमृच्छीति विहितम्; तद्विषये पूर्ववत्सनः (I. 3. 62.) इति सिद्धमेव; ततोऽन्यत्रेदं विधीयते; स्मरतेः पुनरप्राप्ते विधानम् । धर्मं **जिज्ञासते** । गुरून् **शुश्रूषते**; अत्र श्र्युकः किति (VII. 2. 11.) इतीट्प्रतिषेधः; अज्झनगमां सनि (VI. 4. 16.) इति दीर्घः । **स्मृ** चिन्तायाम्; सनः इको झल् इति कित्वम्; श्र्युकः कितीति इट्प्रतिषेधः; अज्झन इति दीर्घः उदोष्ठ्यपूर्वस्य इत्युत्वम्; हलि चेति दीर्घः द्विर्वचनादिकार्यं पूर्ववत्; नष्टं **सुस्मूर्षते** । एवमेव नृपं **दिदृक्षते** । नानोर्ज्ञः (I. 3. 58.)—पूर्वेण प्राप्तमात्मनेपदं न भवति अनुपूर्वात् जानातेः सन्नन्तात् । सकर्मकस्यैवायं प्रतिषेधः; **पुत्रमनुजिज्ञासति** । **प्रत्याङ्भ्यां श्रुवः** (I. 3. 59.)—प्रति आङ् इत्येवं पूर्वात् शृणोतेस्सन्नन्तादात्मनेपदं न भवति; **प्रतिशुश्रूषति आशुश्रूषति** । प्रत्याङ्भ्यामिति किम्? संशुश्रूषते । **ह्वेञ्** स्पर्धायां शब्दे च; **ह्वस्सम्प्रसारणम्**; (VI. 1. 32.) इत्यनुवर्तमाने, **अभ्यस्तस्य च** (VI. 1. 33.)—ह्व इति वर्तते; तत् अभ्यस्तस्येत्यनेन व्यधिकरणम्; अभ्यस्तस्ययाह्वयतिः—

कश्चाभ्यस्तस्य ह्वयतिः? यः तस्य कारणम्—नेनाभ्यस्तस्यह्वयतेः प्रागेव द्विर्वचनात् सम्प्रसारणम् भवति; **जुहूषिषति** । जि जये; अज्झनगमां सनीति दीर्घः; सन्लिटोर्जेः (VII. 3. 57.) इत्यभ्यासादुत्तरस्य जयतेः कुत्वम्; **विजिगीषते** । हि गतौ; अस्मात् सन्; अज्झनगमां सनीति दीर्घः; षत्वम्; द्विर्वचनादि पूर्ववत्; **हेरचङि** (VII. 3. 56.)—हिनोतेर्धातोर्हकारस्याभ्यासादुत्तरस्य कवर्गादेशो भवति अचङि प्रत्यये परतः; **प्रजिघीषति** । **सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्** (VII. 2. 49.)—इवन्तानाम् धातूनाम् ऋध भ्रस्ज दम्भु श्रि स्वृ यु ऊर्णु भर ज्ञपि सन् इत्येतेषाञ्च वा इडागमो भवति सनि परतः । इवन्तानाम् धातूनाम्—**दिदेविषति सिसेविषति** इत्यादि । इडभावे तु, हलन्ताच्च (I. 2. 10.) इति कित्वम्; च्छ्वोश्शूडनुनासिके च (VI. 4. 19.)—छ इत्येतस्य सतुक्कस्य, वकारस्य च स्थाने यथासङ्ख्यम् श् ऊठ् इत्येतावादेशौ भवतः अनुनासिकादौ प्रत्यये, क्वौ, झलादौ क्ङिति च परतः । यणादेशः; द्विर्वचनादि; **दुद्यूषति सुस्यूषति** इत्यादि । ऋधु वृद्धौ; पक्षे इडागमः; पुगन्तलघूपधगुणः; **अर्दिधिषति** । इडभावे, आप्ज्ञप्यृधामीत् (VII. 4. 55.) इति ईकारादेशोऽभ्यासलोपश्च; **ईर्त्सति** । **भ्रस्ज** पाके; पक्षे इडागमः; **बिभ्रज्जिषति** । तस्मिन्नेवपक्षे, भ्रस्जोरोपधयोरमन्यतरस्याम् (VI. 4. 47.) इति भ्रस्जो रेफस्योपधायाश्च निवृत्तिर्भवति रोपधयोरिति स्थानषष्ठीनिर्देशात्; मित्वाच्चायमन्त्यादचः परो भवति; **बिभर्जिषति** । इडभावेऽपि रमागमः; **बिभर्क्षति** । रमागमाभावे, स्कोस्संयोगाद्योरन्ते च (VIII. 2. 29.) इति सकारलोपः; **बिभ्रक्षति** । **दम्भु** दम्भने; पक्षे इडागमः; **दिदम्भिषति** । इडभावे, दम्भ इच्च (VII. 4. 56.) इति इत्वमीत्वं च; उभयत्र हलन्ताच्च (I. 2. 10.) इति हल्ग्रह-

णस्य जातिवाचकत्वात् दन्भेः परस्य सनः कित्वं भवति; तस्मादनिदिता-मिति नलोपः; खरि चेति चर्त्वम्; अत्र लोपोऽभ्यासस्य (VII. 4. 58.) इत्यभ्यासलोपः; **धिप्सति धीप्सति** । **स्वृ** शब्दोपतापयोः; इटि **सिस्वरिषति** । इडभावे–कित्वात् गुणाभावः; अज्झनगमांसनीति दीर्घः; उदोष्ठ्यपूर्वस्य (VII. 1. 102.) इत्युत्वम्; **सुस्वूर्षति** । **श्रिञ्** सेवायाम्; पक्षे इडागमः; **शिश्रयिषति** । इडभावे **शिश्रीषति** । **यु** मिश्रणे; पक्षे इडागमः; ओः पुयण्ज्यपरे (VII. 4. 80.) इत्यभ्यासोकारस्येत्वम्; गुणावादेशौ **यियविषति** । इडभावे **युयूषति** । **ऊर्णुञ्** आच्छादने; पक्षे इडागमः; विभाषोर्णोः (I. 2. 3.) इति विभाषा ङित्वम्; अजादित्वाद्द्वितीयस्यैकाचो द्विर्वचनम्; नन्द्राःसंयोगादयः इति रेफस्य प्रतिषेधात् नुशब्दस्य द्विर्वचनम्; ङित्वपक्षे उवङादेशः; प्रपूर्वः; प्रोर्णुनुविषति । ङित्वाभावे गुणः; **प्रोर्णुनविषति** । इडभावे **प्रोर्णुनूषति** । **भर** इति **भृञ्** इत्येतस्य भौवादिकस्य ग्रहणं शपा निर्देशात्; अस्मात् सन्; पक्षे इडागमः; गुणः; द्विर्वचनादि; **बिभरिषति** । इडभावे कित्त्वाद्गुणाभावः; अज्झनगमांसनीति दीर्घः; उदोष्ठ्यपूर्वस्येत्युत्वम्; हलिचेति दीर्घः; **बुभूर्षति** । **ज्ञपि**–ज्ञा इत्येतस्मात् णिच्; अर्ति ह्रीत्यादिनापुगागमः; मितां ह्रस्वः इति ह्रस्वत्वम्; सनाद्यन्ताधातवः इति धातु संज्ञायां सन्; सनीवन्तर्धेति पक्षे इडागमः; गुणायादेशौ; द्विर्वचनादि; **जिज्ञपयिषति** । इडभावे णेरनिटि (VI. 4. 51.) इति णिलोपः; आप्ज्ञप्यृधामीत् (VII. 4. 55.) इतीकारादेशः; अभ्यासलोपः; **ज्ञीप्सति** । **षण** सम्भक्तौ; अस्मात् सन्; पक्षे इडागमः; द्विर्वचनादिकार्यं पूर्ववत्; स्तौतिण्योरेव षण्यभ्यासात् (VIII. 3. 61.) इति नियमात् षत्वाभावः; **सिसनिषति** । इडभावे, जन सन खनां सन्झलोः (VI. 4. 42.)

इत्यात्वम्; **सिषासति** । केचिदत्र भरज्ञपिसनितनिपतिदरिद्राणामिति पठन्ति । **तनु** विस्तारे; इटि **तितनिषति** । इडभावे **तनोतेर्विभाषा** (VI. 4. 17.)—तनोतेरङ्गस्य झलादौ सनि उपधाया दीर्घो वा भवति; तितांसति तितंसति । **पत्लृ** गतौ: **पिपतिषति** । इडभावे **पित्सति** । **दरिद्रा** दुर्गतौ; इडागमः; आतो लोप इटि च (VI. 4. 64.) इत्याकारलोपः; **दिदरिद्रिषति** । इडभावे **दिदरिद्रासति** । **षूङ्** प्राणि-प्रसवे, अस्मात् सन्: सनिग्रहगुहोश्च (VII. 2. 12.) इतीट्प्रतिषेधः; इको झलितिकित्वम्; द्विर्वचनादि: **स्तौतिण्योरेव षण्यभ्यासात्** (VIII. 3. 61.)—स्तौतेर्ण्यन्तानाञ्च सनि षत्वभूते परतोऽभ्यासादिण उत्तरस्य सकारस्य मूर्धन्यादेशो भवति—इति नियमादिह षत्वं न भवति: **प्रसुसूषते** । **णह** बन्धने: नहो धः (VIII. 2. 34.) इति धत्वम्; चर्त्वम्; **निनत्सति, निनत्सते** । **षुञ्** अभिषवे; सत्वम्: सन्: इडभावः; दीर्घः; द्विर्वचनादि; **सुनोतेः स्यसनोः** (VIII. 3. 117.)—सुनोतेस्सकारस्य स्ये सनि च परतो मूर्धन्यादेशो न भवति—इति षत्व प्रतिषेधः: **अभिसुसू-षति अभिसुसूषते** । **अशू** व्याप्तौ: अस्मात् सन्: स्मिपूङ्रञ्ज्वशां सनि (VII. 2. 74.) इतीडागमः; अजादेर्द्वितीयस्येति द्विर्वचनम्; **अशिशिषते** । **चिञ्** चयने; विभाषा चेः (VII. 3. 58.) इति वा कु-त्वम्; **निश्चिकीषति निश्चिकीषते, निश्चिचीषति निश्चिचीषते** । **तुद** व्यथ-ने; हलन्ताच्चेति कित्वाद्गुणाभावः; **तुतुत्सति** । **मृङ्** प्राणत्यागे; अज्झन-गमांसनीति दीर्घः; उदोष्ठ्यपूर्वस्येत्युत्वम्; हलिचेति दीर्घः; ततो द्विर्वचनादि; **मुमूर्षते** । **भुज** पालनाभ्यवहारयोः; **बुभुक्षते** । पालनार्थे **बुभुक्षति** । **डुकृञ्** करणे; अस्मात् सन्; अज्झनगमांसनीति दीर्घः; **ऋत इद्धातोः** (VII. 1. 100.)—ॠकारान्तस्य धातोरिकारादेशो भवति । रपरत्वम्; हलिचेति

दीर्घः; ततो द्विर्वचनमभ्यासकार्यञ्च; **चिकीर्षति चिकीर्षते । डुक्रीञ्** द्रव्यविनिमये; **चिक्रीषति । वृङ्** सम्भक्तौ; अस्मात् सन्; **वृतो वा** इति वर्तमाने, **इट् सनि वा** (VII. 2. 41.)—वृतः सनि परतो वा इडागमो भवति । **वृतो वा** (VII. 2. 38.)—वृ इति वृञ्वृङोस्सामान्येन ग्रहणम्; वृ इत्येतस्मात् ॠकारान्तेभ्यश्चोत्तरस्येटो वा दीर्घो भवति । ततोद्विर्वचनम्; उरदित्यत्वम्; हलादिश्शेषः; सन्यतः इतीत्वम्; **विवरीषते, विवरिषते ।** इडभावे अज्झनगमां सनीति दीर्घः; उदोष्ठ्यपूर्वस्येत्युत्वम्; हलिचेति दीर्घः; द्विर्वचनादि; **वुवूर्षते । ग्रह** उपादाने; अस्मात् सन्; सनि ग्रहगुहोश्च (VII. 2. 12.) इति इट्प्रतिषेधः; रुदविदमुषग्रहिस्वपिप्रच्छस्संश्च (I. 2. 8.) इति कित्त्वम्; ग्रहिज्यादिना संप्रसारणम्; हो ढः इति ढत्वम्; षढोः कस्सि इति कत्वम्; पूर्वत्रासिद्धमिति कत्वस्यासिद्धत्वात् भष्भावः; ततः कत्वम्; द्विर्वचनम्; अभ्यासकार्यं च; **जिघृक्षति, जिघृक्षते । चुर** स्तेये, णिच्; लघूपधगुणः; चोरि इति स्थिते धातुसंज्ञायां सन्; इडागमः; षत्वम्; गुणायादेशौ; द्विर्वचनादि; **चुचोरयिषति चुचोरयिषते । पाल** रक्षणे; **पिपालयिषति पिपालयिषते । अर्च** पूजायाम्; अस्मात् सन्; अजादेर्द्वितीयस्येति द्वितीयस्यैकाचो द्विर्वचनं रेफवर्जम्; **अर्चिचायिषति, अर्चिचयिषते ।**

**॥ इति सनन्तपरिच्छेदः ॥**

---

**॥ अथ यङ्परिच्छेदः ॥**

अथ एतेभ्य एव धातुभ्यो यङ्विधीयते ।

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ्** (III. 1. 22.)—एकाचो धातोः हलादेः क्रियासमभिहारे वर्तमानात् यङ् प्रत्ययो भवति ।

ङकारः सन्यङोरिति विशेषणार्थः ; पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः ; भू सत्तायाम् ; यङो ङित्त्वादात्मनेपदम् ; गुणाभावः ; सनाद्यन्ता धातवः इति धातुसंज्ञायां सन्यङोः इति द्विर्वचनम् । **गुणो यङ्लुकोः** (VII. 4. 82.)—यङि यङ्लुकि च परत इगन्तस्याभ्यासस्य गुणो भवति । अभ्यासे चर्च (VIII. 4. 54.) इति जश्त्वम् ; **बोभूयते, अबोभूयत, बोभूयताम्, बोभूयेत** । यकि अतो लोपः (VI. 4. 48) इत्यकारलोपः ; **बोभूय्यते, अबोभूय्यत, बोभूय्यताम्, बोभूय्येत** । आशीर्लिङादिषु—**बोभूयिषीष्ट, बोभूयांचक्रे बोभूयाम्बभूव बोभूयामास, अबोभूयिष्ट, बोभूयिता, अबोभूयिष्यत, बोभूयिष्यते** । लुङि चिण्वदिटि—**अबोभूयि** । धातोरिति किम् ? भृशं प्राटति । हलादेरिति किम् ? भृशमीक्षते । भृशं रोचते भृशं शोभते इत्यत्र नेष्यते अनभिधानात् ॥

**सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनामुपसङ्ख्यानं यङ्विधावनेकाज-हलाद्यर्थम्** (वा.) । **सूच** पैशुन्ये ; चुरादित्वाण्णिच् ; णेरनिटि इति णिलोपः ; ततो द्विर्वचनादि ; गुणो यङ्लुकोः इति गुणः ; **सोसूच्यते** । **सूत्र** अवमोचने ; **सोसूत्र्यते** । **मूत्र** प्रस्रवणे ; **मोमूत्र्यते** । ण्यन्तत्वादेते त्रयोऽनेकाचः । **अट** गतौ ; अस्माद्यङ् ; अजादित्वात् द्वितीयस्यैकाचो द्विर्वचनम् ; हलादिश्शेषः । **दीर्घोऽकितः** (VII. 4. 83.)—अकितोऽभ्यासस्य दीर्घो भवति यङि यङ् लुकि च परतः ; **अटाट्यते** । अकित इति किम् ? यंयम्यते रंरम्यते । अत्र **नुगतोऽनुनासिकान्तस्य** (VII. 4. 85.)—अनुनासिकान्तस्याङ्गस्य यः अभ्यासः तस्य अकारान्तस्य नुगागमो भवति । इति नुक् । **यम** उपरमे, **मनु** अवबोधने, इत्युभयोर्धात्वोस्तु यङि सन्यङोः (VI. 1. 9.) इति द्वित्वम् ; नुगतोऽनुनासिकान्तस्य इति

नुगागमः; नुका अनुस्वारो लक्ष्यते; तेन **यंयम्यते मंमन्यते** इत्यत्र झल्परत्वाभावेऽपि अनुस्वारो भवति । **पदान्तवच्चेति वक्तव्यम्** ( वा. ); इति वा पदान्तस्य (VIII. 4. 59.) इति परसवर्णविकल्पोऽपिस्यात्; **यँयम्यते, मम्मन्यते** । ऋ गतौ; अस्माद्यङ्; **गुणोर्तिसंयोगाद्योः** (VII. 4. 29.) इत्यनुवर्तमाने, यङि च (VII. 4. 30.)—यङि च परतोऽर्ते स्संयोगादेश्च ऋतः गुणो भवति । अजादित्वात् द्वितीयस्यैकाचो द्विर्वचनम् रेफवर्जं न भवति यकारपरस्य प्रतिषेधो वक्तव्य इति वचनात्; **अरार्यते** । अशू व्याप्तौ; **अशाश्यते** । ऊर्णुञ् आच्छादने; प्रपूर्वः; रेफवर्जं द्विर्वचनम्; **प्रोर्णोनूयते** । **ध्वृ** हूर्छने, **स्मृ** चिन्तायाम्; संयोगादित्वादनयोर्गुणः; **दाध्वर्यते, सास्मर्यते** ।

**नित्यं कौटिल्येगतौ** (III. 1. 23.)—गतिवचनाद्धातोर्नित्यं कौटिल्ये एव गम्यमाने यङ्प्रत्ययो भवति । **क्रमु** पादविक्षेपे, **द्रम हम्म मीमृ** गतौ; एषां यङि **नुगतोऽनुनासिकान्तस्य** (VII. 4. 85.)—अनुनासिकान्तस्य अङ्गस्य अकारान्तस्याभ्यासस्य नुक् यङि यङ्लुकिच । इति नुक्; **चङ्क्रम्यते, दन्द्रम्यते, जंहम्यते** । नित्यग्रहणं विषयनियमार्थम्; गतिवचनान्नित्यं कौटिल्ये एव भवति नतु क्रियासमभिहारे; तेन भृशङ्क्रामतीति सिद्धम् । अत इति किम्? तेतिम्यते । तपरकरणङ्किम्? भूतपूर्वस्यापि दीर्घस्य निवृत्त्यर्थम्; बाभाम्यते । अनुनासिकान्तस्य किम्? पापठ्यते । **लुप–सद–चर–जप–जभ–दह–दश–गृभ्यो भावगर्हायाम्** (III. 1. 24.)—लुपादिभ्यो धातुभ्यः भावगर्हायां गम्यमानायां यङ् प्रत्ययो भवति । गर्हितं लुम्पति **लोलुप्यते** । एवमेव **सासद्यते** । **चरफलोश्च** (VII. 4. 87.)—चर फल इत्येतयोरभ्यासस्य नुगागमो भवति

यङि यङ्लुकि च परतः । उत्परस्यातः (VII. 4. 88.)—चर फल इत्येतयोश्चाभ्यासादुत्तरस्याकारस्य उकारादेशो भवति, यङि यङ्लुकि च परतः । हलि चेति दीर्घः ; **चञ्चूर्यते** । फल निष्पत्तौ **पम्फुल्यते** । **जप-जभ-दह-दश-भञ्ज-पशाञ्च** (VII. 4. 86.)—जपादीनाम् धातूनाम् अभ्यासस्य नुगागमो भवति यङि यङ्लुकि च परतः ; **जञ्जप्यते, जञ्जभ्यते, दन्दह्यते, दन्दश्यते, पम्पश्यते** । **ग्रो यङि** (VIII. 2. 20.) —गॄ निगरणे इत्येतस्य धातोर्यो रेफः तस्य लकारादेशो भवति यङि परतः ; **निर्जेगिल्यते** । भावगर्हायामिति किम ? साधनगर्हायां मा भूत् ; जपति वृषलोमन्त्रम् । अत्रापि नित्यग्रहणं विषयनियमार्थमनुवर्तते ; एतेभ्यो नित्यं भावगर्हायाम् एव भवति न तु क्रियासमभिहारे ; भृशं लुम्पति । **डुपचष्** पाके ; यङ् ; द्विर्वचनादि ; **दीर्घोऽकितः** (VII. 4. 83.)—अकितः अजन्ताभ्यासस्य दीर्घः यङि यङ्लुकि च ; **पापच्यते** । यकि **अतो लोपः** (VI. 4. 48.) इत्यलोपः ; **यस्य हलः** (VI. 4. 49.) —हल उत्तरस्य यकारस्य लोपो भवति आर्धधातुके परतः ; **पापच्यते** देवदत्तेन । लुङि चिणि कृते वृद्धिप्रसङ्गे, **न धातुलोप आर्धधातुके** (I. 3. 4.)—धात्वेकदेशो धातुः ; तस्य लोपो यस्मिन्नार्धधातुके तत् आर्धधातुकं धातुलोपम् ; तत्र ये गुणवृद्धी प्राप्नुतः ते न भवतः ; **अपापचि** देवदत्तेन । तथा **नानन्द्यते** । **नीग्वञ्चु-स्रंसु-ध्वंसु-भ्रंसु-कस-पत-पद-स्कन्दाम्** (VII. 4. 84.)—वञ्च्वादीनाम् धातूनामभ्यासस्य नीगागमो भवति यङि यङ्लुकि च परतः । अनिदितामिति धातुनकारलोपः, **वनीवच्यते, सनीस्रस्यते, दनीध्वस्यते, बनीभ्रस्यते, चनीकस्यते, पनीपत्यते, पनीपद्यते, चनीस्कद्यते** । **स्वपि-स्यमि-व्येञां यङि** (VI. 1. 19.)—एतेषां धातूनां यङि संप्रसारणं भवति ; **सोषुप्यते,**

**सोसिस्यते, वेवीयते** । यङि किम् ? स्वप्नक् । **न वशः** (VI. 1. 20.)–यङि इति वर्तते ; वशोर्धातोर्यङि परतः सम्प्रसारणम् न भवति ; **वाव-श्यते** । यङित्येव ; उष्टः, उशितः । **चायः की** (VI. 1. 21.)—चायृ पूजानिशामनयोः, अस्य धातोर्यङि परतः की इत्ययमादेशो भवति ; **चेकीयते** । दीर्घोच्चारणं यङ् लुगर्थम् ; **चेकीतः** । **ओप्यायी** वृद्धौ ; यङि कृते, **प्यायः पी** (VI. 1. 28.) इत्यनुवर्तमाने, **लिड्यङोश्च** (VI. 1. 29.)—लिटि यङि च परतः प्यायतेः पी इत्ययमादेशो भवति ; **पेपी-यते** । **टु ओश्वि** गति वृद्ध्योः ; **विभाषा श्वेः** (VI. 1. 30.)—लिड्य-ङोश्चेति वर्तते सम्प्रसारणमिति च ; लिटि यङि च परतः श्वयतेर्धातोर्वि-भाषासम्प्रसाणम् भवति : **शोशूयते** । पक्षे–**शेश्वीयते** । **जनसनखनां-सन्झलोः** (VI. 4. 42.) इत्यनुवर्तमाने, **ये विभाषा** (VI. 4. 43.)—यकारादौ क्ङिति प्रत्यये परतो जन सन खन इत्येतेषां विभाषा आका-रादेशो भवति : **जाजायते, सासायते, चाखायते** । तदभावे, **नुगतोऽनु-नासिकान्तस्य** (VII. 4. 85.)—अनुनासिकान्तस्याङ्गस्याकारान्तस्या-भ्यासस्य नुगागमो भवति यङि यङ्लुकि च परतः ; **जञ्जन्यते, संसन्यते, चङ्खन्यते** । **हन** हिंसागत्योः ; अभ्यासाच्च (VII. 3. 55.) इति कुत्वम् ; **जङ्घन्यते** । **हन्तेर्हिंसार्थस्य यङि घ्नी भावो वक्तव्यः** ( वा. VII. 4. 30.)—इति **जेघ्नीयते** । **अयङ्यिक्ङिति** (VII. 4. 22.)—शीङः इति वर्तते ; शीङः अयङ् इत्ययमादेशो यादौ क्ङिति ; **शाश-य्यते** । ब्रुवोवचिः (II. 4. 53.) इति वच्यादेशः ; दीर्घोऽकितः (VII. 4. 83.) इति दीर्घः ; **वावच्यते** । अकृत्सार्वधातुकयोर्दीर्घः (VII. 4. 25.) ; **जोहूयते** । नित्यं कौटिल्ये गतौ (III. 1. 23.) इति यङि ओहाङः ; **जाहायते** । **या** प्रापणे ; **यायायते** । **डुदाञ्** दाने ; घुमास्थे-

त्यादिना (VI. 4. 66.) ईत्वम्; गुणो यङ्लुकोः (VII. 4. 82.) इति गुणः; **देदीयते** । एवमेव—**मेमीयते, नेष्टीयते, पेपीयते, जेहीयते; अवमेमीयते, देधीयते**; ई घ्राध्मोः (VII. 4. 31.)—घ्रा ध्मा इत्येतयोः यङि परतः ईकारादेशो भवति; **जेघ्रीयते, देध्मीयते** । **ज्या** वयोहानौ; ग्रहिज्यादिना (VI. 1. 16.) सम्प्रसारणम्; **जेजीयते** । **ह्वेञ्**; ह्वः सम्प्रसारणम् (VI. 1. 32.); अभ्यस्तस्य च (VI. 1. 33.) इति द्विर्वचनात् प्रागेव सम्प्रसारणम्; **जोहूयते** । दिवु क्रीडादौ; **देदीव्यते** । **पूङ्** प्राणिप्रसवे; **सोपूयते** । णह बंधने; **संनानह्यते** । षु प्रेरणे; अकृत्सार्वधातुकयोर्दीर्घः; **सोषूयते** । **चिञ्** चयने; दीर्घः; **चेचीयते** । हि गतौ; अस्माद्यङ्; द्विर्वचनमभ्यासकार्यञ्च; **हेश्चङि** (VII. 3. 56)—हिनोतेर्हकारस्याभ्यासात् उत्तरस्य कवर्गादेशो भवति; अचङि प्रत्यये परतः; **प्रजेघीयते** । अचङीति किम्? प्राजीहयत् । **नृती** गात्रविक्षेपे; **रीगृदुपधस्य च** (VII. 4. 90)—ऋदुपधस्य अङ्गस्य योऽभ्यासः तस्य रीगागमो भवति यङि यङ्लुकि च परतः; **नरीनृत्यते** । **वृतु** वर्तने; **वरीवृत्यते** । **रीगृत्वत इति वक्तव्यम्** (वा.)—इति पृच्छतेर्यङि सम्प्रसारणे रीगागमः; **परीपृच्छयते** । एवं **वरीवृश्च्यते** । **णीञ्** प्रापणे; **नेनीयते** । **ष्टुञ्** स्तुतौ; **तोष्टूयते** । **कुङ्** शब्दे; **न कवतेर्यङि** (VII. 4. 63.)—कवतेरभ्यासस्य यङि परतश्चवर्गादेशो न भवति । इत्यभ्यासस्य चुत्वाभावः; **कोकूयते** । आदादिकस्य कौतेः तौदादिकस्य कुवतेश्च भवत्येव चुत्वम्; **चोकूयते** । यङि इति किम्? चुकुवे । **लूञ्** छेदने; **लोलूयते** । **तुद** व्यथने; **तोतुद्यते** । **मृङ्** प्राणत्यागे; रीङृतः (VII. 4. 27.)—ऋकारान्तस्याङ्गस्याकृद्यकारे असार्वधातुके यकारे च परतो रीङादेशो भवति; **मेम्रीयते** । **मुच्लृ** मोक्षणे; **मोमुच्यते** ।

सिश्चतेर्यङि नलोपे, षत्वे प्राप्ते, **सिचोयङि** (VIII. 3. 112.)—सिचः सस्य षो नस्यात् यङि; **निसेसिच्यते** । **रुधिर्** आवरणे; **रोरुध्यते** । एवं **बोभुज्यते, योयुज्यते** । **तनु** विस्तारे; नुगतोऽनुनासिकान्तस्य इति नुक्; **तन्तन्यते** । एवमेव **मंमन्यते** । **डुकृञ्** करणे; रीङृतः इति रीङादेशः; **चेक्रीयते** । **डुक्रीञ्** द्रव्यविनिमये; **चेक्रीयते** । **वृञ्** वरणे; रीङादेशः; **वेव्रीयते** । **ढौकृ लौकृ** गतौ; **ढोढौक्यते, तोलौक्यते** । **ग्रह** उपादाने; ग्रहिज्यादिना सम्प्रसारणम्; रीगागमः; **जरीगृह्यते** । **चुर** स्तेये; आर्धधातुकीयाः प्रागेव भवन्ति अनुत्पन्ने प्रत्यये; अनित्यण्यन्ता-श्चुरादयः इति न्यायेन णिजभावपक्षे चुरादावपि यङ् भवत्येव; **चोचूर्यते** । एवमेव **पापाल्यते** इत्यादि सर्वमुन्नेयम् ॥

॥ **इति यङ्परिच्छेदः** ॥

---

## ॥ अथ यङ्लुक्परिच्छेदः ॥

अथ क्वचिद्यङो लुग्विधीयते । **बहुळं छन्दसि** (II. 4. 73.) इति वर्तमाने, **यङोऽचि च** (II. 4. 74.)—चकारेण बहुळग्रहणमनुकृष्यते; यङोऽचि प्रत्यये परतो बहुळं लुग् भवति । अचीत्यनेन नन्दिग्रहिपचादि-भ्योल्युणिन्यचः (III. 1. 134.) इति विहिताच्प्रत्यय एव गृह्यते । पचादेराकृतिगणत्वाद्यङन्तादच् प्रत्ययः; **लोलुवः, पोपुवः** । बहुळग्रहणा-दन्यत्रापि प्रयोगानुसारेण लुग्वेदितव्यः । इति यङो लुक् । **प्रकृतिग्रहणे यङ् लुगन्तस्यापि ग्रहणम्** (परि 93.) । प्रकृतिमुपादाय यानि कार्याणि विधीयन्ते यङ् लुगन्तस्यापि तेषु सर्वेषु प्राप्तेषु क्वचिन्निषेधार्थं इदमुच्यते —

**तिपा शपानुबन्धेन निर्दिष्टं यद्गणेनच ।**
**यत्रैकाज्ग्रहणङ्किञ्चित् पञ्चैतानि न यङ्लुकि ॥** (परि. 120.)

अस्यार्थः । भवतेरः (VII. 4. 73.) इति श्तिपा, निन्दहिंसक्लिशेत्यादौ (III. 2. 146.) शपा, इणो गा लुङि (II. 4. 45.) इत्यनुबन्धेन, ननादिभ्यस्तथासोः (II. 4. 79.) इति गणेन च यन्निर्दिष्टं, यत्रैकाज्ग्रहणं किञ्चित् एकाच उपदेशेऽनुदात्तात् (VII. 2. 10.) इति, एतानि पञ्च यङ्लुकि न ग्राह्याणीत्यर्थः । चर्करीतं परस्मैपदं अदादिवच्च द्रष्टव्यम्; चर्करीतमिति यङ्लुगन्तस्य पूर्वाचार्याणां संज्ञा । भू सत्तायाम्; वर्तमानेलट्; लस्य स्थाने तिप्; कर्तरि शप; अदादित्वाल्लुक् । **उतोवृद्धिर्लुकि हलि** (VII. 3. 89.), **नाभ्यस्तस्याचिपिति सार्वधातुके** (VII. 3. 87.), **ब्रुव ईट्** (VII. 3. 93.) इत्यनुवर्तमाने, **यङो वा** (VII. 3. 94.)—यङ्लुगन्तादुत्तरस्य हलादेः पितस्सार्वधातुकस्य वा ईडागमो भवति । यङ्ग्रहणेन यङ्लुगन्तस्यैवग्रहणम्; तत्र यङन्तात्परस्य हलादेः सार्वधातुकस्य पितः अप्रसिद्धेः । गुणावादेशौ; **बोभवीति** । ईडभावपक्षे–**बोभोति** । **बोभूतः**; अदभ्यस्तात् (VII. 1. 4.) इति झस्य अदादेशः; **बोभुवति** । **बोभवीषि, बोभोषि, बोभूथः, बोभूथ; बोभवीमि बोभोमि, बोभूवः, बोभूमः** । लङि–**अबोभवीत् अबोभोत्, अबोभूताम्**; सिजभ्यस्त विदिभ्यश्च (III. 4. 109.) इति झोर्जुस्, जुसि च (VII. 3. 83.) इति गुणः—**अबोभवुः; अबोभवीः अबोभोः, अबोभूतम्, अबोभूत; अबोभवम्, अबोभूव अबोभूम** । लोटि–**बोभवीतु बोभोतु, बोभूतात् बोभूताम्, बोभुवतु; बोभूहि बोभूतात्,**

**बोभूतम्**, **बोभूत**, **बोभवानि**, **बोभवाव**, **बोभवाम** । लिङि—**बोभूयात्**; **बोभूयाताम्**, **बोभूयुः**; इत्यादि । यकि—**बोभूयते** देवदत्तेन । आशिषि **बोभूयात्**, **बोभूयास्ताम्**, **बोभूयासुः**; इत्यादि । लिटि—प्रत्ययलक्षणेनाम्प्रत्ययः: **बोभवाञ्चकार** । इन्धि भवतिभ्याञ्च (I. 2. 6.) इत्यत्र भवति ग्रहणसामर्थ्यात् आम् अनित्य इति ज्ञाप्यते; भवतीति तिपानिर्देशाद्यङ्लुकि कित्वाभावः; तेन **बोभाव**, **बोभूवतुः** **बोभूवुः**; **बोभविथ**, **बोभूवथुः**, **बोभूव**; **बोभाव बोभव**, **बोभूविव**, **बोभूविम** । लुङि—भुवो वुग्लुङ्लिटोः (VI. 4. 88) इति वुगागमः; **अबोभूवीत्** **अबोभोत्**, **अबोभूताम्**, **अबोभूवुः**; **अबोभोः**, **अबोभूतम्**, **अबोभूत** **अबोभूवम्**, इत्यादि । लुटि—**बोभविता** । लृङि—**अबोभविष्यत्** । लृटि—**बोभविष्यति** । भावे चिण्वदिटि—**बोभाविषीष्ट** देवदत्तेन; चिण्वदिङभावे—**बोभविषीष्ट** देवदत्तेन । कर्मणि—**अनुबोभाविषीष्ट**, **अनुबोभविषीष्ट** । एवमेव—लोलवीति लोलोति, पोपवीति पोपोति, इत्यादि सर्वमुन्नेयम् ।

डुपचष् पाके; दीर्घोऽकितः (VII. 4. 83.) इत्यभ्यासदीर्घः; लटि **पापचीति पापक्ति पापक्तः**, **पापचति**; **पापचीषि पापक्षि**, **पापक्थः**, **पापक्थ**; **पापचीमि पापच्मि**; **पापच्वः**; **पापच्मः** । लङि—**अपापचीत्** **अपापक्**, **अपापक्ताम्**, **अपापचुः**; **अपापचीः अपापक्** इत्यादि । लोटि—**पापचीतु पापक्तु**, **पापक्तात् पापक्ताम्**, **पापचतु**; **पापग्धि पापक्तात्**, इत्यादि । लिङि—**पापच्यात्**, **पापच्याताम्**, **पापच्युः** इत्यादि । यकि—**पापच्यते** । आशिषि—**पापच्यात्**, **पापच्यास्ताम्**, **पापच्यासुः** । लिटि—**पापचांचकार** । लुङि—**अपापचीत्**, **अपापचिष्टाम्**, **अपापचिषुः** । अतो हलादेर्लघोः (VII. 2. 7.) इति दीर्घपक्षे—**अपापाचीत्** इत्यादि । लुटि—**पापचिता** । लृङि—**अपापचिष्यत्** । लृटि—**पापचिष्यति** । चिणि—

अपापचि इत्यादि । **क्रुश** आह्वाने रोदने च ; नाभ्यस्तस्याचि पिति सार्वधातुके (VII. 3. 87.) इति गुणप्रतिषेधः : **चोक्रुशीति चोक्रोष्टि, चोक्रुष्टः चोक्रुशति । मुद** हर्षे ; **मोमुदीति मोमोत्ति, मोमुत्तः मोमुदति । खाद** भक्षणे; **चाखादीति चाखात्ति चाखात्तः, चाखादति । टुनदि** समृद्धौ; नानन्दीति : इडभावे—झरो झरि सवर्णे इति दकारस्य लोपः अनुस्वारपरसवर्णौ : **नानन्ति** । अनानन्दीत् ; हल्ङ्याादि संयोगान्तलोपौ, **अनानन्** । हुझल्भ्योहेर्धिः इति धिरादेशः: झरो झरि सवर्णे इति दकारलोपः अनुस्वारपरसवर्णौ—**नानन्धि । ध्वंसु** अवस्रंसने; अनिदितामित्यादिना नलोपे प्राप्ते, परन्तु न लुमताङ्गस्य इति यङ्निमित्तस्य नलोपस्याभावः ; अपित्सु ङित्वान्नलोपः । **नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्** (VII. 4. 84.) अकारान्तस्याभ्यासस्य नीगागमो भवति यङि यङ्लुकि च परतः ; **दनीध्वस्ति दनीध्वंसीति, दनीध्वस्तः** । लङि—**अदनीध्वंसीत्**, हल्ङ्यादिसंयोगान्तलोपौ—**अदनीध्वन्** । स्वपिस्यमि व्येञां यङि (VI. 1. 19.) सम्प्रसारणम् ; **वेवयीति वेवेति वेवीतः** ; एरनेकाचोऽसंयोगपूर्वस्य (VI. 4. 82.) इति यणादेशः **वेव्यति** । **ब्रूञ्** व्यक्तायां वाचि ; ब्रुवो वचिः इति वचिरादेशः ; **वावचीति वावक्ति वावक्तः, वावचति** । पापचीतिवत् रूपम् ; यकितु संप्रसारणम् : अन्त्यस्य संप्रसारणे कृते गुणः—**वोच्यते । हु** दानादनयोः ; **जोहवीति** ; उतो वृद्धिर्लुकिहलि (VII. 3. 89.) इत्यत्र नाभ्यस्तस्येत्यनुवर्तनान्नवृद्धिः—**जोहोति जोहुतः जोहुवति** । ओहाक् त्यागे ; ईटि **जाहेति**, अनीटि **जाहाति**; ईहल्यघोः इतीत्वम्—**जाहीतः** ; आतोलोपः—**जाहति । डुधाञ्** धारणपोषणयोः ; **दाधेति, दाधाति** । श्नाभ्यस्तयोरातः इत्याकारलोपः—**धात्तः, दाधति** । आशिषि चिण्वदिटि युगागमः—**दाधायिषीष्ट** । चिण्वदिडभावे—**दाधिषीष्ट** । दिवुक्रीडादौ ;

अभ्यस्तस्याङ्गस्य गुणो न भवति ; **देदिवीति** । ईडभावे पिति लोपोव्योर्वलि इति वकारलोपः ; सार्वधातुकेति गुणः–**देदेति** । च्छ्वोश्शूडनुनासिके च (VI. 4. 19.) इति ऊठ् ; यणादेशः–**देद्यूतः, देदिवति** । सोषवीति, सोषोति सोषूतः सोषुवति । नानहीति नानद्धि, नानद्धः नानहति अनानहीत् अनानत् अनानद् अनानहीः ; ईडभावे दश्च इति वा रुत्वम्–अनानः; पक्षे–अनानत् अनानद् । तुदधातोः नाभ्यस्तस्याचि पिति सार्वधातुके इति लघूपधगुण प्रतिषेधः ; **तोतुदीति तोतोत्ति** । मोमुचीति मोमोक्ति । रोरुधीति रोरोद्धि । बोभुजीति बोभोक्ति । एवं युजेरपि कर्तरि कर्मणि च पठितव्यानि । तन्तनीति, तन्तन्ति । एवं मनोरपि सर्वं ज्ञेयं मम्मनीति मंमन्ति इत्यादि । डुक्रीञ् द्रव्यविनिमये ; **चेक्रयीति चेक्रेति, चेक्रीतः** ; इयङादेशः **चेक्रीयति** ।

अथ ऋकारान्ता उच्यन्ते । **मृञ्** प्राणत्यागे ; **रीगृदुपधस्य च** (VII. 4. 90) **रुग्रिकौचलुकि** (VII. 4. 91.) इति च वर्तमाने **ऋतश्च** (VII. 4. 92.) ऋकारान्ताद्धातोर्योऽभ्यासस्तस्य रुग्रिकावागमौ भवतः ; चकारात् रीगागमश्च यङ्लुकि च परतः ; **मरीमरीति मरिमरीति मर्मरीति मर्मर्ति मरिमर्ति मरीमर्ति, मर्मृतः मरिमृतः मरीमृतः, मर्म्रति मरिम्रति मरीम्रति ; मरीमरीषि मरिमरीषि मर्मरीषि मर्मर्षि मरिमर्षि मरीमर्षि, मर्मृथः मरिमृथः मरीमृथः, मर्मृथ मरिमृथ मरीमृथ ; मरीमरीमि मरिमरीमि मर्मरीमि मर्मर्मि मरिमर्मि मरीमर्मि, मर्मृवः मरिमृवः मरीमृवः, मर्मृमः मरिमृमः मरीमृमः** । एवं कर्म कर्तरिभावे च रुग्रिगावपि योज्यौ । **डुकृञ्** करणे ; **चर्करीति चरिकरीति चरीकरीति चर्कर्ति चरिकर्ति, चरीकर्ति** इत्यादि ।

**वृङ्** सम्भक्तौ : वर्वरीति वरिवरीति, वरीवरीति वर्वर्ति, वरिवर्ति वरीवर्ति : इत्यादि । इति ऋकारान्ताः ॥

इदानीमृकारोपधाः प्रदर्श्यन्ते । ग्रह उपादाने । प्रत्ययलक्षणेन सम्प्रसारणं भवति : **रीगृदुपधस्य च** (VII. 4. 90.) इति वर्तमाने, **रुग्रिकौ च लुकि** (VII. 4. 91.)—यङ्लुकि परतः ऋकारोपधस्याङ्गस्य योऽभ्यासः तस्य रुग्रिकावागमौ भवतः : रीक् च भवति ; **जर्गृहीति जरिगृहीति जरीगृहीति** । इडभावे होढः इति ढत्वम् : पुगन्तलघूपधस्य च इति गुणः : झषस्तथोर्धोऽधः इति धत्वम् : ष्टुना ष्टुः इति ष्टुत्वम् : ढो ढे लोपः इति पूर्वढकारस्य लोपः ; **जर्गाढि जरीगाढि जरिगाढि** ; इत्यादि । सिपि इडभावे ढत्वं, भष्भावः : षढोः कस्सि इति कत्वं, लघूपधगुणः, आदेशप्रत्यययोः इति षत्वम् ; **जर्घर्क्षि जरिघर्क्षि जरीघर्क्षि** । केचित्तु न लुमताङ्गस्य इति प्रतिषेधात् अत्र सम्प्रसारणाभावात् दीर्घोऽकित इति **जाग्रहीति जाग्राढि, जाग्राढः, जाग्रहति** इति भवितव्यमिति वर्णयन्ति । **वृतु** वर्तने ; वर्वृतीति वर्वर्ति वरिवृतीति वरिवर्ति वरीवृतीति, वरीवर्ति, वर्वृत्तः वरिवृत्तः वरीवृत्तः, वर्वृतति वरिवृतति वरीवृतति ; इत्यादि । **गृधु** अभिकांक्षायाम् : जर्गृधीति जरिगृधीति जरीगृधीति । इडभावे धत्वम् : जर्गर्धि जरिगर्धि जरीगर्धि । लङि सिपि अजर्गर्धीः ; इडभावे पुगन्तलघूपधस्य च इति गुणः इतश्च इतीकारलोपः, हल्ङ्यादिलोपः, भष्भावः, जश्त्व-चर्त्वे, दश्च इति रुत्वं, रोरि इति रेफलोपः, ढ्रलोप इत्यादिना दीर्घः, रेफस्य विसर्जनीयः ; **अजर्घाः अजरिघाः अजरीघाः** । इत्यादि सर्वमुन्नेयम् ॥

**॥ इति तिङन्तशिरोमणौ यङ्लुक्परिच्छेदः ॥**

---

॥ **अथ हेतुमण्णिच्** ॥

अथ तेभ्य एव धातुभ्यो णिज्वक्ष्यते । कश्चित् भवन्तमितरः प्रयुङ्क्ते ।
**हेतुमति च** (III. 1. 26.)—हेतुः स्वतन्त्रस्य कर्तुः प्रयोजकः ; लकारवाच्यस्तदीयो व्यापारः प्रेषणाध्येषणादिलक्षणो हेतुमान् ; भृत्यादेर्निकृष्टस्य क्वचिदर्थे नियोजनं प्रेषणम् ; अराध्यस्य गुर्वादेः क्वचित्तदर्थनियोजनमध्येषणम् ; तस्मिन्नभिधेये धातोर्णिच् प्रत्ययो भवति । अचो ञ्णिति इति वृद्धिः ; आवादेशः, सनाद्यन्ताधातवः इति धातुसंज्ञायां लडादयः ; **भावयति**, **भावयतः**, **भावयन्ति**, इत्यादि । कर्त्रभिप्राये क्रियाफले णिचश्च (I. 3. 74.) इति आत्मनेपदम् ; **भाव्यते** देवदत्तेन । लुङि, सन्वल्लघुनिचङ् परेऽनग्लोपे (VII. 4. 93.) इति सन्वद्भावे **सन्यतः** (VII. 4. 79.) इत्यनुवर्तमाने **ओः पुयण्ज्यपरे** (VII. 4. 80.)—उवर्णान्तस्याभ्यासस्य पवर्गे यणि जकारे चावर्णपरे परतः सनीव इकारादेशो भवति । अत एवैतस्मात् वचनादनुमीयते णौ कृतमभ्यासस्य स्थानिवद्भवतीति । दीर्घो लघोः (VII. 4. 94.) इति दीर्घः ; णौ चङ्युपधाया ह्रस्वः (VII. 4. 1.) इति भाव् इत्यत्रोपधाया ह्रस्वः ; **अबीभवत्** । **भावयिता** ; **अभावयिष्यत्** ; **भावयिष्यति** ; चिण्वदिटि असिद्धवदत्राभात् (VI. 4. 22.) इति चिण्वदिटोऽसिद्धत्वात् णेरनिटि (VI. 4. 51.) इति णिलोपः—**भाविषीष्ट** ; चिण्वदिड्भावे **भावयिषीष्ट** इत्यादिसर्वमुन्नेयम् । एधयति, ऐदिधत् । पाचयति, अपीपचत् । नन्दयति, प्रध्वंसयति, अत्र उभयत्र धात्वक्षरस्य गुरुसंज्ञकत्वादित्वं न भवति ; अननन्दत्, प्रादध्वंसत् । **शाछासाह्वाव्यावेपां युक्** (VII. 3. 37.)—इत्येतेषामङ्गानां युगागमो भवति णौपरतः । शो तनूकरणे ; **निशाययति**

न्यशीशयत् । छो छेदने : छाययति, अचिच्छयत् । षो अन्तकर्मणि : अवसाययति, अवासीषयत् । ह्वेञ् स्पर्धायां शब्दे च : आह्वाययति ; ह्वस्सम्प्रसारणम् (VI .1. 32.)—सन्परे चङ्परे च णौ ह्वयतेस्सम्प्रसारणं भवति : आजूहवत् । व्येञ् संवरणे : संव्याययति, समविव्ययत् । वेञ् तन्तुसन्ताने : वाययति, अवीवयत् । पा पाने : पाययति ; लोपः पिबतेरीच्चभ्यासस्य (VII. 4. 4.)—पिबतेरुपधायाः लोपः स्यात् अभ्यासस्य ईकारादेशश्च णौ चङ्परे : अपीप्यत् । पाग्रहणेन पै शोषणे इत्यस्यापि ग्रहणमिच्छन्ति, पा रक्षणे इत्यस्य लुग्विकरणत्वात् न भवति । तस्य पातेर्लुगागमोवक्तव्यः : (वा. VII. 3. 37.) पालयति, अपीपलत् । धूञ्प्रीञोर्नुग्वक्तव्यः (वा. VII. 3. 37.) इति विधूनयति व्यदूधुनत्, प्रीणयति अपिप्रीणत् । एतेचागमाः पूर्वान्ता एव गृह्यन्ते तेन व्यशीशयत् अपीपलत् अदूधुनत् अपीप्रणत् इत्यत्रोपधाया हूस्वत्वं भवति । शाछा. साह्वाव्यावेपां कृतात्वानां पुक्प्राप्तिमाख्यातुम् । किमेतस्याख्यापनेन प्रयोजनम् ? एतस्मिन् प्रकरणे लक्षणप्रतिपदोक्तपरिभाषा (परि) नास्ति इत्युपदिश्यते । तेन क्रीङ्जीनाण्णौ (VI. 1. 48) इति लक्षणिकाकारान्तानां क्रापयति अध्यापयति जापयति इत्यादीनामपि पुक् भवति । वो विधूनने जुक् (VII. 3. 38.)—वा इत्येतस्य विधूननेऽर्थे वर्तमानस्य जुगागमो भवति णौपरतः । वा गतिगन्धनयोः ; पक्षेण उपवाजयति उपावीवजत् । विधूनन इति किम् ? आवापयति केशान् : शोषयतीत्यर्थः । ओ वै शोषणे इत्येतस्य रूपम् । लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने (VII. 3. 39.)—लीला इत्येतयोरन्यतरस्यां यथा संख्यं नुक् लुक् इत्येतावागमौ भवतः णौ परतः स्नेहविपातनेऽर्थे ।

किमिदं स्नेहविपातनं नाम ? स्नेहस्य द्रवीकरणं स्नेहविपातनम् ; घृतं **विलीनयति व्यलीलिनत्** । नुगभावे विभाषा लीयतेः (VI. 1. 51.) इति पक्षे आत्वम् ; पुगागमः ; आज्यं **विलापयति व्यलीलिपत्** । आत्वाभावे लुक्पक्षे आज्यं **विलालयति व्यलीलयत्** । लुगभावे —**विलाययति व्यलीययत्** । भियो हेतुभये षुक् (VII. 3. 40.)— भी इत्येतस्य हेतुभये अर्थे षुगागमो भवति णौ परतः । **भीस्म्योर्हेतुभये** (I. 3. 68.)—अकर्त्रभिप्रायार्थोयमारम्भः ; बिभेतेः स्मयतेश्च ण्यन्तादात्मनेपदं भवति हेतुभये ; हेतुः प्रयोजकः कर्ता लकारवाच्यः ; ततश्चेद्भयं भवति । भयग्रहणमुपलक्षणार्थम् ; विस्मयोऽपि तत एव ; मुण्डो **भीषयते** । नित्यं स्मयतेः (6. 1. 57.) इति नित्यमाकारादेशः ; पुगागमः मुण्डो **विस्मापयते** । हेतु भय इति किम् ? कुञ्चिकया एनं **भाययति** । **स्फायो वः** (VII. 3. 41.)—स्फाय् इत्येतस्याङ्गस्य वकारादेशो भवति णौ परतः ; **स्फावयति, अपिस्फवत्** । शदेरगतौ तः (VII. 3. 42.)—शदेरङ्गस्यागतार्थे वर्तमानस्य तकारादेशो भवति णौ परतः **शातयति** । अन्यत्र **शादयति** ; गमयतीत्यर्थः । रुहः पोऽन्यतरस्याम् (VII. 3. 43.)—रुह धातो णौ परतः पकारोऽन्तादेशः भवति अन्यतरस्याम्, **रोपयति, अरूरुपत्** । पक्षे–**रोहयति** अरूरुहत् । आदयति आदिदत् । अतिशाययति, अत्यशीशयत् । वाचयति, अवीवचत् । हावयति अजूहवत् । अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुक्णौ (VII. 3. 36.)— ऋ गतौ, ह्री लज्जायां व्ली वरणे रीगतिरेषणयोः, क्नूयी आर्द्रीभावे, क्ष्मायी विधूनने, इत्येतेषां धातूनां अकारान्तानाञ्च पुगागमो भवति णौ परतः । अर्ति–**अर्पयति, आर्पिपत्** । ह्री–**ह्रेपयति** ; णौ चङ्युपधाया ह्रस्वः (VII. 4. 1.) इति लुङि चङि ह्रस्वः **अजिह्रिपत्** । **व्लेपयति**

**अविव्लिपत्** । **रेपयति, अरीरिपत्** । **क्नोपयति अचुक्नुपत्** । **क्ष्माप-यति अचिक्ष्मपत्** । **गापयति** । **अजीगपत्** । देवयति, अदीदिवत् । सावयति, असूषवत् । सन्नाहयति, समनीनिहत् । आशयति, आशिशत् । चिस्फुरोर्णौ (VI. 1. 54.)—चिञ् चयने स्फुर सञ्चलने इत्येतयोर्धा-त्वोर्णौ परत एचः स्थाने विभाषा अकारादेशो भवति, ततः पुक्, **नि-श्चापयति, निरचीचपत्; विस्फारयति, व्यपस्फरत्** । आत्वाभावे-**निश्चाययति, निरचीचयत्, विस्फोरयति, व्यपुस्फुरत्** । तोदयति, अतूतुदत् । मारयति, अमीमरत् । मोचयति, अमूमुचत् । रोधयति, अ-रुरुधत् । भोजयति, अबूभुजत् । योजयति, अयूयुजत् । तानयति, अती-तनत् । मानयति, अमीमनत् । कारयति, अचीकरत् । **क्रीङ्जीनाण्णौ** (VI. 1. 48.)—डुक्रीञ् द्रव्यविनिमये, इङ् अध्ययने, जि जये, इत्ये-तेषां धातूनामेचः स्थाने अकारादेशो भवति णौ परतः, पुगागमः **क्रापयति अचिक्रपत्; अध्यापयति, अध्यापिपत्; जापयति अजीजपत्** । सिध्यतेरपारलौकिके (VI. 1. 49.)—णावित्येव, षिधू संराधावित्येतस्य धातोरपारलौकिके वर्तमानस्यैचः स्थाने णौ परत अकारादेशो भवति; **अन्नं साधयति, असीषधत्** । आपरलौकिक इति किम्? तपस्तापसं **सेधयति**; स्वान्यैव कर्माणि एनं सेधयन्ति; अत्रहिसिद्धिः परलोकार्थे ज्ञान-विशेषे वर्तते । **मीनातिमिनोतिदीङ ल्यपि च** (VI. 1. 50.)—उपदेश इति वर्तते, मीङ् हिंसायां डुमिञ्प्रक्षेपणे, दीङ् क्षये इत्येतेषान्धातूनां ल्यब्विषये चकारादेचश्च विषये च उपदेश एव प्राक्प्रत्ययोत्पत्तेरलोन्तस्य-स्थाने अकारादेशो भवति, पुगागमश्च; **प्रमापयति, प्रामीमपत्; अव-मापयति, अवामीमपत्; दापयति, अदीदपत्** । **विभाषा लीयतेः** (VI. 1. 51)—ल्यपि इति वर्तते, आदेच उपदेश इति च; लीङ्

श्लेषणे इति दिवादिः, ली श्लेषणे इति क्र्यादिः तयोरुभयोरपि यका निर्देशः; लीयतेर्धातोः ल्यपि च एचश्च विषये उपदेश एव अलोऽन्तस्य स्थाने विभाषा आकारादेशो भवति, **लापयति, अलीलपत्** । **प्रजने वीयतेः** (VI. 1. 55.)—पाविति वर्तते, वीगति प्रजनकान्त्यशनस्वादनेषु, प्रजनेगम्यमाने वीयतेर्धातोरेचः स्थाने विभाषा आकारादेशो भवति णौ परतः, पुरोवातो गाः **प्रवापयति, प्रावीवपत्** । गर्भं ग्राहयतीत्यर्थः; प्रजनं गर्भग्रहणम् । पक्षे—**प्रवाययति, प्रावीवयत्** । द्रावयति, अदुद्रवत् । स्रावयति, असुस्रवत् । लावयति अलीलवत् । पावयति, अपीपवत् । आस्तारयति, आतस्तरत् । वारयति अवीवरत् । धारयति अदीधरत् । निगारयति निगालयति, न्यजीगरत् न्यजीगलत् । पाठयति अपीपठत् । **हनस्तोऽचिण्णलोः** (VII. 3. 32.)—हनस्तकारादेशो भवति चिण्णल्वर्जिते ञिति णिति प्रत्यये परतः । हो हन्तेरिति कुत्वम्, अत उपधायाः इति वृद्धिः, **घातयति अजीघतत्** । भेदयति अबीभिदत् । छेदयति, अचिच्छिदत् । योधयति, अयूयुधत् । वर्तयति, अववर्तत् । सङ्कल्पयति समचकल्पत् । क्रीडयति, अचिक्रीडत् । कूजयति, अचुकूजत् । ढौकयति अडुढौकत् । अत्र अचिक्रीडत् इत्यादौ नाग्लोपिशास्वृदिताम् (VII. 4. 2.)—अग्लोपिनां शास्तेः ऋदितां च णौ च ङि उपधाया ह्रस्वो न भवति । **ऊदुपधाया गोहः** (VI. 4. 89.) इति वर्तमाने, **दोषो णौ** (VI. 4. 90.)—दोष उपधाया ऊकारादेशो भवति णौ परतः, **दूषयति, अदूदुषत्** । **वा चित्तविरागे** (VI. 4. 91.)—चित्तविरागेऽर्थे दोष उपधाया वा ऊकारादेशो भवति णौपरतः; चित्तं **दूषयति दोषयति** वा ।

**घट** चेष्टायाम् । अत उपधायाः (VII. 2. 116.) इति वृद्धिः; घटादयो मितः (ग.) **मितां ह्रस्वः** (VI. 4. 92.)—मितो धातवो

घटादयो मित इत्येवं प्रतिपादिताः; तेषामुपधाया ह्रस्वो भवति णौ परतः: **घटयति, व्यजघटत्** । केचिदत्र वा चित्तविरागे इत्यतो वा इत्यनुवर्तयन्ति; सा च व्यवस्थितविभाषा; तेन **सङ्क्रामयति, उत्क्रामयति** इत्यादि सिद्धं भवति । व्यथयति, अविव्यथत् । **प्रथयति, अपप्रथत्**: अत्र **अत् स्मृदृत्वरप्रथम्रदस्तृस्पशाम्** (VII. 4. 95.)–स्मृ दृ त्वर प्रथ म्रद स्तृ स्पश इत्येतेषां अङ्गानां अभ्यासस्य अत्वं चङि णौ परतः । प्रथयति, अपप्रथत् । म्रदयति, अमम्रदत् । स्खदयति, अचिस्खदत् । अक्षयति, अचक्षजत् । दक्षयति, अददक्षत् । क्रपयति, अचिक्रपत् । कन्दयति, अचकन्दत् । क्रन्दयति, अचक्रन्दत् । क्लन्दयति, अचक्लन्दत् । केचिदेषामनिदित्वमपि इच्छन्ति; तेन कदनमित्यादि सिध्यति । त्वरयति, अतत्वरत् । घटादयः त्वरान्ता उदात्ता अनुदात्तेतः, षितश्च । **ज्वर** रोगे: एतदादयः फणान्ताः उदात्ताः उदात्तेतः; **ज्वरयति, अजिज्वरत्** । गडयति, अजीगडत् । **हिडयति, अजीहिडत्**; अत्र मितां ह्रस्वः इति ह्रस्वो भवन्, एच इग्घ्रस्वादेशे इति नियमादान्तरतम्याच्च इकार एव ह्रस्वो भवति; ह्रस्वविधानसामर्थ्यात् गुणो न भवति । वटयति, अवीवटत् । भटयति, अबीभटत् । **नटयति** शाखाम्, अनीनटत् । नृत्ते तु **नाटयति** । स्तकयति, अतिष्टकत् । चकयति, अचीचकत्; अस्यात्मनेपदेषु पठितस्यपरस्मैपदेष्वनुवादात् परस्मैपदं हेडतिवत् । **कण रण** गतौ, **कणयति, अचीकणत्; रणयति, अरीरणत्** । कणति रणति इति शब्दार्थौ; तयोः **काणयति, राणयति** । **स्मृ** आध्यायने, स्मृ चिन्तायामित्यस्य आध्याने मित्वार्थोऽयमनुवादः । आध्यानमुत्कण्ठापूर्वकं स्मरणम्; मातुः **स्मरयति, असस्मरत्** । अनाध्याने **स्मारयति** । दृ भये; **दरयति, अददरत्** । भयादन्यत्र विदारणे

24

**दारयति** काष्ठम्, **अदीदरत्** । **नॄ** नये, **नरयति** । अन्यत्र **नारयति** । **श्रा** पाके; **श्रपयति**, **अशिश्रपत्** । पाकादन्यत्र **श्रापयति**; स्वेदयतीत्यर्थः । धातूनामनेकार्थत्वात् स्वेदने वृत्तिः । मारणतोषणनिशामनेषु ज्ञा (ग.) । एतेष्वर्थेषु जानातिर्मिद्भवति, **संज्ञपयति** पशून्, मारयतीत्यर्थः । तोषणे **ज्ञपयति** राजानम्; तोषयतीत्यर्थः । निशामने **ज्ञपयति** शरान् व्याधः; तेजयतीत्यर्थः । **चलयति** शाखाम्, कम्पयतीत्यर्थः । अन्यत्र शीलं **चालयति**–अन्यथा करोतीत्यर्थः; अचीचलत् । **छदिर्** ऊर्जने इति चौरादिकस्य स्वार्थेणिजभावे मित्वार्थोऽयमनुवादः; **छदयति**, **अचिच्छदत्** । अन्यत्रापवारणे **छादयति** । जनीजॄष्क्नसुरञ्जोऽमन्ताश्च (ग.) इति एतेऽमन्ताश्च मित्संज्ञा भवन्तीत्यर्थः; जनयति, अजीजनत्; जरयति, अजीजरत् । **रञ्जेर्णौमृगरमण उपसङ्ख्यानम्** (वा. VI. 4. 24.) इति नलोपः, **रजयति मृगान्** । मृगरमणादन्यत्र नलोपाभावः, **रञ्जयति** वस्त्रम् । क्रमयति, अचिक्रमत् । गमयति, अजीगमत् । इत्यादि । ग्लास्नावनुवमाञ्च (ग.), अनुपसर्गाद्वेति वर्तते; **ग्लपयति ग्लापयति**, **स्नपयति स्नापयति**, **वनयति वानयति**, **वमयति वामयति** । ग्लास्नोरुपसृष्टयोर्मित्त्वाभावात् **प्रग्लापयति प्रस्नापयति** इत्येव । न कम्यमिचमाम् (ग.), कमु कान्तौ अमगत्यादौ, चमु अदने, एषाममन्तत्वान्मित्वेप्राप्ते प्रतिषिध्यते, **कामयते**, **आमयति**, **आचामयति** । शमो दर्शने (ग.), शम उपशमने इत्यस्य दर्शने गम्यमाने मित्संज्ञा न भवति; **शामयति** रूपम् । अन्यत्र **शमयति** क्रोधम् । यमोऽपरिवेषणे (ग.), यम उपरमे इत्ययं धातुः परिवेषणात् भोजनादन्यत्रामन्तोपि नमित्; **आयामयति** व्यापारयतीत्यर्थः । परिवेषणे **यमयति** ब्राह्मणान् । इति घटादिः ॥

इण् गतौ । **णौ गमिरबोधने** (II. 4. 46.)—णौ परतः इणोऽबोधनार्थस्य गमिरादेशो भवति : **गमयति, अजीगमत्** । इण्वदिक इति वक्तव्यम् (वा. II. 4. 45.) इति इको गमिरादेशः : **अधिगमयति, अध्यजीगमत्** । **गृधिवञ्च्योः प्रलम्भने** (I. 3. 69.)—अकर्त्रभिप्रायार्थोऽयमारम्भः ; गृधु अभिकाङ्क्षायाम्, वञ्चु गतौ, एतयोर्ण्यन्तयोः प्रलम्भने वर्तमानयोरात्मनेपदं भवति । प्रलम्भनं विसंवादनं मिथ्याफलाख्यानमिति यावत् ; माणवकं **गर्धयते**, माणवकं **वञ्चयते** । प्रलम्भनइति किम् ? श्वानं **गर्धयति**—गर्धनमस्योत्पादयतीत्यर्थः ; अहिं **वञ्चयति**—परिहरति इत्यर्थः । **लियः सम्माननशालीनीकरणयोश्च** (I. 3. 70.)—णेरिति वर्तते ; अकर्त्रभिप्रायार्थोऽयमारम्भः : लीङ् श्लेषणे इति दैवादिकः ली श्लेषणे इति क्र्यादेः : अविशेषात् उभयोरपि ग्रहणम् : लियोण्यन्तात्सम्माने शालीनीकरणे च वर्तमानादात्मनेपदम् : चकाराद्विप्रलम्भने च । सम्माननं पूजा, शालीनीकरणं न्यक्कारः ; सम्माने जटाभिः **आलापयते**—पूजामधिगच्छतीत्यर्थः ; शालिनीकरणे श्येनोवर्तिकाम् **उल्लापयते**—न्यक्करोतीत्यर्थः । प्रलम्भने कस्त्वामुल्लापयते ? विसंवादयतीत्यर्थः । विभाषा लीयतेः (VI. 1. 51.) इत्यात्वम् ; तदस्मिन्विषये नित्यम्, अन्यत्र विकल्पः ; व्यवस्थित विभाषाहि सा । सम्माननादिष्विति किम् ? बालकम् **उल्लापयति** । **मिथ्योपपदात्कृञोऽभ्यासे** (I. 3. 71.)—ण्यन्तात्करोतेर्मिथ्योपपदादात्मनेपदं भवति अभ्यासे गम्यमाने । अभ्यासः पुनःपुनः करणम् आवृत्तिरिति यावत् ; पदं **मिथ्याकारयते**—सापचारं स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः । मिथ्योपपदादितिकिम् ? पदं **सुष्टुकारयति** । कृञ इति किम् ? पदं मिथ्या वाचयति । अभ्यास इति किम् ? पदं मिथ्या कारयति—सकृदुच्चारयतीत्यर्थः । **बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः** (I. 3. 86.)—

कर्त्रभिप्रायक्रियाफलविवक्षायां आत्मनेपदेप्राप्ते तदपवादः परस्मैपदं विधीयते ; बुध युध नश जन इङ् प्रु द्रु स्रु इत्येतेभ्यो ण्यन्तेभ्यः परस्मैपदं भवति । येऽत्राकर्मकास्तेषाम् **अणावकर्मकाच्चित्तवत्कर्तृकात्** (I. 3. 88.) इत्येवासिद्धे पुनर्वचनमचित्तवत्कर्तृकार्थम् : **बोधयति** पद्मम् ; **योधयति** काष्ठम् ;**नाशयति** दुःखम् , **जनयति** सुखम् । प्रु—द्रु—स्रुवस्तु चलनार्थाः ; तेषामपि **निगरणचलनार्थेभ्यश्च** (I. 3. 87.) इत्येव सिद्धे यदा अचलनार्थाः तदर्थं ग्रहणम् ; **प्रावयति**—प्रापयतीति गम्यते ; अयो **द्रावयति**—विलापयतीत्यर्थः ; कुण्डिकां **स्रावयति** —स्यन्दयतीत्यर्थः । **निगरणचलनार्थेभ्यश्च** (I. 3. 87.)—निगरणमभ्यवहारः, चलनं कम्पनम् ; निगरणार्थेभ्यश्चलनार्थेभ्यश्च ण्यन्तेभ्यः परस्मैपदं भवति । अचिविभाषा इति लत्वम् ; **निगालयति**, पक्षे **निगारयति** ; **आशयति**, **भोजयति** । चलनार्थेभ्यः **चलयति** ; घटादित्वान्मित्वे न ह्रस्वः ; **चोपयति**, **कम्पयति** । अयंयोगस्सकर्मकार्थः अचित्तवत्कर्तृकार्थश्च । **अदेः प्रतिषेधोवक्तव्यः** (वा.) ; अत्ति देवदत्तः , **आदयते** देवदत्तेन । अत्र गतिबुद्धीत्यादिना देवदत्तस्य कर्मसंज्ञा न भवति आदिखाद्योः प्रतिषेधो वक्तव्यः इति वचनात् । **अणावकर्मकाच्चित्तवत्कर्तृकात्** (I. 3. 88.)—णेरिति वर्तते ; कर्त्रभिप्रायक्रियाफलविवक्षायाम् आत्मनेपदे प्राप्ते परस्मैपदं विधीयते ; अण्यन्तो यो धातुः अकर्मकश्चित्तवत्कर्तृकः तस्मात्परस्मैपदं भवति ; आस्ते देवदत्तः , **आसयति** देवदत्तम् । अणाविति किम् ? आरोहयमाणं प्रयोजयति **आरोहयते** । अकर्मकादिति किम् ? कटङ्कुर्वाणं प्रयोजयति **कारयते** । चित्तवत्कर्तृकादिति किम् ? शुष्यन्ति व्रीहयः ; **शोषयते** व्रीहीनातपः । **न पादम्याङ्यमाङ्यसपरिमुहरुचि नृति वदवसः** (I. 3. 89.)—पूर्वेण योगद्वयेन कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं

विहितम् ; तस्य प्रतिषेधोऽयमुच्यते ; यदकर्त्रभिप्रायक्रियाफलविषयं परस्मैपदं तदवस्थितमेव न प्रतिषिध्यते : पा दमि आङ्यम आङ्यस परिमुह-रुचि नृति वद वस इत्येतेभ्यो धातुभ्यः परस्मैपदं न भवति । तत्र पिबति-निगरणार्थः ; दमिप्रभृतयश्चित्तवत्कर्तृकार्थाः ; नृतिश्चलनार्थोऽपि : **पाययते, दमयते, आयासयते, आयामयते, परिमोहयते, रोचयते, नर्तयते, वादयते, वासयते** । **पादिषु धेट उपसङ्ख्यानम्** (वा.) ; **धापयेते** शिशुमेकं समीची । ओः पुयण्ज्यपरे (VII. 4. 80.) इति वचनं ज्ञापकं णौ कृतमभ्यासस्य स्थानिवद्भवतीति ; दीर्घो लघोः (VII. 4. 94.) इति दीर्घः ; **अपीपवत्, अलीलवत् ; अजीजवत्** । **स्रवति–शृणोति–द्रवति–प्रवति–प्लवति–च्यवतीनां वा** (VII. 4. 81.)—एतेषामङ्गानामभ्यासस्य ओः उवर्णस्य अवर्णस्य यणि परभूते वा इकारादेशो भवति सनिपरतः ; **असिस्रवत्, असुस्रवत् ; अशिश्रवत्, अशुश्रवत् ; अदिद्रवत्, अदुद्रवत् ; अपिप्रवत्, अपुप्रवत् ; अपिप्लवत्, अपुप्लवत् ; अचिच्यवत्, अचुच्यवत्** । **णौ च संश्चङोः** (VI. 1. 31.)—सन्परे चङ्परे णौ परतः श्वयतेर्धातोर्विभाषासम्प्रसारणं भवति ; **अशूशवत्, अशिश्वयत्** । **ह्वः सम्प्रसारणम्** (VI. 1. 32.)—णौ च संश्चङोः इति वर्तते ; सन्परे चङ्परे णौ परतो ह्वः सम्प्रसारणं भवति ; **अजूहवत्** । **विभाषा वेष्टिचेष्ट्योः** (VII. 4. 96.)—वेष्टि चेष्टि इत्येतयोः अभ्यासस्य विभाषा अदित्ययमादेशो भवति चङ्परे णौ परतः ; **अववेष्टत् अविवेष्टत् ; अचचेष्टत् अचिचेष्टत्** । **रभेरशब्लिटोः** (VII. 1. 63.) इति नुम् ; **रम्भयति, अररम्भत्** । **लभेश्च** (VII. 1. 64.) इति नुम् ; **लम्भयति, अललम्भत्** ।

**गण** सङ्ख्याने । **ई च गणः** (VII. 4. 97.)—गणः अभ्यासस्य ईकारादेशो भवति चकारादकारश्च । इत्यभ्यासस्य ईकारादेशः; **अजीगणत्** । पक्षे **अजगणत्** । **नाग्लोपिशास्वृदिताम्** (VII. 4. 2.)—अग्लोपिनामङ्गानां शासेः ऋदितां च णौ चङि उपधाह्रस्वो न भवति । अग्लोपे नास्ति सन्वद्भावः । कथयति, अचकथत् । वरयति, अववरत् । **इङ्** अध्ययने; **णौ च संश्चङोः** (II. 4. 51.)—सन्परे चङ्परे णौ परतः इङो गाङित्ययमादेशो भवति विभाषा; **अध्यजीगपत्** । अन्यथा क्रीङ्जीनाण्णौ इति आत्वम्; पुगागमः; अजादेर्द्वितीयस्येति पिशब्दस्य द्विर्वचनम्; **अध्यापिपत्** । **अट** गतौ; णिच्, चङ्, णिलोपः, ह्रस्वः, द्विर्वचनेऽचि (I. 1. 59.) इति स्थानिवद्भावात् अजादेर्द्वितीयस्येति टि-शब्दस्य द्विर्वचनम्; **आटिटत्** । न माङ्योगे (VI. 4. 74.) इति अडाटौ न भवतः; मा भवान् **अटिटत्** । **नन्द्राः संयोगादयः** (VI. 1. 3.) इति नकारस्य द्विर्वचनप्रतिषेधः; **औन्दिदत्** । **अड्ड** अभियोगे; अत्र संयोगो दकारादिः, ष्टुत्वेन दकारस्य डकारः । तच्च ष्टुत्वं द्विर्वचने आसिद्धं भवति; चङि कृतेडिशब्दो द्विरुच्यते, ततष्टुत्वम्; **आड्डिडत्** । आर्चिचत् । **शासु** अनुशिष्टौ; नाग्लोपीति ह्रस्वनिषेधः; **अशशासत्** । **याचृ** याच्ञायाम्; **अययाचत्** । **भ्राज-भास-भाष-दीप-जीव-मील पीडामन्यतरस्याम्** (VII. 4. 3.)—एतेषां धातूनामङ्गानां णौ चङि वा उपधाह्रस्वो न भवति; **अबिभ्रजत् अबभ्राजत्, अबभासत् अबीभसत्, अबभाषत् अबीभषत्, अदिदीपत् अदीदिपत्, अजिजीवत् अजीजिवत्, अमिमीलत् अमीमिलत्, अपिपीडत् अपीपिडत्** । **तिष्ठतेरित्** (VII. 4. 5.)—तिष्ठतेरङ्गस्य णौ चङि उपधाया इकारादेशो भवति; **अतिष्ठिपत्** । **जिघ्रतेर्वा** (VII. 4. 6.)

—जिघ्रतेरङ्गस्य णौ चङि वा इकारादेशः; अजिघ्रिपत्, अजिघ्रपत् । कॄत संशब्दने: ऋत इद्धातोः इति वर्तमाने, उपधायाश्च (VII. 1. 101.)—उपधाया ॠकारस्य इकारादेशो भवति: उपधायां च (VIII. 2. 78.) इति दीर्घः: कीर्तयति । लुङि चङि, उर्ऋत् (VII. 4. 7.)—णौ चङि उपधाया ॠवर्णस्य ऋकारादेशो भवति । इररारामपवादः, अचीकृतत् । पक्षे—अचिकीर्तत् । वृतु वर्तने: वर्तयति । लुङि अवीवृतत् अववर्तत् । मृजू शुद्धौ: मार्जयति । लुङि अमीमृजत् अममार्जत् ॥

प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च (ग.), तत्करोति तदाचष्टे (ग.), एतेष्वर्थेषु णिच् । णाविष्ठवत् प्रातिपदिकस्य कार्यं भवति (वा. VI. 4. 155.) इति इष्ठवद्भावः । प्रयोजनं पुम्भाव—रभाव—टिलोप—यणादिपरलोपादिकम् । पुंवद्भावस्तावत् एनीङ्करोति एनीमाचष्टे, श्येनीङ्करोति श्येनीमाचष्टे, हरिणीङ्करोति हरिणीमाचष्टे इति वा विगृह्य एनीं श्येनीं हरिणीमित्येतेभ्यश्शब्देभ्यः तत्करोति तदाचष्ट इति णिच्; तथैव सनाद्यन्ता धातवः (III. 1. 32.) इति धातुसंज्ञायां सुपो धातु-प्रातिपदिकयोः (II. 4. 71.) इति सुपो लुक्; वर्णादनुदात्तात्तोपधात्तो नः (IV. 1. 39.) इति विहितस्य ङीप्प्रत्ययस्य च तसिलादिष्वा कृत्वसुचः (VI. 3. 35.) इति पुंवद्भावान्निवृत्तिः: टिलोपः; एतयति, श्येतयति, हरितयति । रभावः—पृथुङ्करोति पृथुमाचष्टे, मृदुङ्करोति मृदुमाचष्टे, इत्ये-तस्मिन्नर्थे पृथु मृदु इत्येताभ्याण्णिचा धातुसंज्ञायां सुपो लुक्, टिलोपः; र ऋतो हलादेर्लघोः (VI. 4. 161.)—हलादेरङ्गस्य लघोः ऋकारस्य र इत्ययमादेशो भवति इष्ठेमेयस्सुपरतः इति ऋकारस्य रभावः; ततो

लडादिकार्यम्; **प्रथयति, म्रदयति** । टिलोपः - घटङ्करोति घटमाचष्टे, पटङ्करोति पटमाचष्टे, पदङ्करोति पदमाचष्टे, इत्येतस्मिन्नर्थे घटं पटं पद-मित्येतेभ्यो णिच्; धातु संज्ञायां सुपो लुक्; इष्टवद्भावात् टेरिति टिलोपः, लडादिकार्यंच; **घटयति, पटयति, पदयति** । अत्र अचःपरस्मिन् पूर्व-विधौ (I. 1. 57.) इति स्थानिवद्भावात् अत उपधाया इति वृद्धिर्न भवति । यणादिपरलोपः—स्थूलङ्करोति स्थूलमाचष्टे इतिवत् विग्रहे स्थूलं दूरं युवानं ह्रस्वं क्षिप्रं क्षुद्रम् इत्येतेभ्यः शब्देभ्यः तत्करोति तदाचष्ट इति णिच्; इष्टवद्भावः; धातुसंज्ञायां सुपो लुक्; टिलोपे प्राप्ते, **स्थूल-दूर-युव-ह्रस्व-क्षिप्र-क्षुद्राणां यणादिपरं पूर्वस्य च गुणः** (VI. 4. 156.) —स्थूलादीनां शब्दानां यणादिपरं लुप्यते पूर्वस्य च गुणः इष्टेमेयस्सुपरतः; ततो लडादिकार्यम्; **स्थवयति, दवयति, यवयति, ह्रसयति, क्षेपयति क्षोदयति** । प्रियङ्करोति प्रियमाचष्टे, इतिवत् विगृह्य प्रियम् इत्यादिभ्यो णिच्; धातुसंज्ञायां सुपो लुक्; टिलोपे प्राप्ते, **प्रियस्थिरस्फिरोरुबहुळ-गुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः** (VI. 4. 157.)—प्रियादीनां यथासङ्ख्यं प्र स्थ स्फ वर् बंहि गर् वर्षि त्रप् द्राघि वृन्द इत्येते आदेशा भवन्ति इष्टेमेयस्सु परतः; अचोञ्णिति इति वृद्धिः; अर्तिह्रीत्यादिना पुगागमः; ततो लडादिकार्यम्; **प्रापयति, स्थापयति, स्फापयति** । **प्रकृत्यैकाचः** (VI. 4. 163.)—यदेकाजङ्गं भसंज्ञकं तदिष्टेमेयस्सु परतः प्रकृत्या भवति; इति प्रकृतिभावाद्वृद्धिटि-लोपौ न स्तः; **वरयति** । इकार उच्चारणार्थः **बंहयति, गरयति, वर्षयति त्रपयति, द्राघयति, वृन्दयति** । **बहु**ङ्करोति बहुमाचष्टे इति विगृह्य बहु-शब्दात्तत्करोति तदाचष्ट इति णिच्; इष्टवद्भावाट्टिलोपे प्राप्ते **बहोर्लोपो भू च बहोः** (VI. 4. 158.) इति वर्तमाने, **इष्टस्य यिट् च** (VI. 4.

159.)—बहुशब्दपरस्येष्टप्रत्ययस्य यिडागमो भवति बहुशब्दस्य भूरादेशश्च; टिलोपापवादो भूरादेशः; इष्टप्रत्ययस्य लोपापवादो यिडागमः; इकार उच्चारणार्थः; टकारो देशविध्यर्थः; भूय इति स्थिते धातुसंज्ञायां लडादिकार्यं पूर्ववत्; **भूययति** । प्रशस्यङ्करोति प्रशस्यमाचष्टे इति विगृह्य प्रशस्यशब्दाण्णिच्; टिलोपे प्राप्ते, **प्रशस्यस्य श्रः** (V. 3. 60.)—प्रशस्यशब्दस्य श्र इत्ययमादेशो भवति अजादौ प्रत्यये परतः; वृद्धिपुगागमौ; **श्रापयति** । **ज्यच** (V. 3. 61.)—प्रशस्यशब्दस्य ज्य इत्ययमादेशो भवति अजादौ प्रत्यये परतः; **ज्यापयति** । वृद्धङ्करोति वृद्धमाचष्टे इति विगृह्य वृद्धशब्दाण्णिच्; इष्टवद्भावादिकम्; **वृद्धस्य च** (V. 3. 62.)—वृद्धशब्दस्य च ज्य इत्ययमादेशो भवति अजाद्योः प्रत्यययोः परतः; **ज्यापयति** । अन्तिकङ्करोति बाढमाचष्टे इत्यत्र अन्तिकबाढयोर्नेदसाधौ (V. 3. 63.)—अजाद्योः परतः अन्तिक बाढ इत्येतयोः यथा सङ्ख्यं नेद साध इत्येतावादेशौ भवतः; **नेदयति, साधयति** । युवानङ्करोति युवानमाचष्टे, अल्पङ्करोति अल्पमाचष्टे इत्यत्र युवाल्पयोः कनन्यतरस्याम् (V. 3. 64.)—युव अल्प इत्येतयोः अन्यतरस्यां कन् इत्ययमादेशो भवति अजादौ प्रत्यये परतः; **कनयति** । पक्षे—**यवयति, अल्पयति** । स्रग्विणङ्करोति स्रग्विणमाचष्टे, त्वग्वन्तङ्करोति त्वग्वन्तमाचष्टे, इति विगृह्य णिचिकृते, **विन्मतोर्लुक्** (V. 3. 65.)—विनो मतुपश्च लुग्भवति अजादौ प्रत्यये परतः; **स्रजयति, त्वचयति** । **तत्करोतीत्युपसंख्यानं सूत्रयत्याद्यर्थम्** (वा. III. 1. 26.)—इति **सूत्रयति मूत्रयति** ।

**तेनातिक्रामति** (ग.) । अत्रापि तेनेति तृतीयान्तोपलक्षणम्; अश्वेन अतिक्रामति **अश्वयति**, हस्तिनातिक्रामति **हस्तयति** । **धातुरूपं च** (ग.); णिच् प्रकृतिः धातुरूपं प्रतिपद्यते । **आख्यानात् कृतस्तदाचष्टे**

**इति णिच्; कृल्लुक्; प्रकृतिप्रत्यापत्तिः; प्रकृतिवच्चकारकम्** (वा. III. 1. 26.)—इति आख्यानात् कृदन्तात् तत्करोति तदाचष्टे इत्ये, तस्मिन्नर्थे णिच् प्रत्ययो भवति, कृत्प्रत्ययस्य लुक्, प्रकृतिविनिमयः प्रकृतिवच्चकारकं भवति । कंसवधमाचष्टे, **कंसं घातयति**; बलिबंधमाचष्टे **बलिं बंधयति**, राजागमनमाचष्टे, **राजानमागमयति** । **कर्तृकरणाद्धात्वर्थे** (ग.); अत्र कर्तृग्रहणं करणविशेषणम्; कर्तुः करणात् धात्वर्थे णिजिति सूत्रार्थः; कारिभिरववध्नाति **अवकरयति**, असिना हन्ति **असयति**, परशुना छिनत्ति **परशयति**, दात्रेण लुनाति **दात्रयति** । **अङ्गान्निरसने** (ग.); अङ्गवाचिनः प्रातिपदिकात् निरसनेऽर्थे वर्तमानाण्णिच्; हस्तौ निरस्यति **हस्तयति**, पादौ निरस्यति **पादयति** । **पुच्छभाण्डचीवराण्णिङ्** (III. 1. 20.)—पुच्छादिभ्यो णिङ् प्रत्ययो भवति । **पुच्छादुदसने पर्यसने वा** (वा.); पुच्छमुत्क्षिपति **उत्पुच्छयते**, पुच्छं परिक्षिपति **परिपुच्छयते** । **भाण्डात् समाचयने** (वा.); इति **सम्भाण्डयते**, भाण्डानि राशीकरोतीत्यर्थः । **चीवरादार्जने परिधाने वा** (वा.); इति **सञ्चीवरयते** भिक्षुः । **मुण्ड–मिश्र–श्लक्ष्ण–लवण–व्रत–वस्त्र–हल–कल–कृत–तूस्तेभ्यो णिच्** (III. 1. 21.)—मुण्डादिभ्यो णिच् प्रत्ययो भवति । मुण्डङ्करोति मुण्डयति, मिश्रङ्करोति मिश्रयति, श्लक्ष्णङ्करोति श्लक्ष्णयति, लवणंकरोति लवणयति । व्रतात् भोजने तन्निवृत्तौच; पयो **व्रतयति**; शूद्रान्नं **व्रतयति**, परिहरतीत्यर्थः । वस्त्रात्समाच्छादने; **संवस्त्रयति**, **परिवस्त्रयति** । हलिं गृह्णाति **हलयति**, कलिं गृह्णाति **कलयति**; हलिकल्योः अदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्, **अजहलत्**, **अचकलत्** । कृतं गृह्णाति **कृतयति**, तूस्तानि विहन्ति **वितूस्तयति** । **वह** प्रापणे; कर्मणि निष्ठा, क्तप्रत्ययः; ककारः कित्कार्यार्थः; यजादित्वात्सम्प्रसारणं, परपूर्वत्वं,

होढः इति ढत्वं, झषस्तथोर्धोऽधः इति धत्वं, ष्टुत्वं, ढो ढे लोपः, ढ्रलोपे पूर्वस्य दीर्घोऽणः ; ऊढ इति स्थिते, ऊढङ्करोति ऊढमाचष्टे इति णिच् : इष्ठवद्भावोट्टेरिति टिलोपः : धातुसंज्ञायां लडादिकार्यम् ;- **ऊढयति** । लुङि च्लेश्चङादेशः, चङीति द्विर्वचनं प्रति ढत्व–धत्व–ष्टुत्व–ढलोपादीनाम-सिद्धत्वाट्टिलोपस्य स्थानिवद्भावादजादेर्द्वितीयस्येति द्विर्वचनं हृत इत्येतस्य ; हलादिश्शेषः, कुहोश्चुरिति चुत्वं, जश्त्वं, ढत्व धत्वादिकार्यं पूर्ववत् : द्विर्वचनविधिं प्रत्येव टिलोपस्य स्थानिवद्भावात् ढ्रलोपे इति दीर्घो न भवति ; आडागमः ; आटश्चेति वृद्धिः ; **औजढत्** । अथ वा वह प्रापणे इत्यस्य धातोः स्त्रियाङ्क्तिन् (III. 3. 94.) इति क्तिन् प्रत्ययो भवति : तत्रापि ढत्व–धत्वादि–कार्यं पूर्ववत् : ऊढिङ्करोति ऊढिमाचष्टे इति विगृह्य, तत्करोति तदाचष्टे इति णिच् : लटि **ऊढयति** ; लुङि सर्वङ्कार्यम्पूर्ववत् **औजिढत्** इत्यादि सर्वमुन्नेयम् ॥

॥ इति णिजन्ताः ॥

---

॥ अथ प्रत्ययमाला ॥

सन्नन्तात् भूधातोः णिचि द्वित्वे अभ्यासकार्ये षत्वे च बुभूष+इ इति जाते; अतो लोपः इत्यलोपः ; **बुभूषयति** । यकि णिलोपः ; **बुभूष्यते** । चिण्वदिटि **बुभूषयिषीष्ट** । एधधातोः **एदिधिषयति** ; इत्यादि पचेःसनि णिचि **पिपक्षयति** इत्यादि । भवतेः यङन्ताण्णिचि बोभूययति ; पचेस्तु पापच्य इति स्थिते णिच्, यस्य हल (VI. 4. 49.) इति यलोपः– **पापचयति** इत्यादि । ण्यन्ताण्णिच् ; णेरनिटि (VI. 4. 51.) इति

णिलोपः; सर्वत्र **भावयति**; यकि **भाव्यते** इत्यादि । ण्यन्तात्सन्; णौ कृतमभ्यासस्य स्थानिवद्भवतीति स्थानिवद्भावात् ओः पुयण्ज्यपरे इति इत्वम्; **बिभावयिषति** इत्यादि । कारयितुमिच्छतीत्यस्मिन् अर्थे सन्; द्विर्वचनम्; **चिकारयिषति** । **इच्छासन्नन्तात् सनः प्रतिषेधोवक्तव्यः** (वा. III. 1. 7.) एकस्यां क्रियायामिच्छाद्वयस्यासम्भवात् चिकीर्षितुमिच्छतीत्येवमादिवाक्यं सन्प्रत्ययप्रयोगानर्हमेव; णिचा व्यवधाने तु सन् भवति क्रियाभेदात्; लटि **बुभूषयिषति** । इच्छाविशेषणं किम्? **जुगुप्सिषते, मीमांसिषते** ।

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ।
सरूपप्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥

तत्र भवः प्रत्ययः शैषिकः; शालायां भवः शालीयः; वृद्धाच्छः इति छप्रत्ययः; शालीये भवतीति विग्रहे पुनश्छो न भवति । मतुबर्थिकः प्रत्ययः दण्डोस्यास्तीति दण्डिकः; अत इनिठनौ, दण्डिकोस्यास्तीति विगृह्य पुनष्ठन् प्रत्ययो न भवति । इच्छासन्नन्ताच्च सन्नभवति । यङन्तण्यन्तात् सन्; **बोभूययिषति** इत्यादि । यङन्तसन्नन्ताण्णिच्; **बोभूयिषयति** इत्यादि । सनन्तण्यन्तसनन्ताण्णिच्; **बुभूषयिषति** इत्यादि । ण्यन्तसनन्तण्यन्तात् सन्; **बिभावयिषयिषति** इत्यादि । यङन्तण्यन्तसनन्ताण्णिच्; **बोभूययिषयति** इत्यादि । यङन्तसनन्तण्यन्तात् सन्; **बोभूयिषयिषति** इत्यादि । यङन्तण्यन्तसनन्तण्यन्तात् सन्; **बोभूययिषयिषति** । इत्यादि सर्वं सम्भवात् समीक्ष्य समुन्नेयम् ॥

**॥ इति उपर्युपरिविहितप्रत्ययमालापरिच्छेदः ॥**

———

॥ अथ सुब्धातव उच्यन्ते ॥

पुत्रमात्मन इच्छतीत्येतस्मिन्नर्थे **सुप आत्मनः क्यच्** (III. 1. 8.)—कर्मणः इच्छायां वेति निवर्तते ; एषितुरेव आत्मनस्सम्बन्धिन इषिकर्मणस्सुबन्तात् इच्छायां वा क्यच् प्रत्ययो भवति । इति द्वितीयैकवचनान्तात्पुत्रशब्दात्क्यच् ; ककारस्य लशक्वतद्धिते इतीत्संज्ञा ; लोपः ; प्रयोजनं नः क्ये (I. 4. 15.) इति विशेषणार्थः ; चकारस्सामान्यग्रहणविघातार्थः । सनाद्यन्ता धातवः इति धातुसंज्ञायां, सुपोधातु प्रातिपदिकयोः इति सुपो-लुक् । **क्यचि च** (VII. 4. 33.)—क्यचि चपरतोऽवर्णान्तस्याङ्गस्य ईकारादेशो भवति । पुत्रीय इति स्थिते पूर्ववल्लडादयः ; **पुत्रीयति** । तथा घटीयति, वालीयति मालीयति । सुब्ग्रहणं किम्? वाक्यान्माभूत् महान्तं पुत्रमिच्छतीति । आत्मन इति किम्? राज्ञः पुत्रमिच्छति अमात्यः । राजानमात्मन इच्छति इत्यर्थे राजानमित्यस्मात् क्यच् ; धातुसंज्ञायां सुपो लुक् । **नः क्ये** (I. 4. 15.)—क्य इति क्यच् क्यष-क्यङां सामान्येन ग्रहणम् ; नकारान्तशब्दस्वरूपं क्ये परतः पदसंज्ञं भवति । नलोपः प्रातिपदिकान्तस्य इति नकारलोपः ; पूर्वत्रासिद्धस्य नलोपस्सुप्स्वरसंज्ञातुग्विधिषु कृति (VIII. 2. 2.) इति नियमादीकारादेशो भवति ; राजानमात्मन इच्छति **राजीयति** । एवमेव चर्मीयति, वर्मीयति, उक्षीयति । **अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि** (VII. 1. 51.)—एषामात्मप्रीति विषये क्यचि परतः असुगागमो भवति । **अश्ववृषयोर्मैथुनेच्छयामिति वक्तव्यम्** (वा.); अश्वमात्मन इच्छति **अश्वस्यति बडबा, वृषस्यति गौः** । अन्यत्र **अश्वीयति, वृषीयति** । **क्षीरलवणयोर्लालसायामिति वक्तव्यम्** (वा.); तृष्णातिरेको

लालसा ; क्षीरमात्मन इच्छति **क्षीरस्यति माणवकः, लवणस्यत्युष्ट्रः** । अन्यत्र **क्षीरीयति, लवणीयति** । सर्वप्रातिपदिकानां लालसायामसुग्वक्तव्यः (वा.) ; इति—**दध्यस्यति, मध्वस्यति** । **अकृत्सार्वधातुकयोर्दीर्घः** (VII. 4. 25.)—अकृद्यकारे असार्वधातुकयकारे च क्ङिति परतोऽजन्तस्याङ्गस्य दीर्घो भवति ; **कवीयति, पतीयति** । तथा सक्थीयति, सखीयति, दन्तीयति, तरुणीयति, ऋजूयति, वधूयति । **रीङृतः** (VII. 4. 27.)—ऋकारान्तस्याङ्गस्य अकृद्यकारे असार्वधातुक यकारे च्वौ च परतः रीङित्ययमादेशो भवति । इति रीङ् ; **पित्रीयति, मात्रीयति** । **वान्तो यि प्रत्यये** (VI. 1. 79.)—योऽयमेचः स्थाने वान्तादेशः स यकारादौ प्रत्यये परतोऽपि भवति ; **गव्यति, नाव्यति, ग्लाव्यति** । **त्वमावेकवचने** (VII. 2. 97.) इति वर्तमाने, **प्रत्ययोत्तरपदयोश्च** (        )—प्रत्यये चोत्तरपदे परतः एकवचनान्तयोः युष्मदस्मदोर्मपर्यन्तस्य त्वम इत्येतावादेशौ भवतः ; **त्वद्यति, मद्यति** । हलि च इति दीर्घः ; **गीर्यति, धूर्यति, दीव्यति** । **क्यचि मान्ताव्ययनिषेधो वक्तव्यः** (वा. III. 1. 8.) ; **किमिच्छति, इदमिच्छति, उच्चैरिच्छति, नीचैरिच्छति**, इत्यादि । समिधमात्मन इच्छति **समिध्यति** ; अत्र लुटि अतोलोपः इत्यल्लोपः ; **यस्य हलः** (VI. 4. 49.) इत्यनुवर्तमाने, **क्यस्य विभाषा** (VI. 4. 50.)—हल उत्तरस्य क्यस्य विभाषा लोपो भवति आर्धधातुके परतः । अत्र क्यच्—क्यष्—क्यङां सामान्येनग्रहणम् ; **समिधिता, समिध्यिता** । **काम्यच्च** (III. 1. 9.)—कर्मण आत्मनेच्छायां सुबन्तात् काम्यच् प्रत्ययो भवति । शेषं समानम् ; पुत्रमात्मन इच्छति **पुत्रकाम्यति, शालाकाम्यति, त्वत्काम्यति, मत्काम्यति**, इत्यादि सर्वमुन्नेयम् ।

**उपमानादाचारे** (III. 1. 10.)—क्यजनुवर्तते न काम्यच्; उपमानात्कर्मणस्सुबन्तादाचारेऽर्थे क्यच् प्रत्ययो भवति । आचारक्रियायाः प्रत्ययार्थत्वात्तदपेक्षयैवोपमानस्य कर्मता; पुत्रमिवाचरति **पुत्रीयति** छात्रमाचार्यः; तथा **राजीयति** सेवकः, इत्यादि । **अधिकरणाच्चेति वक्तव्यम्** (वा.); इति–**प्रासादीयति** कुट्यां, **पर्यङ्कीयति** मञ्चके, **अश्वीयति** तृपे, **भुजङ्गीयति** रज्जुके, इत्यादि । **कर्तुः क्यङ् सलोपश्च** (III. 1. 11.)—आचारे इति वर्तते; उपमानात्कर्तुस्सुबन्तादाचारेऽर्थे क्यङ् प्रत्ययो भवति, सकारस्य च लोपो भवति । अन्वाचयशिष्टः सलोपः; अन्वाचयार्थेन चकारेण विहितः सलोपः इत्यर्थः; तदसम्भवेऽपि क्यङ् भवत्येव । **अकृत्सार्वधातुकयोर्दीर्घः** इति दीर्घः; **सूर्यायते** चन्द्रमाः; **चन्द्रायते** भानुः, **राजायते** अमात्यः, **दन्तीयते** श्वा, **कवीयते** वैयाकरणः, **गुरूयते** छात्रः । पुत्रीयते छात्रं कुमारीवाचरति इत्यत्र कुमारीशब्दात् क्यङ्; **क्यङ्मानिनोश्च** (VI. 3. 36.)—क्यङि परतो मानिनि च स्त्रियाः भाषितपुंस्कादनूङन्तस्य पुंवद्भावो भवति; **कुमारायते** वृद्धा, **युवायते** जरठा । सलोपविधावपि वा ग्रहणं सम्बध्यते, सा च व्यवस्थितविभाषा; **ओजायते अप्सरायते, पयस्यते, पयायते** ।

ओजसोऽप्सरसो नित्यं पयसस्तुविभाषया ।
सकारस्येष्यते लोपः शब्दशास्त्रविचक्षणैः ॥

सलोपविधौ कर्तुरिति स्थानषष्ठी सम्पद्यते; तत्र अलोऽन्त्यस्येति नियमो भवति; तेन **हंसायते** इत्यत्र अनन्त्यस्य सकारस्य लोपो न भवति । **आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः** (वा.); अवगल्भधार्ष्ट्ये, क्लीब अधार्ष्ट्ये, होडृ अनादरे–एते आत्मनेपदिनः;

एतेभ्यः पचाद्यच्, ततः क्विप्, क्यङ् च; सनादित्वाद्धातुसंज्ञायाम् **अवगल्भते, अवगल्भायते, क्लीबते, क्लीबायते, विहोडते, विहोडायते** । इदं प्रयोजनं विकल्पेन क्विब्विधानस्य **अवगल्भाञ्चक्रे** इत्यादौ प्रत्ययान्तत्वात् कास् प्रत्ययादाममन्त्र इत्याम्प्रत्ययो यथास्यात् इति; अन्यथा **अवजगल्भे** इत्यादि भवेत् । सर्वप्रातिपदिकेभ्य इत्येके (वा.); इति **अश्वति** गर्दभः, **हंसति** काकः, इत्यादि ॥

**भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः** (III. 1. 12.)—भृश इत्येवमादिभ्यः प्रातिपदिकेभ्यः अच्व्यन्तेभ्यो भुवि भवत्यर्थे क्यङ् प्रत्ययो भवति, हलन्तानाञ्च लोपो भवति; **भृशायते, शीघ्रायते, पण्डितायते, उन्मनायते, सुमनायते**, इत्यादि । **लोहितादिडाज्भ्यः क्यष्** (III. 1. 13.)—लोहितादिभ्यो डाजन्तेभ्यश्च भुवि भवत्यर्थे क्यष् प्रत्ययो भवति । **वा क्यषः** (I. 3. 90.)—क्यषन्ताद्धातोर्वा परस्मैपदं भवति; **लोहितायते, लोहितायति, वर्मायते, वर्मायति**, इत्यादि । डाजन्तेभ्यः पटत् शिमत् दमत् इत्येवमादिभ्यः शब्देभ्यः अव्यक्तानुकरणाद्‌व्यजवरार्धादनितौ डाच् (V. 4. 57.)—अव्यक्तशब्दादनुकरणवाचिनः, द्‌व्यच् अवरं हीनं यस्य तत् द्‌व्यजवरं द्‌व्यजवरम् अर्धं यस्य तत्, तस्मात् पटादित्येवमादिशब्दात् डाच् प्रत्ययो भवति; अनितौ इति शब्दपरत्वे न भवति । अत्र **डाचि बहुलं द्वे भवतः** (वा. VIII. 1. 12.) इति द्विर्भावः डाजुत्पत्तेः पूर्वमेव भवति; डाचि इति विषयसप्तमी । **तस्य परमाम्रेडितम्** (VIII. 1. 2.)—तस्य द्विरुक्तस्य परं आम्रेडितसंज्ञं भवति । नित्यमाम्रेडिते डाचि (VI. 1. 100.)—अत्र अतः अन्त्यस्येत्यनुवर्तते; डाच्परं यदाम्रेडितं तस्मिन् पूर्वस्याव्यक्तानुकरणस्याच्छब्दस्य योऽन्त्य-

स्तकारः तस्य पूर्वस्य परस्य च आदिवर्णस्य नित्यं पररूपमेकादेशो भवति । इति पूर्वपरयोः पररूपत्वम् ; नतष्टेरिति टिलोपः ; ततः डाजन्तत्वात् क्यष् ; धातुसंज्ञायां लडादयः ; वाक्यषः (I. 3. 90.) इति वा परस्मैपदम् ; **पटपटायति पटपटायते, शिमिशिमायति शिमिशिमायते, दमदमायति दमदमायते** ।

**नमो वरिवश्चित्रङः क्यच्** (III. 1. 19.)—नमस् वरिवस् चित्रङ् इत्येतेभ्यः क्यच्प्रत्ययो भवति करणविषये । नमसः पूजायां **नमस्यति** देवान् ; वरिवः परिचर्यायां **वरिवस्यति** गुरून् ; चित्रङ् आश्चर्ये **चित्रीयते**– चित्रङो ङकार आत्मनेपदार्थः । **कष्टाय क्रमणे** (III. 1. 14.)—कष्टं पापम् अनार्जवम् ; क्यङ् अनुवर्तते नक्यष् ; कष्टशब्दाच्चतुर्थीसमर्थात् क्रमणे अनार्जवे क्यङ् प्रत्ययो भवति ; कष्टाय क्रामति **कष्टायते**–पापं कर्तुमुत्सहते इत्यर्थः । **सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्** (वा.) ; कण्वं पापं, तच्चिकीर्षायां तेभ्यः क्यङ् प्रत्ययो भवति ; सत्रं चिकीर्षति **सत्रायते ; कक्षायते, कष्टायते, कृच्छ्रायते, गहनायते** । कण्वचिकीर्षायामिति किम् ? अजः कष्टं क्रामति । **कर्मणो रोमन्थतपोभ्यां वर्तिचरोः** (III. 1. 15.)—रोमन्थशब्दात् तपश्शब्दाच्च कर्मणो यथाक्रमं वर्तिचरोरर्थयोः क्यङ् प्रत्ययो भवति ; रोमन्थं वर्तयति । **रोमन्थायते** गौः । हनु चलन इति वक्तव्यम् ( वा. ) ; इह माभूत् कीटो रोमन्थं वर्तयति । **तपसः परस्मैपदञ्च** ( वा. ) ; तपश्चरति **तपस्यति** तापसः । **बाष्पोष्मभ्यामुद्वमने** (III. 1. 16.)—कर्मण इति वर्तते ; बाष्पशब्दादूष्मशब्दाच्च कर्मण उद्वमनेऽर्थे क्यङ् प्रत्ययो भवति ; बाष्पमुद्वमति **बाष्पायते**, ऊष्माण मुद्वमति **ऊष्मायते** ।

**फेनाच्चेति वक्तव्यम्** ( वा. ) : फेनमुद्वमति **फेनायते** । **शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे** (III. 1. 17.)—शब्द वैर कलह अभ्र कण्व मेघ इत्येतेभ्यः- करणेऽर्थे क्यङ् प्रत्ययो भवति; शब्दं करोति **शब्दायते, वैरायते, कलहायते, अभ्रायते, कण्वायते, मेघायते** । **सुदिनदुर्दिन नीहारेभ्यश्चेति वक्तव्यम्** ( वा. ); इति–**सुदिनायते, दुर्दिनायते, नीहारायते** । **सुखादिभ्यः कर्तृवेदनायाम्** (III. 1. 18.)—सुख इत्येवमादिभ्यः कर्मभ्यः वेदनायामर्थेऽनुभवे क्यङ् भवति, वेदयितु श्चेत् कर्तुः सम्बन्धीनि सुखादीनि भवन्ति; सुखं वेदयते **सुखायते** । कर्तृग्रहणङ्किम्? सुखं वेदयते प्रसाधको देवदत्तस्य । सत्यापपाशरूपवीणा तूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् (III. 1. 25.)—सत्याप पाश रूप वीणा तूल श्लोक सेना लोम त्वच वर्म वर्ण चूर्ण इत्येतेभ्यश्चुरादिभ्यश्च णिच् प्रत्ययो भवति । **अर्थवेदसत्यानामापुग्वक्तव्यः** ( वा. ); सत्यमाचष्टे **सत्यापयति** ; **अर्थापयति, वेदापयति** । पाशाद्विमोचने **विपाशयति** ; रूपात् दर्शने **रूपयति** ; वीणामुपगायति **उपवीणयति** ; तूलेनानुकुष्णाति **अनुतूलयति** ; श्लोकैरुपस्तौति **उपश्लोकयति** ; सेनयाभियाति **अभिषेणयति** ; लोमान्यनुमार्ष्टि **अनुलोमयति** ; त्वचं गृह्णाति **त्वचयति** ; अकारान्तस्त्वचशब्दः ; वर्मणा सन्नह्यति **संवर्मयति** ; वर्णं गृह्णाति **वर्णयति** ; चूर्णैरवध्वंसते **अवचूर्णयति** । चुरादिभ्यस्स्वार्थे । **कण्ड्वादिभ्यो यक्** (III. 1. 27.)—कण्डूञ् इत्येवमादिभ्यो यक्प्रत्ययो भवति। द्विधा कण्ड्वादयः धातवः प्रातिपदिकानि च ; तत्र धात्वधिकारात् धातुभ्यः प्रत्ययो विधीयते नप्रातिपदिकेभ्यः ; तथा च गुणप्रतिषेधार्थः ककारोऽनुबध्यते।

धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि ।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ॥

आत्मनेपदञ्च ; **कण्डूयते कण्डूयति, असूयते, महीयते** ; सुख दुःख तत्क्रियायाम् अतो लोपः, **सुख्यति** इत्यादि । क्यजन्तात् सन् ; द्विर्वचनमेकाचो यथेष्टन्नाम धातूनामिति वक्तव्यम् (वा. VI. 1. 3.) ; इति—**पुपुत्रीयिषति पुत्रित्रीयिषति पुत्रीयियिषति** । **कण्ड्वादीनां तृतीय एव** (वा. VI. 1. 3.) इति **कण्डूयियिषति, असूयियिषति,** इत्यादि । क्यजन्ताण्णिच् : **पुत्रीययति, राजीययति,** इत्यादि । सर्वलकारेषु सविस्तरं समालोच्य विज्ञेयम् ॥

॥ इति सुब्धातुपरिच्छेदः ॥

---

## ॥ अथ तिङ्विभक्त्यर्थाः प्रदर्श्यन्ते ॥

अत्र लकाराणामर्थविशेषा उच्यन्ते ।

**भूते** (III. 2. 84.) इति वर्तमाने, **लुङ्** (III. 2. 110.)—भूतेऽर्थे वर्तमानाद्धातो र्लुङ्प्रत्ययो भवति ; **अकार्षीत्** । **वसतेर्लुङ् रात्रिविशेषे जागरणसन्ततौ वक्तव्यः** ( वा. ) ; रात्रि शेषे जागरणं सम्भवतीति क्वभवानुषितः? अहमत्र **अवात्सम्** । **अनद्यतने लङ्** (III. 2. 111.)—भूत इत्येव ; अनद्यतन इति बहुव्रीहिनिर्देशः ; अविद्यमानाद्यतने भूतेऽर्थे वर्तमानाद्धातोर्लङ्प्रत्ययो भवति ; **अकरोत्, अहरत्** । बहुव्रीहिनिर्देशः किमर्थः? **अद्य ह्यो वा अभुञ्ज्महि** इति व्यामिश्रे

मा भूत् । **परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ् वक्तव्यः** ( वा. ); इति–**अरुणत् यवनः** साकेतम् । परोक्ष इति किम्? उदगादयमादित्यः । लोकविज्ञाते इति किम्? चकार कटं देवदत्तः । प्रयोक्तुर्दर्शनविषये इति किम्? जघान कंसं किल वासुदेवः । **अभिज्ञावचने लृट्** (III. 2. 112.)—अभिज्ञा स्मृतिः? तद्वचन उपपदे भूतानद्यतने लृट् प्रत्ययो भवति । लङोऽपवादः; **अभिजानासि देवदत्त कश्मीरेषु वत्स्यामः** । वचनग्रहणं पर्यायार्थम्; अभिजानासि, स्मरसि, बुध्यसे, चेतयसे इति । न यदि (III. 2. 113.)—यच्छब्दसहिते अभिज्ञावचने उपपदे लृट् प्रत्ययो न भवति; अभिजानासि देवदत्त यत् कश्मीरेषु **अवसाम** । वासमात्रमत्र स्मर्यते, नातः परं किञ्चिल्लक्ष्यते । **विभाषा साकाङ्क्षे** (III. 2. 114.)—अभिज्ञावचने उपपदे यच्छब्दसहिते केवले च विभाषा लृट् प्रत्ययो भवति साकाङ्क्षश्चेत् प्रयोक्ता; लक्ष्यलक्षणयोस्सम्बन्धे प्रयोक्तुराकाङ्क्षा भवति; अभिजानासि देवदत्त कश्मीरेषु **वत्स्यामस्तत्रौदनं भोक्ष्यामहे**? पक्षे–अभिजानासि देवदत्त कश्मीरेषु **अवसामस्तत्रौदनमभुञ्ज्महि**? यदि खल्वपि अभिजानासि देवदत्त **यत् कश्मीरेषु वत्स्यामः यत्तत्रौदनं भोक्ष्यामहे**? पक्षे–अभिजानासि देवदत्त **यत्कश्मीरेष्ववसाम यत्तत्रौदनमभुञ्ज्महि**? वासो लक्षणं भोजनं लक्ष्यम् । परोक्षे लिट् (III. 2. 115.)—भूतानद्यतन इति वर्तते; भूतानद्यतनपरोक्षे वर्तमानाद्धातोः लिट् प्रत्ययो भवति । ननु च धात्वर्थस्सर्वः परोक्ष एव; सत्यमेतत् । अस्ति तु लोके तत्रापि प्रत्यक्षाभिमानः; स यत्र नास्ति तत्परोक्षमित्युच्यते; **चकार, जहार** । उत्तमविषयेऽपि चित्तव्याक्षेपात् परोक्षता सम्भवत्येव; तद्यथा–**सुप्तोऽहं किल विललाप** । **अत्यन्तापह्नवे लिड् वक्तव्यः** ( वा. ); इति–**कलिङ्गेषु स्थितोऽसि? नाहं कलिङ्गान् जगाम** । **हशश्वतोर्लङ्च**

(III. 2. 116.)—भूतानद्यतनपरोक्षे इति वर्तते, तस्य विशेषणमेतत् ; ह शश्वत् इत्येतयोरुपपदयोः भूतानद्यतनपरोक्षविषये लङ् भवति : चकाराल्लिट् ; इति हाकरोत् चकार वा, शश्वदकरोत् चकार वा । **प्रश्ने चासन्नकाले** (III. 2. 117.)—पञ्चवर्षाभ्यन्तरमासन्नकालः ; भूतानद्यतनपरोक्षे इति वर्तते, तस्य विशेषणमेतत् ; प्रष्टव्यः प्रश्नः ; आसन्नकाले पृच्छ्यमानेऽर्थे भूतानद्यतनपरोक्षे वर्तमानाद्धातोर्लङ्लिटौ प्रत्ययौ भवतः ; कश्चित् कञ्चित् पृच्छति किम् **आगच्छत्** देवदत्तः किम् **आजगाम** किम् **अयजत्** देवदत्तः किम् **इयाज** देवदत्तः इति । प्रश्ने इति किम्? देवदत्तो जगाम । आसन्नकाल इति किम्? भवन्तं पृच्छामि जघान कंसं किल वासुदेवः इति । **लट् स्मे** (III. 2. 118.)—भूतानद्यतनपरोक्ष इति वर्तते ; स्म-शब्दे उपपदे भूतानद्यतने वर्तमानाद्धातोर्लट् प्रत्ययो भवति । लिटोऽपवादः ; नलेन स्म पुरा अधीयते । **अपरोक्षे च** (III. 2. 119.)—भूतानद्यतने वर्तमानाद्धातोः स्म-शब्दे उपपदे लट् प्रत्ययो भवति ; एवं **स्म** पिता ब्रवीति, इति **स्म** उपाध्यायः कथयति । **ननौ पृष्टप्रतिवचने** (III. 2. 120.)—अनद्यतने परोक्षे इति निवृत्तम् ; भूतसामान्ये विधिरयम् ; ननु-शब्दे उपपदे प्रश्नपूर्वके प्रतिवचने गम्यमाने भूते लट् प्रत्ययो भवति । लुङोऽपवादः ; अकार्षीः कटं देवदत्त? **ननु करोमि भोः** । पृष्टप्रतिवचनात्किम्? नन्वकार्षीर्माणवकः । **नन्वोर्विभाषा** (III. 2. 121.)—भूत इत्येव ; न-शब्दे नु-शब्दे चोपपदे पृष्टप्रतिवचने विभाषा लट् प्रत्ययो भवति । अकार्षीः कटं देवदत्त? **न करोमि भो नाकर्षम्** ; अहं **नु करोमि** अहं नु **अकार्षम्** । **पुरि लुङ् चास्मे** (III. 2. 122.)—अनद्यतनग्रहणमिह मण्डूकप्लुत्यानुवर्तते ; पुराशब्दे उपपदे स्म-शब्द-वर्जिते भूतानद्यतने विभाषा लुङ् प्रत्ययो भवति, लट च । ताभ्यां मुक्ते

यथा विषयमन्येऽपि प्रत्यया भवन्ति ; **वसन्तीह पुरा छात्राः अवात्सुरिह पुरा वा** । पक्षे **ऊषुरिह पुरा छात्राः अवसन्निह पुरा वा** । अस्म इति किम्? नलेन स्म पुराधीयते । **वर्तमाने लट्** (III. 2. 123.)—प्रारब्धापरिसमाप्तश्च वर्तमानः ; तस्मिन्वर्तमानेऽर्थे धातोर्लट्प्रत्ययो भवति ; **पठति, नयति** । **यावत्पुरानिपातयोर्लट्** (III. 3. 4.)—भविष्यतीत्येव : यावत् पुरा इत्येतयोः निपातयोरुपपदयोः भविष्यति काले धातोर्लट्प्रत्ययो भवति ; **यावद्भुङ्क्ते, पुरा भुङ्क्ते** । निपातयोरिति किम्? यावद्दास्यति तावद्भुङ्क्ते । पुराभुङ्क्ते । करणभूतया पुरा व्रजिष्यति ; नात्र पुरा-शब्दो भवति किन्तु तृतीयान्तः । **विभाषा कदा कर्ह्योः** (III. 3. 5.)—कदा कर्हि इत्येतयोरुपपदयोः भविष्यति काले विभाषा लट्प्रत्ययो भवति ; **कदा भुङ्क्ते, कदा भोक्ष्यते, कदा भोक्ता, कर्हि भुङ्क्ते, कर्हि भोक्ष्यते, कर्हि भोक्ता** । **किंवृत्ते लिप्सायाम्** (III. 3. 6.)—विभाषेति वर्तते ; किमो वृत्तं किंवृत्तम् ; वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात् ; डतर डतमौ चेति परिसंङ्ख्यानं स्मर्यते ; किंवृत्ते चोपपदे लिप्सायां गम्यमानायां भविष्यति काले विभाषा लट्प्रत्ययो भवति । लिप्सा लब्धुमिच्छा प्रार्थना अभिलाषः ; **कं भवन्तो भोजयन्ति? कं भवन्तो भोजयिष्यन्ति? कं भवन्तो भोजयितारः?**-इति लब्धुकामः पृच्छति । **कतरः कतमो वा भिक्षां ददाति दास्यति दाता वा** । लिप्सायामिति किम्? कः पाटलिपुत्रं गमिष्यति? **लिप्स्यमानसिद्धौ च** (III. 3. 7.)—विभाषेत्यपि ; लिप्स्यमानात् सिद्धिः लिप्स्यमानसिद्धिः ; एतस्यां गम्यमानायां भविष्यति काले विभाषा लट् प्रत्ययो भवति । अकिंवृत्तार्थोऽयमारम्भः ; **यो भक्तं ददाति स स्वर्गं गच्छति, योऽधिकं भक्तं दास्यति स स्वर्गं गमिष्यति ; यो भक्तं दाता स स्वर्गं गन्ता** । अत्र लिप्स्यमानात् भक्तात् स्वर्गसिद्धिमाचक्षाणो

दातारं प्रोत्साहयति । **लोडर्थलक्षणे च** (III. 3. 8.)—लोडर्थः प्रैषादिः लक्ष्यते येन धात्वर्थेन सलोडर्थलक्षणो धात्वर्थः; तस्मिन्वर्तमानाद्धातोर्भविष्यति काले विभाषा लट् प्रत्ययो भवति; उपाध्यायश्चेत् **आगच्छति आगमिष्यति आगन्ता वा, अथ त्वं व्याकरणम् अधीष्व ।** अत्र उपाध्यायागमनम् अध्ययनप्रैषस्य लक्षणम् । **लिङ् चोर्ध्वमौहूर्तिके** (III. 3. 9.)—भविष्यति विभाषा लोडर्थ लक्षणे इति सर्वमनुवर्तते; ऊर्ध्वमौहूर्तिके भविष्यति काले लोडर्थलक्षणे धात्वर्थे वर्तमानाद्धातोः लिङ् प्रत्ययो भवति; चकाराल्लट् । ऊर्ध्वमुहूर्तात् उपरि मुहूर्तस्य उपाध्यायश्चेत् **आगच्छेत आगच्छति आगमिष्यति आगन्ता वा अथ त्वं वेदम् अधीष्व ।** वर्तमानसामीप्ये वर्तमानवद्वा (III. 3. 131.)—समीपमेव सामीप्यम्; वर्तमानसमीपे भूते भविष्यति च वर्तमानात् धातोर्वर्तमानवत्प्रत्यया भवन्ति । वर्तमाने लट् (III. 2. 123.)—इत्यारभ्य यावत् उणादयो बहुळम् (III. 3. 1.)—इति वर्तमाने प्रत्यया उक्ताः; ते भूतभविष्यतोर्विधीयन्ते । कदा देवदत्त आगतोऽसि? **अयमागच्छामि** —आगच्छन्तमेव मां विद्धि, इत्यर्थः; **अयमागमम्, एषोऽस्म्यागतः ।** कदा देवदत्त गमिष्यसि? **एषगच्छामि**—गच्छन्तमेव विद्धि; **एष गमिष्यामि, एष गन्तास्मि ।** **आशंसायां भूतवच्च** (III. 3. 132.)—वेत्येव; आशंसनमाशंसा अप्राप्तस्य प्रियार्थस्य प्राप्तुमिच्छा; तस्याश्च भविष्यत्कालो विषयः; तत्र भविष्यति काले आशंसायां गम्यमानायां धातोर्वा भूतवत्प्रत्यया भवन्ति, चकाराद्वर्तमानवच्च; उपाध्यायश्चेत् आगमत् आगतः आगच्छति आगमिष्यति, एते व्याकरणम् **अध्यगीष्महि अधीतवन्तः अधीमहे अध्येष्यामहे ।** सामान्यातिदेशे विशेषानतिदेशाल्लङ् लिटौ न । आशंसायामिति किम्? आगमिष्यति । **क्षिप्र-**

**वचने लृट्** (III. 3. 133.)—आशंसायामिति एव ; क्षिप्रवचने उपपदे आशंसायां गम्यमानायां लृट् प्रत्ययो भवति । भूतवच्चेत्यस्यायमपवादः ; उपाध्यायश्चेत् क्षिप्रमागमिष्यति क्षिप्रं व्याकरणम् **अध्येष्यामहे** । वचन-ग्रहणं पर्यायार्थम् ; शीघ्रमाशुत्वरितमध्येष्यामहे । नेतिवक्तव्ये लृड्ग्रहणं लुटोऽपि विषये यथा स्यात् ; **श्वः क्षिप्रमध्येष्यामहे** । आशंसावचने लिङ् (III. 3. 134.)—आशंसा येन उच्यते तदाशंसावचनम् ; तस्मिन्नुपपदे लिङ् प्रत्ययो भवति ; भूतवच्चेत्यस्यायमपवादः ; उपाध्यायश्चेदागच्छेत् **आशंसे युक्तः अधीयीय, अवकल्पये अधीयीय, आशंसे क्षिप्रम् अधी-यीय** । नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः (III. 3. 135.)—भूतानद्यतने भविष्यदनद्यतने च लङ्लुटौ प्रत्ययौ विहितौ, तयोः प्रतिषेधः क्रियते ; अनद्यतनवप्रत्ययविधिर्न भवति क्रियाप्रबन्धे सामीप्ये च गम्य-माने । क्रियाणां प्रबन्धः सातत्येनानुष्ठानम ; कालानां सामीप्यं तुल्य-जातीयेनाव्यवधानम् ; यावज्जीवं पुत्रः **अध्यापिपत् अध्यापयिष्यति** ; सामीप्ये खल्वपि—येयं पौर्णमास्यतिक्रान्ता एतस्यामुपाध्यायः अग्नीन् **आधित**, येयमामावास्यागामिनी तस्यामुपाध्यायः अग्नीन् **आधास्यते** । द्वौ प्रतिषेधौ यथा प्राप्तस्याभ्यनुज्ञापनाय । **भविष्यतिमर्यादावचनेऽव-रस्मिन्** (III. 3. 136.)—नानद्यतनवदिति वर्तमाने अक्रिया प्रबन्धा-र्थमसामीप्यार्थं वचनं ; भविष्यति काले मर्यादावचने सत्यवरस्मिन् प्रवि-भागे अनद्यतनवत्प्रत्ययविधिर्न भवति ; योऽयमध्वागन्तव्यः आपाटलि-पुत्रात् तस्य यदवरं कौशाम्ब्याः तत्र द्विरोदनं **भोक्ष्यामहे**, तत्र सक्तून् **पास्यामः** । भविष्यतीति किम्? योयमध्वा गत आपाठलीपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र युक्ता **अध्यैमहि**, तत्र द्विरोदनम् **अभुञ्ज्महि**, तत्र सक्तून् **अपिबाम** । मर्यादावचने किम्? योऽयमध्वा निरवधिको

गन्तव्यः तस्य यदवरं कौशाम्ब्याः तत्र द्विरोदनं भोक्तास्महे, तत्र सक्तून् पातास्मः । अवरस्मिन्निति किम् ? योऽयमध्वागन्तव्यः आपाटलिपुत्रात्तस्य यत् परं कौशाम्ब्याः तत्र द्विरोदनं भोक्तास्महे, तत्र सक्तून् पातास्मः ॥

॥ इति तिङ्विभक्त्यर्थाः ॥

---

॥ अथ कृदन्ताः प्रदर्श्यन्ते ॥

**धातोः** (III. 1. 91.)—धातोरित्यधिकारोयं वेदितव्यः ; यदित ऊर्ध्वमनुक्रमिष्यामः आतृतीयाध्यायपरिसमाप्तेः धातोरित्येव तद्वेदितव्यम् । **कृदतिङ्** (III. 1. 93.)—अस्मिन् धात्वधिकारे यस्तिङ्वर्जितः प्रत्ययः स कृत्संज्ञो भवति । **वासरूपोऽस्त्रियाम्** (III. 1. 94.)—अस्मिन् धात्वधिकारे असमानरूपोपवादप्रत्ययो वा बाधको भवति स्त्र्यधिकारविहितप्रत्ययं वर्जयित्वा । अथशतृप्रभृतय उच्यन्ते । भू सत्तायामिति धातोः वर्तमाने लट् इति लटि, **लटश्शतृशानचावप्रथमासमानाधिकरणे** (III. 2. 124.)—लटः स्थाने शतृशानचावादेशौ भवतः, अप्रथमान्तेन चेत्तस्य सामानाधिकरण्यम् ; **पचन्तं** देवदत्तं पश्य, **पचमानं** देवदत्तं पश्य । अप्रथमासमानाधिकरणे इति किम् ? देवदत्तः पचति । लडिति वर्तमाने पुनर्लड्ग्रहणं क्वचित्प्रथमासमानाधिकरणेऽपि भवति शतृशानजर्थम् । प्रथमा समानाधिकरणे लट्स्थाने तिबादयः आदेशा भवन्ति ; पक्षेशतृशानचावादेशौ भवतः । अप्रथमासमानाधिकरणे शतृशानचावेव भवतः ;

**सन्** ब्राह्मणः; **अस्ति** ब्राह्मणः; **विद्यते** ब्राह्मणः, **विद्यमानो** ब्राह्मणः । **माङ्याक्रोशे** (वा.)—इति **मा पचन्**, **मा पचमानः** । इदानीं शलादौ कृते, कर्तरिशप इति शपि, सार्वधातुकार्धधातुकयोः इति गुणः; अवादेशः; अतोगुणे इति पररूपत्वम् । भवत् इति जाते, कृदन्तत्वेन प्रातिपदिकसंज्ञायां स्वादयो भवन्तीति सर्वत्र स्वादीनामर्थः त्रिषुलिङ्गेषु प्रागेव सुबन्ते चकारान्तोत्तरं प्रदर्शितः । अपि च कृदन्ताः प्रायेण वाच्यलिङ्गाः । हल्ङ्याादि संयोगान्तलोपौ; **भवन्**, **भवन्तौ**, **भवन्तः** । स्त्रियां तु उगितश्च इति ङीप्; शप्श्यनोर्नित्यम् इति नुमागमः; **भवन्ती**, **भवन्त्यौ**, **भवन्त्यः** । नपुंसके स्वमोर्नपुंसकात् इति स्वमोर्लुक्; **भवत्**, **भवती**, **भवन्ति** । आत्मनेपदे शानचि शबादिकं पूर्ववत् । **आने मुक्** (VII. 2. 82.)—अकारान्तस्याङ्गस्य मुगागमो भवति आने परतः; **एधमानः** पुमान्, **एधमाना** स्त्री, **एधमानं** कुलम्, इत्यादि । तथा-पचन्, पचन्ती, पचत् पचमानः, पचमाना, पचमानम्—इत्यादीनि भवन्ति । अदादीनान्तु स्त्रियां ङीपि नित्यत्वादन्तरङ्गत्वान्नुमः पूर्वं शपो लुक्; **अदती** । अनकारान्तत्वात् अदादीनामात्मनेपदे न मुगागमः; **शयानः**, **शयाना**, **शयानम्**; **ब्रुवन्**, **ब्रुवती ब्रुवत्**; **ब्रुवाणः**, **ब्रुवाणा**, **ब्रुवाणम्** । ईदासः (VII. 2. 83.)—आस उपवेशने इत्यस्माद्धातोरुत्तरस्य आनस्य ईकारादेशो भवति । आदेः परस्य इति परादेराकारस्य ईकारः; **आसीनः**, **आसीना**, **आसीनम्** । या—धातोः शलन्तात् ङीपि आच्छीनद्योर्नुम् इति वा नुम्; **यान्ती**, **याती** । एवमेव भाती, भान्ती, इत्यादि; जक्षितेः, जक्षित्यादयष्षट् (VI. 1. 6.) इत्यभ्यस्तसंज्ञायां शलन्तान्नुमि प्राप्ते, **नाभ्यास्ताच्छतुः** (VII. 1. 78.)—अभ्यस्तादङ्गादुत्तरस्य शतुर्नुमागमो न भवति; **जक्षत्**, **जक्षती**, **जक्षत्** । जुहोत्यादीनां शलन्तानाम् उभे अभ्यस्तम् (VI. 1. 5.)

इत्यभ्यस्तत्वे–जुह्वत्, जुह्वती, जुह्वत् । **वा नपुंसकस्य** (VII. 1. 79.)—अभ्यस्तादङ्गादुत्तरो यः शता तदन्तस्य नपुंसकलिङ्गस्याङ्गस्य नुमागमो वा भवति सर्वनामस्थाने परतः : **जुह्वन्ति, जुह्वति** । एवमेव–उज्जिहानः, उज्जिहाना, उज्जिहानम् : दधत्, दधती, दधत् ; दधानः, दधाना, दधानम्–इत्यादि । दीव्यन्, दीव्यन्ती, दीव्यत् । शो–धातोः **ओतः श्यनि** (VII. 3. 71.)—ओकारान्तस्य धातोर्लोपो भवति । अलोन्त्यस्य इत्योकारलोपः : **श्यन्, श्यन्ती, श्यत्** । प्रसूयमानः, प्रसूयमाना, प्रसूयमानम् । नह्यन्, नह्यन्ती, नह्यत् : नह्यमानः इत्यादि । **शमामष्टानां दीर्घः श्यनि** (VII. 3. 74.)—शमादीनामुपधाया दीर्घः श्यनि परतः ।

> शमिस्तमिर्दमिश्चैव श्रमिर्भ्रमिःक्षमिस्तथा ।
> क्लमिर्माद्यतिरेवैते स्मृताःशम्यादयोऽष्टधा ॥

**शाम्यन्, शाम्यन्ती, शाम्यत्**; इत्यादि । **ष्ठिवुक्लम्वाचमां शिति** (VII. 3. 75.) इति दीर्घः : **सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्यः** (वा. VI. 1. 64.)—इति सत्वाभावः : **ष्ठीव्यन्, ष्ठीव्यन्ती, ष्ठीव्यत्**; इत्यादि । आचामन्, आचामन्ती, आचामत्; इत्यादि । **क्रमः परस्मैपदेषु** (VII. 3. 76.) इति दीर्घः : **क्रामन्, क्रामन्ती, क्रामत्**; इत्यादि । **इषुगमियमांछः** (VII. 3. 77.) इति छत्वम् : **इच्छन्, इच्छन्ती, इच्छत्; गच्छन्, गच्छन्ती, गच्छत्; यच्छन्, यच्छन्ती, यच्छत्** । **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौ-शीयसीदाः** (VII. 3. 78.) इति पादीनां पिबादयः ; **पिबन्, जिघ्रन्, धमन्, तिष्ठन्, मनन्, यच्छन्, पश्यन्, ऋच्छन्, धावन्,**

**शीयमानः, सीदन्**, इत्यादि । ज्ञाजनोर्जा (VII. 3. 79.) इति जादेशः; जनीप्रादुर्भावे–**जायमानः**; ज्ञा–**जानन्**; इत्यादि । सुन्वन्, सुन्वती, सुन्वत्; अश्नुवानः; चिन्वन् चिन्वानः । तुदन्, तुदन्ती, तुदती, तुदत्; म्रियमाणः; मुञ्चन्, मुञ्चन्ती, मुञ्चती, मुञ्चत्; मुञ्चमानः । रुन्धन्, रुन्धती, रुन्धत्: भुञ्जानः, भुञ्जन्; युञ्जानः युञ्जन् । तन्वन्, तन्वती, तन्वत्; मन्वानः । क्रीणन्, क्रीणती, क्रीणत्; गृह्णन्, गृह्णानः । प्वादीनां ह्रस्वः (VII. 3. 80.) इति ह्रस्वः; **पुनन्, पुनती, पुनत्** । एवं **लुनन्, स्तृणन्**, इत्यादि । आत्मनेपदे–**पुनाना, लुनाना, स्तृणाना**, इत्यादि । चोरयन्, चोरयती, चोरयन्ती, चोरयत् । भावे–**भूयमानं** देवदत्तेन; **एधमानं वर्धमानं** युवाभ्याम् इत्यादि । भावे सर्वत्र नपुंसकैकवचनान्तमेव । कर्मणि–**अभिभूयमानः** सूर्यः पयोमुचा, ज्योत्स्नया **पच्यमाना**, इत्यादि । सनि–**बुभूषन्; बुभूषन्ती; बुभूषत्; एदिधिषमाणः** । यङि–**बोभूयमानः, पापच्यमानः**, इत्यादि । यङ्लुकि–**बोभुवन्, बोभुवती; बोभुवत्**; इत्यादि । णिचि–**भावयन्; भावयन्ती; भावयत्**; इत्यादि ।

**सम्बोधनेच** (III. 2. 125.)—प्रथमासमानाधिकरणार्थोयमारम्भः; सम्बोधनेच विषयेलटश्शतृश्शानचावादेशौ भवतः; **हेपचन्, हेपचमान** । **लक्षणहेत्वोः क्रियायाः** (III. 2. 126.)—लक्ष्यते चिह्न्यते येनेति तत् लक्षणम्; जनको हेतुः; धात्वर्थविशेषणं चैतत्; लक्षणे हेतौ च वर्तमानाद्धातोः परस्य लटश्शातृशानचावादेशौ भवतः; तौ चेल्लक्षणहेतूक्रियाविषयौ भवतः । लक्षणे–**शयानाः भुञ्जते** यवनाः, **तिष्ठन्तोऽनुशासति** गणकाः । हेतौ–**अर्जयन् जीवति, अधीयानो वसति** । लक्षण हेत्वोरिति किम्? पचन्ति, पठन्ति । क्रियाया इति किम्? द्रव्यगुणयोर्माभूत्; यः कम्पते सोश्वत्थः, यदुत्प्लवते तल्लघु । **तौसत्** (III.

2. 127.)—तौ शतृ शानचौ सत्संज्ञौ भवतः । तौ—ग्रहणमुपाध्य सङ्ग्रहार्थम्; शतृशानज्मात्रस्य संज्ञा भवति; अत एव पूरणगुणेत्यादिना (II. 2. 11.) समासाभावः; **ब्राह्मणस्य कुर्वन्**, **कुर्वाणः**, इत्यादि । **पूङ्यजोश्शानन्** (III. 2. 128.)—पूङो यजेश्च धातोः शानन् प्रत्ययो भवति; **पवमानः**, **यजमानः** । प्रत्ययाश्शानन्नादयो न यदि लादेशाः, कथं सोमं पवमानो नडमाघ्नान इति षष्ठीप्रतिषेधः? तृन्निति प्रत्याहार निर्देशात् । कस्संनिविष्टानां प्रत्याहारः? लटश्शतृशानचावित्यतः प्रभृति आ तृनो नकारात् । **ताच्छील्य वयोवचनशक्तिषु चानश्** (III. 2. 129.)—ताच्छील्यं तत् स्वभावता; वयश्शरीरावस्था यौवनादिः; शक्तिस्सामर्थ्यम्; ताच्छील्यादिषु गम्यमानेषु धातोश्चानश् प्रत्ययो भवति । ताच्छील्ये तावत्—**कतीह मण्डयमानाः**? वयसि—**कतीह शिखण्डं वहमानाः**? शक्तौ—**कतीह निघ्नानाः**, **कतीह पचमानाः**? **इङ्धार्योश्शत्रकृच्छ्रिणि** (III. 2. 130.)—इङो धारयतेश्च शतृप्रत्ययो भवति अकृच्छ्रिणिकर्तरि; अकृच्छ्रः सुखसाध्यो यस्य कर्तुर्धात्वर्थः सोऽकृच्छ्री: **अधीयन् पारायणम्**, **धारयन्नुपनिषदम्** । अकृच्छ्रिणीति किम्? कृच्छ्रेणाधीते । **द्विषोऽमित्रे** (III. 2. 131.)—अमित्रे कर्तरि द्विषेर्धातोः शतृप्रत्ययो भवति; **द्विषन्** इत्यादि । अमित्र इति किम्? द्वेष्टि पतिं भार्या । **लृटस्सद्वा** (III. 3. 14.)—लृटस्सत्संज्ञौ शतृशानचावादेशौ वा भवतः । पूर्ववदिडादि; भविष्यन्, भविष्यन्ती, भविष्यत् । **लिटः कानज्वा** (III. 2. 106) इति वर्तमाने, **क्वसुश्च** (III. 2. 107.)—लिटः क्वसुरादेशो भवति । आर्धधातुकस्येड्वलादेः (VII. 2. 35.)—इति इटि प्राप्ते, श्र्युकः किति (VII. 2. 11.) इति निषेधः । वस्वेकाजाद्घसां (VII. 2. 67.)—कृतद्विर्वचनानामेकाचां धातूनामाकारान्ता-

नांच घसेश्च वसोरिडागमो भवति । धात्वभ्यासयोरेकादेशे कृते एत्वाभ्यासलोपयोश्च कृतयोर्धातवः कृतद्विर्वचना एकाचो भवन्ति । सिद्धे सत्यारम्भो नियमार्थेति नियमात् अन्येषां क्रादिनियमासिद्धेटामपि इडभावः; द्विर्वचनादि पूर्ववदेव; **बभूवान्, एधाञ्चकृवान्, पेचिवान्** । **विभाषा गम–हन–विद–विशाम्** (VII. 2. 68.)—गम् हन् विद् विश् इत्येतेषां धातूनां वसोर्विभाषा इडागमो भवति । गमहनेत्यादिना उपधालोपः; **जग्मिवान्** । पक्षे **मो नो धातोः** (VIII. 2. 64)—इति वर्तमाने, **म्वोश्च** (VIII. 2. 65.)—मकारवकारयोश्च परतः मकारान्तस्य धातोः नकारादेशः; **जगन्वान्** । हन हिंसागत्योः; अभ्यासाच्च इति कुत्वम्; **जघ्निवान्, जघन्वान्** । विद्लृ लाभे; **विविद्वान् विविदिवान्** । विश प्रवेशने; **विविशिवान्, विविश्वान्** । **दृशे श्चेति वक्तव्यम्** (वा. VII. 2. 68.)—इति **ददृशिवान्, ददृश्वान्** । **दाश्वान् साह्वान् मीढ्वांश्च** (VI. 1. 12.)—दाश्वान् साह्वान् मीढ्वान् इति एते शब्दाः छन्दसि भाषायाञ्चाविशेषेण निपात्यन्ते । **भाषायां सदवसश्रुवः** (III. 2. 108.)—सद् वस् श्रु इति एभ्यः परस्य लिटो भाषायां वा क्वसुरादेशो भवति । आदेशविधानादेव लिडपि तद्विषये अनुमीयते; **उपसेदिवान् कौत्सः पाणिनिम्** । नेन मुक्ते यथाप्राप्तं प्रत्यया भवन्ति; उपासदत् उपासीदत्, उपससाद । **अनूषिवान् कौत्सः पाणिनिम्**; पक्षे—अन्ववात्सीत्, अन्ववसत्, अनूवास । **उपशुश्रुवान् कौत्सः पाणिनिम्**; पक्षे—उपाश्रौषीत्, उपाशृणोत्, उपशुश्राव । लुङ्लङ्लिङ्विषयेऽपि परस्तादनुवृत्तेः क्वसुर्भवति । **उपेयिवाननाश्वाननूचानश्च** (III. 2. 109.)—एते शब्दा निपात्यन्ते । नचात्रोपसर्गस्तन्त्रम्; तेनोपसर्गान्तरपूर्वात् निरुपसर्गादपि भवत्येव; **समीयिवान्, ईयिवान्** । वावचनानुवृत्तेश्च पूर्व-

वल्भादयः; उपागात्, उपैत्, उपेयाय । एवमेव—नाशीत्, नाश्नात्, नाश; अन्ववोचत्, अन्वब्रवीत्, अनूवाच ॥

॥ इति शत्रादिप्रकरणम् ॥

---

॥ अथ कृत्यप्रकरणम् ॥

**कृत्याः प्राङ्ण्वुलः** (III. 1. 95.)—ण्वुल् तृचौ (III. 1. 133.) इति वक्ष्यति; प्रागेतस्माण्ण्वुल्शब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामः ते कृत्यसंज्ञा वेदितव्याः । **लः कर्मणि च भावे चाकर्मकेभ्यः** (III. 4. 69.) इत्यनुवर्तमाने, **तयोरेव कृत्यक्तखलर्थाः** (III. 4. 70.)—तयोर्भावकर्मणोरेव कृत्यसंज्ञकाः प्रत्ययाः क्तश्च खलर्थाश्च भवन्ति; एवकारः कर्तुरपकर्षणार्थः । **वासरूपोऽस्त्रियाम्** (III. 1. 94.)—अस्मिन् धात्वधिकारे असमानरूपापवादप्रत्ययः वा बाधको भवति स्त्र्यधिकारविहितप्रत्ययं वर्जयित्वा । **कृत्यल्युटो बहुलम्** (III. 3. 113.)—कृत्यसंज्ञाः प्रत्यया ल्युटश्च बहुलमर्थेषु भवन्ति । यत्र विहितास्ततोऽन्यत्रापि कारकान्तरे प्रत्यया भवन्ति इत्यर्थः । **तव्यत्तव्यानीयरः** (III. 1. 96.)—धातोरिति वर्तते; धातोः तव्यत् तव्य अनीयर् इत्येते प्रत्यया भवन्ति । तकाररेफौस्वरार्थौ । पूर्ववत् कृदन्तत्वान् प्रातिपदिकसंज्ञायां सुवादयः । कर्मणि—**कर्तव्यम्**; करणे—**स्नानीयं** चूर्णम्; सम्प्रदाने—**दानीयो** ब्राह्मणः । **अर्हे कृत्यतृचश्च** (III. 3. 169.)—अर्हतीत्यर्हः तद्योग्यः; अर्हे कर्तरिगम्यमाने वाच्ये वा धातोः कृत्यतृचः प्रत्यया भवन्ति । पूर्ववत्कृदन्तत्वान् प्रातिपदिकसंज्ञायां सुवादयः । भावे कृत्या नपुंसके भवन्ति—**भवितव्यम् भवनीयम्** पुंसा प्राज्ञेन, **एधितव्यम्** एध-

**नीयम्** शुभवद्भिः । कर्मणि–**कर्तव्यः करणीयो** वा कटो भवता, **भर्तव्या भरणीया** वा भूः । **वसेस्तव्यत् कर्तरि णिच्च** (वा. III. 1. 96.) इति वसतेः कर्तरि तव्यत्; **वास्तव्यो** जनः । **केलिमर उपसङ्ख्यानम्** (वा.); कर्मकर्तरि चायमिष्यते–पच्यन्ते स्वयमेव **पचेलिमा** माषाः, स्वयमेव भिद्यन्ते भिदेलिमा भूमयः, स्वयमेव छिद्यन्ते **छिदेलिमानि** काष्ठानि । **अचो यत्** (III. 1. 97.)—अजन्ताद्धातोर्यद्भवति । तकारो यतो नावः (VI. 1. 213.) इति विशेषणार्थः । तव्यादीनामपवादः; **चेयम्, जेयम्** । **ईद्यति** (VI. 4. 65.)—आदन्तस्याङ्गस्य ईदादेशो भवति यत्प्रत्यये परतः । गुणः; **देयम्, विधेयम्, हेयम्** । वासरूपविधानात् पक्षे तव्यदादयोऽपि; **चेतव्यम्, जेतव्यम्, दातव्यम्, हातव्यम्** । **धातोस्तन्निमित्तस्यैव** (VI. 1. 80.)—धातोर्य एच् तस्य तन्निमित्तस्यैव यादिप्रत्ययनिमित्तस्य यकारादौ प्रत्यये परतः वान्तादेशो भवति; **हव्यम्, श्रव्यम्**, इत्यादि । तन्निमित्तस्येति किम्? ओयते । **ऋहलोर्ण्यत्** (III. 1. 124.)—पञ्चम्यर्थे षष्ठी; ऋवर्णान्तात् धातोर्हलन्ताच्च ण्यत्प्रत्ययो भवति । वृद्धिः; **हार्यम्, विस्तार्यम्, निगार्यम्, ग्राह्यम्, काम्यम्, प्रवाद्यम्** । **चजोः कु घिण्ण्यतोः** (VII. 3. 52.)—चकारजकारयोः कवर्गादेशो भवति घिति ण्यति च प्रत्यये परतः; **पाक्यम्, वाक्यम्, योग्यम्** । **न क्वादेः** (VII. 3. 59.) कवर्गादेर्धातोश्चजयोः कुरादेशो न भवति णिति परतः **कूज्यम्, खर्ज्यम्, गर्ज्यम्** । अजिव्रज्योश्च (VII. 3. 60.)—अजि व्रजि इत्येतयोः कुरादेशो न भवति; **परिव्राज्यः** । अजेर्वीभावस्य विधानात् ण्यति नास्त्युदाहरणम् । **ण्य आवश्यके** (VII. 3. 65.)—आवश्यकेऽर्थे ण्ये परतः कुरादेशो न भवति । अवश्यं भावः आवश्यकः;

लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि ।
समो वा हिततनयोर्मांसस्य पचि युड्घञोः ॥

अवश्यशब्दस्य मकारस्य लोपो भवति : **अवश्यवाच्यम्, अवश्यरेच्यम्** । **यज-याच-रुच-प्रवच-र्चश्च** (VII. 3. 66.)—यज याच रुच प्रवच ऋच इत्येतेषां धातूनां ण्ये परतः कुर्नभवति ; **याज्यम्, याच्यम्, रोच्यम्, प्रवाच्यम्, अर्च्यम्** । **वचोऽशब्दसंज्ञायाम्** (VII. 3. 67.)—वचः अशब्दसंज्ञायां ण्ये परतः कुत्वं न भवति ; **वाच्यम्** आह । अशब्दसंज्ञायामिति किम् ? अवघुषितं **वाक्यम्** आह । **प्रयोज्यनियोज्यौ शक्यार्थे** (VII. 3. 68.)—प्रयोज्य-नियोज्य-शब्दौ शक्यार्थे निपात्येते ; शक्यः प्रयोक्तुं **प्रयोज्यः**, शक्यः नियोक्तुं **नियोज्यः** । **भोज्यं भक्ष्ये** (VII. 3. 69.)—भक्ष्ये अभिधेये भोज्यमिति निपात्यते ; **भोज्यः** ओदनः, **भोज्या** यवागूः । इहभक्ष्यमभ्यवहार्यमात्रम् । भक्ष्य इति किम् ? भोग्यः कम्बलः । **ओरावश्यके** (III. 1. 125.) —उवर्णाद्धातोर्ण्यत्प्रत्ययो भवति आवश्यकेऽर्थे ; **अवश्यभाव्यम्, अवश्यलाव्यम्, अवश्यपाव्यः** । **पोरदुपधात्** (III. 1. 98.)—पवर्गान्ताद्धातोरदुपधाद्यत्प्रत्ययो भवति ; ण्यतोऽपवादः ; **जप्यम्, शप्यम्, लभ्यम्, आरभ्यम्** इत्यादि । **शकिसहोश्च** (III. 1. 99.)—शक्ऌ षह इत्येतयोर्धात्वोर्यत्प्रत्ययो भवति ; **शक्यम्, सह्यम्** । **गदमदचरयमश्चानुपसर्गे** (III. 1. 100.)—एतेभ्यः उपसर्गाभावे यत्प्रत्ययो भवति, गद्यम्, मद्यम्, चर्यम्, यम्यम् । यमेः पूर्वेण (III. 1. 98.) सिद्धे अनुपसर्गनियमार्थं वचनम् । **चरेराङि चागुरौ** (वा. III. 1. 100.) ; **आचर्यः** देशः । अगुराविति किम् ? आचार्य उपनेता । अवद्यपण्यवर्या गर्ह्यपणित-

व्यानिरोधेषु (III. 1. 101.)—अवद्य पण्य वर्य इत्येते शब्दाः गर्ह्य-पणितव्यानिरोधेष्वर्थेषु यथासङ्ख्यं निपात्यन्ते । अवद्यमिति निपात्यते गर्ह्यं चेत्तद्भवति ; **अवद्यं** पापम् । **अनुद्यम्** अन्यत् पण्यम् इति निपात्यते पणितव्यं व्यवहर्तव्यं चेत्तत् भवति ; **पण्यः** कम्बलः । **पाण्यम्** अन्यत् । वर्या इति स्त्रियान्निपात्यते अनिरोधश्चेत्तद्भवति ; अनिरोधोऽप्रतिबन्धः ; शतेन **वर्या** । **वृत्या** अन्या । स्त्रीलिङ्गनिर्देशः किमर्थः ? **वार्याः** ऋत्विजः । वह्यं करणम् (III. 1. 102.)—वहेः करणे कारके यत्प्रत्ययो निपात्यते ; वहत्यनेनेति **वह्यं** शकटम् । करणमिति किम् ? वाह्यमन्यत् । **अर्यः स्वामिवैश्ययोः** (III. 1. 103.)—ऋ गतौ ; अस्मात् ण्यति प्रत्यये प्राप्ते स्वामिवैश्ययोर्यत्प्रत्ययोनिपात्यते ; **अर्यः स्वामी, अर्यः वैश्यः** । स्वामिवैश्ययोरिति किम् ? आर्यो ब्राह्मणः । उपसर्या काल्या प्रजने (III. 1. 104.)—उपसर्येति निपात्यते काल्या चेत् प्रजने भवति ; उपपूर्वात् सर्तेर्यत् प्रत्ययो भवति । प्राप्तकाला काल्या, प्रजनम् प्रथमगर्भग्रहणम् ; गर्भग्रहणे प्राप्तकाला **उपसर्या** **गौः** । काल्या प्रजन इति किम् ? उपसार्या शरदि मधुरा । **अजर्यं सङ्गतम्** (III. 1. 105.)—अजर्यमिति निपात्यते सङ्गतं चेद्भवति ; जीर्यतेर्धातोर्नञ्पूर्वात् सङ्गते सङ्गमने कर्तरि यत्प्रत्ययो भवतीति निपात्यते ; न जीर्यतीति **अजर्यम्** । सङ्गतमिति किम् ? अजरिता कम्बलः । **वदस्सुपि क्यप् च** (III. 1. 106.)—वदेर्धातोः सुप्युपपदे अनुपसर्गे क्यप् भवति, चकाराद्यच्च ; **ब्रह्मवद्यम्, ब्रह्मोद्यम्** । इह यजादित्वात्सम्प्रसारणम् ; उपपदमतिङ् (II. 2. 19.) इति समासः । अनुपसर्ग इत्येव ; प्रवाद्यम् । **भुवो भावे** (III. 1. 107.)—भवतेर्धातोः सुप्युपपदे अनुपसर्गे भावे क्यप् ; यत्तु नानुवर्तते ; **ब्रह्मभूयङ्गतः** । **हनस्त च** (III. 1. 108.)—हन्तेर्धातोः सुबन्तेऽनुपसर्गे

उपपदे भावे क्यप् । तकारश्चान्तादेशः ; स्त्रियाञ्चास्य प्रयोगः ; **ब्रह्महत्या**—ब्रह्महननमित्यर्थः । **एतिस्तुशास्वृदृजुषः क्यप्** (III. 1. 109.)—सुप्यनुपसर्गे भाव इति निवृत्तं सामान्येन प्रोक्तमिदम् ; एति स्तु शास् वृ दृ जुष् इत्येतेभ्यः क्यप् प्रत्ययो भवति । ह्रस्वस्य पिति कृति तुक् (VI. 1. 71.) इति तुक् ; **इत्यः**, **स्तुत्यः** । शास इदङ्हलोः (VI. 4. 34.) इति इकारादेशः, शासिवसिघसीनाञ्च (VIII. 3. 60) इति षत्वम्—**शिष्यः** ; **वृत्यः**, **आदृत्यः**, **जुष्यः** । वृग्रहणेन वृञोग्रहणमिष्यते न वृङः ; वृङि **वार्याः** ऋत्विजः । **शंसिदुहिगुहिभ्यो वेति वक्तव्यम्** (वा. III. 1. 109.) इति—**शस्यम्**, **शंस्यम्**, **दुह्यम् दोह्यम्**, **गुह्यम् गोह्यम्** । आङ्पूर्वादञ्जेस्संज्ञायामुपसङ्ख्यानम् ( वा. ) इति—**आज्यम्** ; घृतमित्यर्थः । कथम् **उपेयम्** ? एः एतद्रूपम् ; नेणः । **ऋदुपधाच्चाक्लृपिचृतेः** (III. 1. 110.)—ऋकारोपधाद्धातोः क्यप्प्रत्ययो भवति क्लृपिचृती वर्जयित्वा ; वृतु—**वृत्यम्**, वृधु—**वृध्यम्** ; स्पृश—**स्पृश्यम्** । अक्लृपिचृतेरिति किम् ? कल्प्यम्, चर्त्यम् । तपरकरणं किमर्थम् ? कॄत संशब्दने इत्यत्र ण्यदेव भवति ; कीर्त्यम् । पाणौ सृजेर्ण्यद्वक्तव्यः (वा.) इति—**पाणिसर्ग्या** रज्जुः । **समवपूर्वाच्च** (वा.) इति—**समवसर्ग्या** रज्जुः **संसर्ग्या अवसर्ग्या** वा रज्जुः । **ई च खनः** (III. 1. 111.)—खनेर्धातोरीकारादेशो भवति क्यप् च ; **खेयम्** । भृञोऽसंज्ञायाम् (III. 1. 112.)—भृञो धातोरसंज्ञायां क्यप्प्रत्ययो भवति ; **भृत्यः** कर्मकरः, भर्तव्य इत्यर्थः । असंज्ञायामिति किम् ? भार्यो नाम क्षत्रियः । **सम्पूर्वाद्विभाषा** (वा.) इति—**सम्भृत्याः** वा **सम्भार्याः** ।

संज्ञायां पुंसि दृष्टत्वान्नते भार्या प्रसिध्यति ।

स्त्रियाम्भावाधिकारोऽस्ति तेन **भार्या** प्रसिध्यति ॥

मृजेर्विभाषा (III. 1. 113.)—मृजेर्धातोर्विभाषा क्यप् प्रत्ययो भवति; परिमृज्यः । पक्षे—चजोः कुघिण्यतोः इति कुत्वम्; **परिमार्ग्यः** । **राजसूय–सूर्य–मृषोद्य–रुच्य–कुप्य–कृष्टपच्याव्यथ्याः** (III. 1. 114.) राजसूय सूर्य मृषोद्य रुच्य कुप्य कृष्टपच्य अव्यथ्य इत्येते क्यपि निपात्यन्ते । राज्ञा सोतव्यः राजा वा इह सूयते इति **राजसूयः** क्रतुः । सूसर्तिभ्यां क्यप् सर्तेरुत्वं सुवतेर्वा रुडागमः; सुवति सरतीति वा **सूर्यः** । मृषा पूर्वस्य वदेः पक्षे यति प्राप्ते नित्यं क्यप् निपात्यते **मृषोद्यम्** । रोचतेऽसौ **रुच्यः** । गुपेरादेः कत्वं च संज्ञायाम्; **कुप्यम्**; गोप्यमन्यत् । कृष्टे पच्यन्ते **कृष्टपच्याः**; कर्मकर्तरि निपातनम् । न व्यथत इति **अव्यथ्यः** । भिद्योध्यौ नदे (III. 1. 115.)—भिदेः उज्झेश्च कर्तरि क्यप् निपात्यते नदेऽभिधेये; उज्झेर्धातोर्धत्वञ्च; भिनत्तीति **भिद्यः**, उज्झत्युदकमिति **उद्ध्यः** । पुष्यसिध्यौ नक्षत्रे (III. 1. 116.)—पुषेस्सिधेश्चाधिकरणे क्यप् निपात्यते नक्षत्रे आभिधेये; पुष्यन्त्यस्मिन्नर्था इति **पुष्यः**, सिध्यन्त्यस्मिन्निति **सिध्यः** । नक्षत्र इति किम्? **पोषणम्**, सेधनम् । **विपूयविनीयजित्या मुञ्जकल्कहलिषु** (III. 1. 117.)—विपूय विनीय जित्य इत्येते निपात्यन्ते यथासंख्यं मुञ्जकल्कहलिषु वाच्येषु । विपूर्वात्पवतेर्नयतेश्च तथा जयतेश्च यति प्राप्ते कर्मणि क्यप् निपात्यते; **विपूयः** मुञ्जः, विपाव्यमन्यत्; **विनीयः** कल्कः, विनेयमन्यत्; **जित्यः** हलिः, जेयमन्यत् । **प्रत्यपिभ्यां ग्रहेश्छन्दसि** (III. 1. 118.) इति वर्तमाने, **पदास्वैरिबाह्यापक्ष्येषु च** (III. 1. 119.)—पदे अस्वैरिणि बाह्यायाम् आभिधेयायां पक्ष्ये चार्थे ग्रहेर्धातोः क्यप् भवति । **प्रगृह्यम्** पदं यस्य प्रगृह्यसंज्ञा विहिता; अस्वैरी परतन्त्रः, **गृह्यकाः** इमे गृहीतका इत्यर्थः; बाह्यायां **ग्रामगृह्या** सेना, ग्रामात् बहिर्भूतेत्यर्थः; पक्षे भवः

पक्ष्यः, वासुदेवः अर्जुनगृह्यः । **विभाषा कृवृषोः** (III. 1. 120.)—करोतेः वृषतेश्च विभाषा क्यप् । करोतेर्ण्यति प्राप्ते, वर्षतेरपि ऋदुपधत्वान्नित्यं क्यपि प्राप्ते विभाषा आरभ्यते; **कृत्यम् कार्यम्, वृष्यम् वर्ष्यम्** । **युग्यञ्च पत्त्रे** (III. 1. 121.)—युग्यमिति निपात्यते पत्त्रं चेत्तद्भवति । पतत्यनेनेति पत्त्रं वाहनम्ः युग्यः अश्वः योग्यम् अन्यत् । **अमावस्यदन्यतरस्याम्** (III. 1. 122.)—अमाशब्दस्सहार्थे वर्तते; तस्मिन्नुपपदे वसेर्धातोः काले अधिकरणे ण्यत्प्रत्ययो भवति: तत्र अन्यतरस्यां वृध्यभावो निपात्यते । सह वसतोऽस्मिन् कालेसूर्याचन्द्रमसाविति **अमावास्या, अमावस्या** वा । **आसु-युः-वपि-रपि-लपि-त्रपि चमश्च** (III. 1. 126.)—ण्यदनुवर्तते; आङ्पूर्वात्सुनोतेः, यु वपि, रपि, लपि, त्रपि, चम, इत्येतेभ्यश्च ण्यत्प्रत्ययः । यतोऽपवादः; **आसाव्यम्-याव्यम्, वाप्यम्, राप्यम्, लाप्यम्, त्राप्यम्, आचाम्यम्** । अनुक्त, समुच्चयार्थश्चकारः; **दाम्यम्** । **प्राणाय्योऽसम्मतौ** (III. 1. 128.)—अविद्यमाना सम्मतिरस्मिन्निल्यसम्मतिः; सम्मननं सम्मतिः; प्रणाय्य इति निपात्यते असम्मतावभिधेये; **प्रणाय्यः चोरः, प्रणेयमन्यत्** । सम्मतिरभिलाषोऽप्युच्यते; तदभावे निष्कामतया असम्मतिरन्तेवासी भवति । तस्मैनिष्कामाय मोक्षार्थं यतमानाय अन्तेवासिने प्रणाय्याय ब्रह्मप्रब्रूयादिति च युज्यते । एवं द्रष्टव्याः कृत्यप्रत्ययाबहुविधाः ॥

॥ **इति कृत्यप्रकरणम्** ॥

---

## ॥ अथ कृत्प्रकरणम् ॥

**कर्तरि कृत्** (III. 4. 67.) इति सर्वे कृतः कर्तारि भवन्ति । ण्वुल् तृचौ (III. 1. 133.)—ण्वुल् तृच् इति सर्वधातुभ्यः उभौ प्रत्ययौ भवतः । युवोरनाकौ (VII. 1. 1.)—यु वु इत्येतयोः उत्सृष्टविशेषणयोः अनुनासिकयणोः प्रत्यययोः ग्रहणम्; तयोः स्थाने अन अक इत्येतावादेशौ भवतः; भवतीति **भावकः** भविता, **कारकः** कर्ता, **नायकः** नेता । स्त्रियां यथाक्रमं टाप्ङीपौ । प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः (VII. 3. 44.)—प्रत्ययस्थात् कात्पूर्वस्य अकारस्य इकारादेशो भवति आपि परतः, स चेदाप् सुपः परो न भवति; **भाविका** भवित्री, **कारिका** कर्त्री, **नायिका** नेत्री । **गाङ्कुटादिभ्योऽञ्णिन्ङित्** (I. 2. 1.)—अतिदेशोऽयम्; गाङिति इङादेशो गृह्यते न गाङ् गताविति धातुः, ङकारस्यानन्यार्थत्वात्; कुटादयोपि कुटकौटिल्ये इति आरभ्य यावत् कुङ् शब्दे इति; एतेभ्यो गाङ्कुटादिभ्यः परे अञ्णितः प्रत्ययाः ङितो भवन्ति । ङिद्वद्भवन्तीत्यर्थः; **सङ्कुटिता** सङ्कोटकः, **उत्पुटिता** उत्पोटकः । **व्यचेः कुटादित्वमनसीति वक्तव्यम्** ( वा. ) इति–**विचिता** व्याचकः । अनसीति किम्? उरुव्यचाः । **विज इट्** (I. 2. 2.)—ओ विजी भयचलनयोरित्यस्मात् परः इडादिप्रत्ययः ङिद्वद्भवति; **उद्विजिता** उद्वेजकः । विभाषोर्णोः (I. 2. 3.)—ऊर्णुञ् आच्छादने इत्यस्मात्परः इडादिप्रत्ययः ङिद्वद्भवति; **प्रोर्णुविता** वा **प्रोर्णविता** प्रोर्णावकः । इडित्येव; प्रोर्णवनम् । हनस्तोऽचिण्णलोः (VII. 3. 32.)—हनः तादेशो भवति चिण्णल्वर्जिते ञिति णिति प्रत्यये परतः । होहन्तेरिति कुत्वम्; **घातकः** हन्ता । आतो युक् चिण्कृतोः (VII. 3. 33.) आकारान्तस्याङ्गस्य चिणि, ञिति

णिति च कृति, परतः युगागमो भवति : दायकः दाता, **विधायकः** विधाता, **अवसायकः** अवसाता, **मायकः** माता । **नोदात्तोपदेशस्य मान्तस्यानाचमेः** (VII. 3. 34.)—उदात्तोपदेशस्य मान्तस्याङ्गस्य आचमिवर्जितस्य चिणि, णिति ञिति च कृति, परतःयदुक्तं तन्न भवति । एते न किमुक्तं भवति ? अत उपधाया इति वृद्धिर्नभवतीत्यर्थः ; **शमकः** शमिता, **दमकः** दमिता । उदात्तोपदेशस्येति किम् ? रामकः । अनाचमेरिति किम् ? आचामकः । **जनिवध्योश्च** (VII. 3. 35.)—अनयोश्च चिणि, ञिति णिति कृति च परतो यदुक्तं तन्नभवति ; **जनकः** जनिता, **वधकः** वधिता । **रधिजभोरचि** (VII. 1. 61.)—रध जभ इत्येतयोर्धात्वोर्नुमागमो भवति अजादौ प्रत्यये परतः ; **रन्धकः** रधिता, **जम्भकः** जम्भिता । रधादिभ्यश्च (VII. 2. 45.) इति रधादिधातुभ्यः परस्य वलादेरार्धधातुकस्येडागमो वा भवति । **नेड्यलिटि रधेः** (VII. 1. 62.)—इडादावलिटिप्रत्यये परतः रधेर्नुमागमो न भवति **रधिता रद्धा** । **मस्जिनशोर्झलि** (VII. 1. 60.)—मस्ज् नश् इत्येतयोर्धात्वोः झलादिप्रत्यये परतो नुमागमो भवति । **मस्जेरन्त्यात्पूर्वं नुमिच्छन्ति अनुषङ्गसंयोगादिलोपार्थम्** (वा. I. 1. 47.) ; अनुषङ्गो नाम नुम् । स्कोस्संयोगाद्योरन्तेचेति सलोपः ; मज्जकः **मङ्क्ता**, नाशकः **नंष्टा** । **रभेरशब्लिटोः** (VII. 1. 63.)—शब्लिड्वर्जिते अजादौ प्रत्यये परतो रभेरङ्गस्य नुमागमो भवति : **आरम्भकः** आरब्धा । अशब्लिटोरिति किम् ? आरभते आरेभे । लभेश्च (VII. 1. 64.)—लभेरङ्गस्य शब्लिड्वर्जितेऽजादौ प्रत्यये परतो नुमागमो भवति ; **लम्भकः** लब्धा । तीषसहलुभरुषरिषः (VII. 2. 48.)—आर्धधातुके तादौ प्रत्यये परतः एभ्यो धातुभ्यः इडागमो वा भवति ; **एषिता एष्टा** एषकः, **सहिता सोढा**

साहकः, लोब्धा लोभिता लोभकः, **रोष्टा रोषिता** रोषकः, **रेष्टा रेषिता** रेषकः । **निरः कुषः** (VII. 2. 46.)—निरित्येवपूर्वस्य कुषेरुत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति ; **निष्कोषिता निष्कोष्टा** । एवमेव द्रोहिता द्रोढा द्रोग्धा, मोहिता मोढा मोग्धा, स्नोहिता स्नोढा स्नोग्धा, स्नेहिता स्नेढा स्नेग्धा, स्रष्टा, द्रष्टा, त्रप्ता तर्प्ता तर्पिता, द्रप्ता दर्प्ता दर्पिता, स्रप्ता सर्प्ता सर्पिता, सम्मार्ष्टा सम्मार्जिता, इत्यादि भवन्ति । सन्नन्तात् **बुभूषकः बुभूषिता** । यङन्तात् **बोभूयकः बोभूयिता** ; दीर्घोऽकितः (VII. 4. 83.) इति अभ्यासदीर्घः ; **पापचकः पापचिता** । णिचि अनिटि णिलोपः ; **भावकः भावयिता** । कृत्यल्युटो बहुळम् (III. 3. 113.) इति अन्येऽपि कृतः बहुळग्रहणात् यथाप्राप्तमाभिधेयं व्यभिचरन्ति; पादाभ्यां ह्रियते **पादहारकः**, गळे चोप्यते **गळेचोपकः** इत्यादि ॥

**नन्दिग्रहिपचादिभ्योल्युणिन्यचः** (III. 1. 134.)—आदिशब्दः प्रत्येकमभिसम्बध्यते ; त्रिभ्यो गणेभ्यस्त्रयः प्रत्यया भवन्ति यथासङ्ख्यम् ; नन्द्यादिभ्यो ल्युः, ग्रहादिभ्यो णिनि ; पचादिभ्यः अच् । नन्दि–वासि–मदि–दूषि–साधि–वर्धि–शोभि–रोचिभ्यो ण्यन्तेभ्यः संज्ञायां ल्युः ; **नन्दनः, वासनः, मदनः, दूषणः, साधनः, वर्धनः, शोभनः, रोचनः** । **सहितपिदमेः संज्ञायाम्** ( वा. ) इति—**सहनः, तपनः, दमनः** । एवमेव जल्पनः, रमणः, दर्पणः, सङ्क्रन्दनः, सङ्कर्षणः, मधुसूदनः, विभीषणः, लवणः, जनार्दनः, चित्तविनाशनः, कुलमर्दनः, शत्रुदमनः, इत्यादि । इति नन्द्यादिल्युः । गृह्णातीति **ग्राही ग्राहिणी** एवमेव उत्साही, उद्देशी, उद्भासी, स्थायी, मन्त्री, सम्मर्दी । इत्यादि **रक्षश्रुवसवपशां नौ**–इति **निरक्षी, निश्रावी, निवासी, निवापी**

निशायी । पाचिव्याहृसंव्याहृव्रजवदवसां प्रतिषेधार्थानाम्—इति अपाची, अव्याहारी, असंव्याहरी, अव्राजी, अवादी, अवासी । अचामचित्तवत्कर्तृकाणां, प्रतिषेधार्थानामित्येव—इति अकारी, अहारी, अशायी । विषयी—देशे, अभिभावी—भूते. अपरार्धी, उपरोधी, परिभावी इत्यादि । इति ग्रहादिर्णिनिः । पचतीति पचः एवमेव वचः, वपः, वदः, इत्यादि । नदट्—नदः, नदी । एवमेव भषः भषी, चरः चरी, तरः तरी, ग्राहः ग्राही, सूदः सूदी, देवः देवी, इत्यादि । जरः, क्षरः, क्षमः, मेषः, कोपः, मेधानर्त्तः, व्रणः, दर्शः, देशः, दम्भः, जारभरः, श्वपचः । पचादिराकृतिगणः ॥

इगुपधज्ञाप्रीकिरः कः (III. 1. 135.)—इगुपधेभ्यो धातुभ्यः जानातेः प्रीणातेः किरतेश्च कप्रत्ययो भवति; विदः, विलिखः, बुधः, कृशः, जानातीति ज्ञः, प्रीणातीति प्रियः, किरतीति किरः । आतश्चोपसर्गे (III. 1. 136.)—आकारान्तेभ्यो धातुभ्यः उपसर्गे उपपदे कप्रत्ययः णस्यापवादः; प्रस्थः, सुग्लः, सुम्लः । पाघ्राध्माधेट्दृशः शः (III. 1. 137.)—पा पाने इत्यादिभ्यो धातुभ्यः शप्रत्ययो भवति; उत्पिबः, उज्जिघ्रः, उद्धमः, उद्धयः, उत्पश्यः । उपसर्ग इति के चिन्नानुवर्तयन्ति—पश्यः । जिघ्रतेः संज्ञायां प्रतिषेधो वक्तव्यः ( वा. ) व्याघ्रः । अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च (III. 1. 138.)—अनुपसर्गेभ्यो लिम्पादिभ्य श्शप्रत्ययो भवति; लिम्पः, विन्दः, धारयः, पारयः, वेदयः, उदेजयः, चेतयः, सातयः, साहयः । अनुपसर्गादिति किम्? प्रलिपः । नौ लिम्पेरिति वक्तव्यम् ( वा. ) इति—निलिम्पाः, गवादिषु विन्देः संज्ञायाम् ( वा. )—इति गोविन्दः,

**अरविन्दम्** । **ददातिदधात्योर्विभाषा** (III. 1. 139.)—शप्रत्ययो वा भवति; णप्रत्ययापवादः । ततः शपि श्लौद्विर्वचनादि; **ददः, दधः**; पक्षे —**दायः, धायः** । अनुपसर्गादित्येव—प्रदः, प्रधः । **ज्वलितिकसन्तेभ्यो णः** (III. 1. 140)—इति शब्द आद्यर्थे; ज्वल दीप्तौ इत्यादिभ्यः कसगतावित्यन्तेभ्यः विभाषा ण प्रत्ययो भवति । अचोऽवपवादः; **ज्वालः ज्वलः, चालः चलः, कासः कसः** । अनुपसर्गादिति किम्? प्रज्वलः । तनोतेर्ण उपसंख्यानम् ( वा.) इति **अवतानः** । **श्याद्व्यधास्रुसंस्र्वतीण वसावहृलिहश्लिषश्वसश्च** (III. 1. 141.)—अनुपसर्गादिति निवृत्तं विभाषेति च; श्यैङ् गतौ इत्यस्मात्; आकारान्तेभ्यो धातुभ्यः व्यधँ आस्रु संस्रु अतीण् अवसा अवहृ लिह श्लिष श्वस इत्येतेभ्यो ण प्रत्ययो भवति । आतो युक्चिण्कृतोः (VII. 3. 33.)—इति युक्; **अवश्यायः, दायः, व्याधः, आस्रावः, संस्रावः, अत्यायः, अवसायः, अवहारः, लेहः, श्लेषः, श्वासः** । **दुन्योरनुपसर्गे** (III. 1. 142.) —दुनोतेर्नयतेश्चानुपसर्गाण्णप्रत्ययो भवति; दुनोतीति **दावः**, नयतीति **नायः** । अनुपसर्गात्किम्? प्रदवः प्रणयः । **विभाषा ग्रहः** (III. 1. 143.)—ग्रहेर्धातोर्विभाषा णप्रत्ययो भवति । अचोऽपवादः **ग्राहः ग्रहः** । व्यवस्थितविभाषा चेयम्; जलचरो ग्राह एव; ज्योतिर्ग्रह एव । **भवतेश्चेति वक्तव्यम्** ( वा. ); भवतीति **भावः** । **गेहे कः** (III. 1. 144.)—ग्रहेर्धातोः कप्रत्ययो भवति गेहे कर्तारि । गृहं वेश्म, तात्स्थ्यात् दाराश्च; गृह्णन्तीति **गृहाः** । **शिल्पिनि ष्वुन्** (III. 1. 145.)—धातोः ष्वुन् प्रत्ययः शिल्पिनि कर्तारि । नृति खनि रञ्जि इत्येतेभ्यः परिगणनं कर्तव्यम्; **नर्तकः खनकः रजकः**, षित्वात् **नर्तकी खनकी रजकी** । रञ्जेरनुनासिकलोपश्च । **गस्थकन्** (III.

1. 146)— गायतेः थकन् प्रत्ययो भवति शिल्पिनि कर्तरि ; **गाथकः** । **ण्युट् च** (III. 1. 147.)—चकारेण ग इत्यनुवर्तते ; ण्युट् च प्रत्ययो भवति शिल्पिनि कर्तरि ; **गायनः गायनी** । योगविभाग उत्तरार्थः । **हश्च व्रीहिकालयोः** (III. 1. 148.)—चकारेण ण्युडनुकृष्यते ; जहातेर्जिहीतेश्च धातोर्ण्युट् प्रत्ययो भवति व्रीहौ कालेच कर्तरि । **हायनाः** नामव्रीहयो भवन्ति जहत्युदकमिति कृत्वा कालेन **हायनः** संवत्सरः जहाति जिहीते वा भावानिति कृत्वा । **प्रुसृल्वस्समभिहारे वुन्** (III. 1. 149.)—प्रुसृ लू इत्येतेभ्यो धातुभ्यः समभिहारे वुन् प्रत्ययो भवति : **प्रवकः, सरकः लवकः** । समभिहारग्रहणेनात्र साधुकारित्वं लक्ष्यते ; साधुकारिणि वुन् विधानात् सकृदपि यः सुष्ठु करोति तत्र भवति ; बहुशोऽपि यो दुष्करोति तत्र न भवत्येव । **आशिषि च** (III. 1. 150.)—आशिषि गम्यमानायां धातुमात्राद्वुन्प्रत्ययः स्यात् ; जीवतात् भवान् **जीवकः**, नन्दतात् भवान् **नन्दकः** । आशीः प्रार्थनाविशेषः ; अमुष्याः क्रियायाः कर्ता भवेदित्येवमाशास्यते ॥

**कर्मण्यण्** (III. 2. 1.)—त्रिविधं कर्म निर्वर्त्यं च विकार्यं च प्राप्यं चेति ; सर्वत्र कर्मण्युपपदे धातोः अण्प्रत्ययो भवति । उपपदमतिङिति समासः ; निर्वर्त्ये तावत्—कुम्भङ्करोतीति **कुम्भकारः** ; स्त्रियां टिड्ढाणञित्यादिना ङीप्—**कुम्भकारी** । विकार्ये—**काण्डलावः** । प्राप्ये **वेदाध्यायः** ग्रामं गच्छति, आदित्यं पश्यति, हिमवन्तं शृणोति, इत्यत्र न भवति अनभिधानात् । **शीलिकामिभक्ष्याचरिभ्यो णः** ( वा. ) इति—मांसं शीलयतीति **मांसशीलः** ; स्त्रियां टाप्, **मांसशीला** ; **मांसकामः, मांसकामा** ; **मांसभक्षः, मांसभक्षा** ; **कल्याणाचारः, कल्याणाचारा** ।

**ईक्षिक्षमिभ्यां चेति वक्तव्यम्** ( वा. ) इति—**सुखप्रतीक्षः सुखप्रतीक्षा, बहुक्षमः बहुक्षमा** । **ह्वावामश्च** (III. 2. 2.)—ह्वे वेञ् माङ् इत्येतेभ्यः कर्मण्युपपदे अण् भवति । कस्यापवादः; **स्वर्गह्वायः, तन्तुवायः धान्यमायः** । **आतोऽनुपसर्गे कः** (III. 2. 3.)—अकारान्तेभ्यो धातुभ्यः अनुपसर्गे कर्मण्युपपदे कप्रत्ययो भवति । अणोपवादः गां ददातीति **गोदः**, कम्बलं दधातीति **कम्बलधः, अङ्गुलित्रम्** । अनुपसर्गे इति किम्? गोसन्दायः । **सुपि स्थः** (III. 2. 4.)—सुबन्ते उपपदे तिष्ठतेर्धातोः कप्रत्ययो भवति; **समस्थः, विषमस्थः** । **अम्बाम्बगो-भूमि सव्याप–द्वित्रि–कु–शेकु–शङ्कङ्गु–मञ्जि–पुञ्जि–परमे–बर्हिर्दिव्यग्निभ्यः स्थः** (VIII. 3. 97.)—अम्ब, आम्ब, गो, भूमि, सव्य, अप, द्वि, त्रि, कु, शेकु, शङ्कु, अङ्गु, मञ्जि, पुञ्जि, परमे बर्हिस्, दिवि, अग्नि, एतेभ्यः उत्तरस्य स्थस्य सकारस्य मूर्धन्यादेशो भवति; **अम्बष्ठः, आम्बष्ठः, गोष्ठः, भूमिष्ठः, सव्येष्ठः, अपष्ठः, द्विष्ठः, त्रिष्ठः, कुष्ठः, शेकुष्ठः, शङ्कुष्ठः, अङ्गुष्ठः, मञ्जिष्ठः, पुञ्जिष्ठः, परमेष्ठी, बर्हिष्ठः, दिविष्ठः, अग्निष्ठः** । सुपि स्थः इत्यत्र योगविभागः कर्तव्यः **सुपि** इति । सुप्याकारान्तेभ्यो धातुभ्योऽपि कः; द्वाभ्यांपिबतीति **द्विपः** । ततः **स्थः** इति विभागः । स्था धातोरपि सुपि कप्रत्ययो भवति । किमर्थमिदम्? कर्तरि पूर्वयोगः, अनेन भावे यथा स्यात्; आखूनां उत्थानम् **आखूत्थः, शलभोत्थः** ।

इत उत्तरं कर्मणि सुपि इति द्वयमनुवर्तते; तत्र सकर्मकेषु धातुषु कर्मणीत्युपतिष्ठते, अन्यत्र सुपीति । **तुन्दशोकयोः परिमृजापनुदोः** (III. 2. 5.)— तुन्दशोकयोः कर्मणोरुपपदयोः परिमृजापनुदोर्धात्वोः

कप्रत्ययो भवति ; तुन्दपरिमृजः आस्ते, शोकापनुदः पुत्रो जातः । **आलस्य सुखाहरणयोरिति वक्तव्यम्** ( वा. ) इति—अलसस्तुन्दपरिमृज उच्यते अन्ये तुन्दपरिमार्जाः, सुखस्याहर्ता शोकापुनुदः अन्यः शोकापनोदः । **कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानम्** ( वा. ) इति मूलानि विभुजतीति मूलविभुजः रथः, नखमुचानि धनूंषि, काकगुहाः तिलाः, कौ मोदते कुमुदम् । **प्रेदाज्ञः** (III. 2. 6.)—सोपसर्गार्थोऽयमारम्भः ; ददातेः जानातेश्च धातोः प्रेणोपसृष्टात् कर्मण्युपपदे कप्रत्ययो भवति । अणोऽपवादः ; सर्वप्रदः प्रतिप्रज्ञः । प्र इति किम् ? गो सन्दायः । **समि ख्यः** (III. 2. 7.)—सोपसर्गार्थोऽयमारम्भः ; सम्पूर्वात् ख्यातेर्धातोः कर्मण्युपपदे कप्रत्ययो भवति : गोसंङ्ख्यः । **गापोष्टक्** (III. 2. 8.)—कर्मण्यनुपसर्गे इत्यनुवर्तते ; गायतेः पिबतेश्च धातोः कर्मण्युपपदे । अनुपसर्गे टक्प्रत्ययो भवति । कस्यापवादः : साम गायतीति सामगः ; स्त्रियां सामगी । **सुराशीध्वोरेवोपपदयोः पिबतेरिष्यते** ( वा. ) इति—सुरापः शीधुपः, सुरापी शीधुपी । सुराशीध्वोरिति किम् ? क्षीरं पिबतीति क्षीरपा ब्राह्मणी । पिबतेरिति किम् ? सुरां पातीति सुरापा वृषली । अनुपसर्गे इत्येव ; सामसङ्गायः । **बहुलं छन्दसीति वक्तव्यम्** ( वा. ) इति—या ब्राह्मणी **सुरापी** भवति नैनांदेवाः पति लोकं नयन्ति, या ब्राह्मणी **सुरापा** भवति । **हरतेरनुद्यमनेऽच्** (III. 2. 9.)—हरतेरनुद्यमनेऽर्थे वर्तमानात् कर्मण्युपपदे अच्प्रत्ययो भवति । अणोपवादः ; उद्यमनमुत्क्षेपणम् ; अंशहरः, रिक्थहरः । अनुद्यमने इति किम् ? भार हारः । **अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसंख्यानम्** ( वा. ) इति—शक्तिग्रहः, लाङ्गलग्रहः, अङ्कुशग्रहः, यष्टिग्रहः, तोमरग्रहः, घटग्रहः,

**घटीग्रहः**, **धनुर्ग्रहः** । **सूत्रे च धार्यर्थे** ( वा. ) इति—**सूत्रग्रहः** । सूत्रं धारयतीत्यर्थः ; सूत्रग्राह एवान्यः । **वयसि च** (III. 2. 10)—वयसि गम्यमाने हरतेः कर्मण्युपपदे अच् प्रत्ययो भवति । अणोऽपवादः : उद्यमनार्थ आरम्भः । कालकृतशरीरावस्थायौवनादिर्वय इत्युच्यते ; यदुद्यमनं क्रियमाणं सम्भाव्यमानं वावयोऽवगमयति तत्रायं प्रत्ययः ; **अस्थिहरः** श्वा, **कवचहरः** क्षत्रियकुमारः । **आङि ताच्छील्ये** (III. 2. 11.)—आङ्पूर्वाद्धरतेर्धातोः कर्मण्युपपदे अच्प्रत्ययो भवति ताच्छील्ये गम्यमाने । ताच्छील्यं तत्स्वभावता ; **पुष्पाहरः**, **फलाहरः** । पुष्पहारणे फलाहरणे वा फलनिरपेक्षा स्वाभाविकी प्रवृत्तिरस्येत्यर्थः । ताच्छील्य इति किम् ? भारमाहरति भाराहारः । **अर्हः** (III. 2. 12.)—अर्हतेर्धातोः कर्मण्युपपदे अच् । अणोऽपवादः ; स्त्रियां विशेषः ; **पूजार्हा** ब्राह्मणी । **स्तम्बकर्णयो रमिजपोः** (III. 2. 13.)—स्तम्ब कर्ण इत्येतयोः सुबन्तयोरुपपदयोः यथासंख्यं रमिजपोर्धात्वोरच् भवति । रमेरकर्मकत्वाज्जपेश्च शब्दकर्मकत्वाच्च कर्म न सम्भवतीति सुपीत्येतदिह सम्बध्यते । **हस्तिसूचकयोरिति वक्तव्यम्** ( वा. ) इति—स्तम्बे रमते इति **स्तम्बेरमः** हस्ती, कर्णे जपतीति **कर्णेजपः** सूचकः । हस्तिसूचकयोरिति किम् ? स्तम्बे रन्ता कर्णे जपिता च मशकः । **शमिधातोस्संज्ञायाम्** (III. 2. 14)—शम्युपपदे धातुमात्रात् संज्ञाविषये अच्प्रत्ययो भवति ; **शङ्करः**, **शम्भवः** । **अधिकरणे शेतेः** (III. 2. 15.) सुपीति सम्बध्यते ; शेतेर्धातोरधिकरणे सुबन्ते उपपदे अच् प्रत्ययो भवति ; खे शेते **खशयः** । **पार्श्वादिषूपसंख्यानम्** ( वा. ) इति पार्श्वाभ्यां शेते **पार्श्वशयः**, पृष्ठेन शेते **पृष्ठशयः** । **दिग्धसहपूर्वाच्च** ( वा. )

इति–दिग्धेन सह शेते दिग्धसहशयः । उत्तानादिषु कर्तृषु ( वा. ) इति–उत्तानः शेते उत्तानशयः, अवमूर्धा शेते अवमूर्धशयः ।

**चरेष्टः** (III. 2. 16.)—अधिकरणे इति वर्तते ; चरेर्धातोरधिकरणे उपपदे टप्रत्ययो भवति ; कुरुषु चरतीति **कुरुचरः** । टित्वान्ङीप् ; **कुरुचरी** । प्रत्ययान्तरकरणं ङीबर्थम् । **भिक्षासेनादायेषु च** (III. 2. 17.)—अनधिकरणार्थमारम्भः ; भिक्षादिषूपपदेषु चरतेष्टप्रत्ययः ; **भिक्षाचरः, सेनाचरः, आदायचरः** । **पुरोऽग्रतोऽग्रेषु सर्तेः** (III. 2. 18.)—पुरस् अग्रतस् अग्रे इत्येतेषु उपपदेषु सर्तेर्धातोः टप्रत्ययो भवति ; पुरतस्सरतीति **पुरस्सरः**, अग्रतः सरतीति **अग्रतस्सरः**, अग्रे सरतीति **अग्रेसरः** । **पूर्वे कर्तरि** (III. 2. 19.)—पूर्वशब्दे कर्तृवाचिन्युपपदे सर्तेष्टप्रत्ययो भवति ; पूर्वः सरतीति **पूर्वसरः** । कर्तरीति किम् ? पूर्वं देशं सरतीति पूर्वसारः **कृञोहेतुताच्छील्यानुलोम्येषु** (III. 2. 20.)—कर्मणीति वर्तते ; करोतेष्टप्रत्ययो भवति हेतौ ताच्छील्ये आनुलोम्ये च गम्यमाने । हेतुरैकान्तिकं कारणम् ; ताच्छील्यं तत्स्वभावता ; आनुलोम्यमनुकूलता । हेतौ तावत्–**यशस्करी** विद्या, **कुलकरं** धनम् । ताच्छील्ये **अर्थकरः** प्रयत्नः । आनुलोम्ये **वचनकरः** शिष्यः । एतेष्विति किम् ? कुम्भकारः नगरकारः । **दिवा–विभा–निशा–प्रभा–भास्करान्तानन्तादि–बहु–नान्दी–किं–लिपि–लिबि–बलि–भक्ति–कर्तृ–चित्र–क्षेत्र–संख्या–जङ्घा–बाह्वहर्यत्तद्धनुररुष्षु** (III. 2. 21.)—कर्मणि सुपि च द्वयमत्रानुवर्तते, तत्र यथायोगं सम्बन्धः ; दिवादिषूपपदेषु करोतेष्टप्रत्ययो भवति । अहेत्वाद्यर्थोऽयमारम्भः ; तत्र दिवाशब्दोऽधिकरणवचनः ; सुपीत्येतस्य विशेषणम् ; दिवाकरोति प्राणिनश्चेष्टायुक्तानिति

**दिवाकरः** ; विभांकरोतीति **विभाकरः** ; **निशाकरः प्रभाकरः** ; **भास्करः** इत्यत्र सकारस्य निपातनात् विसर्जनीयजिह्वामूलीयौ न भवतः ; **कारकरः अन्तकरः**, **अनन्तकरः**, **आदिकरः**, **बहुकरः**, **नान्दीकरः**, **किङ्करः**, **लिपिकरः**, **लिबिकरः**, **बलिकरः**, **भक्तिकरः**, **कर्तृकरः**, **चित्रकरः**, **क्षेत्रकरः**, संख्या–**एककरः**, **द्विकरः**, **त्रिकरः**–**जङ्घाकरः**, **बाहुकरः**, **अहस्करः**, **यत्करः तत्करः**, **धनुष्करः**, **अरुष्करः** । **कर्मणि भृतौ** (III. 2. 22.)—कर्मणीति स्वरूपग्रहणम् ; कर्मशब्दे कर्मवाचिन्युपपदे करोते ष्टप्रत्ययो भवति भृतौ गम्यमानायाम् । भृतिः वेतनम्, कर्म निर्वेशः ; कर्म करोतीति **कर्मकरः** । भृताविति किम् ? कर्मकारः । **न शब्द–श्लोक–कलह–गाथा–वैर–चाटु–सूत्र–मन्त्र–पदेषु** (III. 2. 23.)—शब्दादिषूपपदेषु करोतेष्टप्रत्ययो भवति । हेत्वादिषु प्राप्तः प्रतिषिध्यते ; **शब्दकारः**, **श्लोककारः**, **कलहकारः**, **गाथाकारः**, **वैरकारः**, **चाटुकारः**, **सूत्रकारः**, **मन्त्रकारः**, **पदकारः** । **स्तम्बशकृतोरिन्** (III. 2. 24.)—स्तम्ब शकृत् इत्येतयोरुपपदयोः करोतेरिन् प्रत्ययो भवति । **व्रीहिवत्सयोरिति वक्तव्यम्** ( वा. ) इति–**स्तम्बकरिः** व्रीहिः, **शकृत्करिः** वत्सः । **हरतेर्दृतिनाथयोः पशौ** (III. 2. 25.)—हरतेः दृतिनाथयोः उपपदयोः इन् प्रत्ययो भवति ; **दृतिहरिः** पशुः **नाथहरिः** पशुः । पशाविति किम् ? दृतिहारः नाथहारः । **फलेग्रहिरात्मम्भरिश्च** (III. 2. 26.)—एतौ शब्दौ निपात्येते । उपपदस्यैकारान्तत्वं इन् प्रत्ययश्च ग्रहेः निपात्यते–फलानि गृह्णातीति **फलेग्रहिः** वृक्षः ; आत्मशब्दस्य उपपदस्य मुमागमः इन्प्रत्ययश्च भृञो निपात्यते–आत्मानं बिभर्तीति **आत्मम्भरिः** । अनुक्तसमुच्चयार्थश्चकारः ; **कुक्षिम्भरिः**, **उदरम्भरिः** ।

**एजेः खश्** (III. 2. 28)—एजृ कम्पने इत्यस्माण्ण्यन्तात् कर्मण्युपपदे खश्प्रत्ययो भवति । अत्र खो मुमर्थः, शस्सार्वधातुकसंज्ञार्थः । **खित्यनव्ययस्य** (VI. 3. 66.) इति वर्तमाने, **अरुर्द्विषदजन्तस्य मुम्** (VI. 3. 67.)—अरुस् द्विषत् इत्येतयोः अजन्तानाञ्च खिदन्ते उत्तरपदे मुमागमः, नतु अव्ययस्य : **अङ्गमेजयः**, **जनमेजयः** । **खश्प्रकरणे वात–शुनी–तिल शर्धेष्वज–धेट्–तुद्–जहादिभ्य उपसङ्ख्यानम्** (वा. III. 2. 28.) इति—**वातमजाः** मृगाः । **खित्यनव्ययस्य** (VI. 3. 66.) —खिदन्ते उत्तरपदे अनव्ययस्य ह्रस्वः । **शुनिन्धयः** **तिलन्तुदः**, **शर्धंजहाः** माषाः । **नासिकास्तनयोर्ध्माधेटोः** (III. 2. 29.)—नासिकास्तनशब्दयोः उपपदयोः ध्माधेटोर्धात्वोः खश्प्रत्ययो भवति । यथासङ्ख्यमत्र नेष्यते ; स्तने धेटः—**स्तनन्धयः** ; नासिकायान्तु ध्मश्च धेटश्च—**नासिकन्धमः**, **नासिकन्धयः** । **नाडीमुष्ट्योश्च** (III. 2. 30.)—एतयोः कर्मणोरुपपदयोः ध्माधेटोः खश्प्रत्ययो भवति : **नाडिन्धमः** **नाडिन्धयः**, **मुष्टिन्धमः** **मुष्टिन्धयः** । अनुक्तसमुच्चयार्थश्चः **खारिन्धयः** **खारिन्धमः**, **वटिन्धयः** **वटिन्धमः**, **वातन्धयः** **वातन्धमः** । **उदि कूले रुजिवहोः** (III. 2. 31.)—रुजो भङ्गे, वह प्रापणे, आभ्यामुत्पूर्वाभ्यां कूले कर्मण्युपपदे खश् : **कूलमुद्रुजः**, **कूलमुद्वहः** । **वहाभ्रे लिहः** (III. 2. 32.)—वह अभ्र इत्येतयोः कर्मणोरुपपदयोः लिहेर्धातोः खश् : वहं लेढीति **वहंलिहः** गौः, **अभ्रंलिहः** वायुः । **परिमाणे पचः** (III. 2. 33.)—परिमाणे कर्मण्युपपदे पचेः खश् ; प्रस्थं पचतीति **प्रस्थंपचा** स्थाली । **मितनखे च** (III. 2. 34.)—मित नख इत्येतयोरुपपदयोः कर्मणोः पचेः खश् । अपरिमाणार्थ आरम्भः ; मितं पचतीति **मितम्पचा** ब्राह्मणी ; **नखम्पचा** यवागूः । **विध्वरुषोस्तुदः** (III. 2. 35.)—

विधु अरुस् इत्येतयोरुपपदयोः तुदेः खश्; **विधुन्तुदः**, **अरुन्तुदः** । **असूर्यललाटयोर्दृशितपोः** (III. 2. 36.)—असूर्यललाटयोः कर्मणोरुपपदयोः दृशितपोर्धात्वोः खश्; **असूर्यम्पश्याः** राजदाराः, **ललाटन्तपः** आदित्यः । उग्रंपश्येरम्मदपाणिन्धमाश्च (III. 2. 37.)—एते निपात्यन्ते; उग्रं पश्यतीति **उग्रंपश्यः**, इरया माद्यतीति **इरम्मदः**, पाणयो ध्मायन्ते येष्विति **पाणिन्धमाः** पन्थानः । **प्रियवशे वदः खच्** (III. 2. 38.)—प्रिय वश इत्येतयोः कर्मणोरुपपदयोः वदेर्धातोः खच्; **प्रियंवदः**, **वशंवदः** । **खच्प्रकरणे गमेस्सुप्युपसंख्यानम्** ( वा. ) इति—**मितंगमः** हस्ती । **विहायसो विह च** ( वा. ) इति—विहायसा गच्छतीति **विहङ्गमः** । **खच्च डिद्वा वाच्यः** ( वा. ) इति—**विहङ्गः** । **डे च विहायसो विहादेशो वक्तव्यः** ( वा. ) इति—**विहगः** । **द्विषत्परयोस्तापेः** (III. 2. 39.)—द्विषत् पर इत्येतयोः कर्मणोरुपपदयोः तापेः खच् । तप दाहे चुरादिः, तप सन्तापे भ्वादिः, उभयोरपि ग्रहणम्; द्विषन्तं तापयति **द्विषन्तपः**, **परन्तपः** । **अत्र खचि ह्रस्वः** (VI. 4. 94.)—खच्परे णौ परतः अङ्गस्य उपधायाः ह्रस्वो भवति—इति ह्रस्वः । **वाचि यमो व्रते** (III. 2. 40.)—वाक् शब्दे कर्मण्युपपदे यमेर्धातोः खच् व्रते गम्यमाने । व्रतमिति शास्त्रतो नियमः; **वाचंयमः** आस्ते । व्रते इति किम्? वाग्यामः । **पूस्सर्वयोर्दारिसहोः** (III. 2. 41.)—पूर् सर्व इत्येतयोरुपपदयोः यथासंङ्ख्यं दारि सह इत्येतयोर्धात्वोः खच्; पुरं दारयतीति **पुरन्दरः**, **सर्वंसहः** राजा । **भगे च दारेरिति वक्तव्यम्** (वा.) इति—भगं दारयतीति **भगन्दरः** व्याधिः । **सर्वकूलाभ्रकरीषेषु कषः** (III. 2. 42.)—सर्व कूल अभ्र करीष इत्येतेषूपपदेषु कषतेर्धातोः खच् भवति; **सर्वंकषः** खलः, **कूलंकषा** नदी,

अभ्रंकषः वायुः, करीषंकषा वात्या । मेघर्तिभयेषु कृञः (III. 2. 43.) मेघ ऋति भय इत्येतेषूपपदेषु करोतेर्धातोः खच् भवति; मेघङ्करः, ऋतिङ्करः, भयङ्करः । क्षेमप्रियमद्रेऽण् च (III. 2. 44.)—क्षेमप्रियमद्रेषूपपदेषु करोतेरण् प्रत्ययः, चकारात् खच्; क्षेमकारः क्षेमङ्करः, प्रियकारः प्रियङ्करः, मद्रकारः मद्रङ्करः । आशिते भुवः करणभावयोः (III. 2. 45.)—आशितशब्दे सुबन्ते उपपदे भवतेर्धातोः करणे भावे चार्थे खच्प्रत्ययो भवति । करणे—आशितो भवत्यनेनेति आशितंभवः ओदनः; भावे—आशितस्य भवनं आशितंभवं वर्तते । संज्ञायां भृ-तॄ-वृ-जि-धारि-सहि-तपि-दमः (III. 2. 46.)—कर्मणि सुपीति च प्रकृतम्; संज्ञावशाद्यथाप्राप्तं सम्बध्यते; एभ्यो धातुभ्यस्संज्ञायां विषये खच्; विश्वंभरा भूः, रथन्तरं साम, पतिंवरा कन्या, शत्रुञ्जयः हस्ती, युगन्धरः पर्वतः, शत्रुंसहः, शत्रुन्तपः, अरिन्दमः । संज्ञायामिति किम्? कुटुम्बं बिभर्तीति कुटुम्बभारः । गमश्च (III. 2. 47.)—गमेर्धातोस्सुबन्त उपपदे संज्ञायां खच्; सुतङ्गमः इति नाम यस्य तस्य सौतङ्गमिः पुत्रः ।

अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः (III. 2. 48.)—संज्ञायामिति निवृत्तम्; एषूपपदेषु गमेर्डः; अन्तगः, अत्यन्तगः, अध्वगः, दूरगः, पारगः, सर्वगः, अनन्तगः । डप्रकरणे सर्वत्र पन्नयोरुपसङ्ख्यानम् (वा.) इति—सर्वत्रगः, पन्नगः । उरसो लोपश्च (वा.) इति—उरसा गच्छतीति उरगः । सुदुरोरधिकरणे (वा.) इति—सुखेन गच्छत्यस्मिन्निति सुगः, दुर्गः । निसो देशे (वा.) इति—निर्गः देशः । अपर आह डप्रकरणे अन्यत्रापि दृश्यते इति (वा.)—अगारगः, तल्पगः । आशिषि

**हनः** (III. 2. 49.)—आशिषि गम्यमानायां हन्तेः कर्मण्युपपदे डः; तिमिं वध्यात् **तिमिहः**, पापं वध्यात् **पापहः** । **अपेक्लेशतमसोः** (III. 2. 50.)—अपपूर्वाद्धन्तेः क्लेशतमसोरुपपदयोः डः; **क्लेशापहः** पुत्रः, **तमोऽपहः** सूर्यः । अनाशीरर्थोऽयमारंभः । **कुमारशीर्षयोर्णिनिः** (III. 2. 51.)—कुमारशीर्षयोरुपपदयोर्हन्तेर्णिनिप्रत्ययो भवति; **कुमारघाती, शीर्षघाती** । **लक्षणे जायापत्योष्टक्** (III. 2. 52.)—हन्तेर्जायापत्योरुपपदयोः लक्षणवति कर्तरि टक्प्रत्ययो भवति; तिलकालकवान् **जायाघ्नः**, अग्रुभरेखावती **पतिघ्नी** । **अमनुष्यकर्तृके च** (III. 2. 53)—अमनुष्य कर्तृकेऽर्थे वर्तमानाद्धन्तेः टक् प्रत्ययो भवति; **जायाघ्नः** तिलकालकः, **पतिघ्नी** पाणिरेखा, **श्लेष्मघ्नं** मधु । अमनुष्यकर्तृके इति किम्? आखुघाताः शबराः । **शक्तौ हस्तिकवाटयोः** (III. 2. 54.)—शक्तौ गम्यमानायां हस्तिकवाटयोः कर्मणोरुपपदयोः हन्तेष्टक् प्रत्ययो भवति; हस्तिनं हन्तुं शक्तः **हस्तिघ्नः** मनुष्यः, **कवाटघ्नः** चोरः । शक्ताविति किम्? विषेण हस्तिनं हन्तीति हस्तिघातः । **पाणिघताडघौ शिल्पिनि** (III. 2. 55.)—एतौ निपात्येते; शिल्पिनि कर्तरि पाणिताडयोरुपपदयोः हन्तेष्टक् प्रत्ययः टिलोपः घत्वं च: **पाणिघः, ताडघः** । शिल्पिनीति किम्? पाणिघातः, ताडघातः । राजघ उपसङ्ख्यानम् (वा.) इति–राजानं हन्तीति **राजघः** । **आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषुच्व्यर्थेष्वच्वौ कृञः करणे ख्युन्** (III. 2. 56.)—आढ्यादिषु कर्मसूपपदेषु च्व्यर्थे करोतेः धातोः करणे कारके ख्युनप्रत्ययो भवति । च्वेर्विकल्पेन विधानात् द्विविधाश्च्व्यर्था आढ्यादयः च्व्यन्ता अच्व्यन्ताश्च; तत्र च्व्यन्ताः पर्युदस्यन्ते । अनाढ्यम् आढ्यं करोत्यनेन **आढ्यंकरणम्** । एवमेव **सुभगंकरणं, स्थूलंकरणं, पलितंकरणं, नग्नंकरणम्, अन्धंकरणं, प्रियंकरणम्** । च्व्यर्थे-

ष्विति किम्? आढ्यं तैलेन कुर्वन्ति, अभ्यञ्जयन्तीत्यर्थः । अच्वाविति किम्? आढ्यीकुर्वन्त्यनेन । **कर्त्तरि भुवः खिष्णुच्खुकञौ** (III. 2. 57.)—आढ्यादिषु अच्व्यन्तेषूपपदेषु भवतेः कर्त्तरि कारके खिष्णुच् खुकञ् इत्येतौ भवतः : **आढ्यंभविष्णुः आढ्यंभावुकः, स्थूलंभविष्णुः स्थूलंभावुकः, पलितंभविष्णुः पलितंभावुकः, नग्नंभविष्णुः नग्नंभावुकः, अन्धंभविष्णुः अन्धंभावुकः, प्रियंभविष्णुः प्रियंभावुकः** । कर्त्तरीति किम्? करणे माभूत् । च्व्यर्थेष्वित्येव आढ्यो भविता ।

**स्पृशोऽनुदके क्विन्** (III. 2. 58.)—स्पृशेर्धातोरनुदके सुबन्ते उपपदे क्विन्प्रत्ययो भवति : घृतं स्पृशति इति **घृतस्पृक्** । अनुदके इति किम्? उदकस्पर्शोऽनकारः । क्विन्प्रत्ययस्य कुः (VIII. 2. 62.)—इति विशेषणार्थः । **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च** (III. 2. 59.)—ऋत्विगादयः पञ्चशब्दाः क्विन्प्रत्ययान्ता निपात्यन्ते : अपरे त्रयो धातवः निर्दिश्यन्ते । ऋतुशब्दे उपपदे यजेः क्विन्; ऋतौ वा यजति ऋतुं वा यजति ऋतुप्रयुक्तो वा यजति **ऋत्विक्**; रूढिरेषा यथाकथंचिदवगन्तव्या । **ञिधृषा** प्रागल्भ्ये इत्यस्माद्धातोः क्विन् द्विर्वचनमन्तोदात्तत्वञ्च : धृष्णोतीति **दधृक्** । सृजेः कर्मणि क्विन्नमागश्च निपात्यते; सृजन्ति तामिति **स्रक्** । दिशेः कर्मणि क्विन्; दिशन्ति तामिति **दिक्** । उत्पूर्वात् स्निह्यतेः क्विन्; उपसर्गान्तलोपः षत्वञ्च निपात्यते; उत्स्निह्यति इति **उष्णिक्** । अञ्चु युजि क्रुञ्चु इत्येतेभ्यो धातुभ्यः क्विन् प्रत्ययो भवति निपातैस्सहनिर्देशात्; अत्रापि किञ्चिदलाक्षणिकं कार्यमस्ति; अञ्चतेस्सुबन्तमात्रोपपदे क्विन् प्रत्ययो भवति : प्राञ्चतीति प्राङ्, प्रत्यञ्चतीति **प्रत्यङ्, उदङ्, तिर्यङ्** । युजेः क्रुञ्चेश्च केवलात् **युङ् क्रुङ्** । सोपपदात् क्विप; **अश्वयुक्** । **त्यदादिषु दृशोऽनालोचने कञ्च** (III. 2. 60.)—

दृशेर्धातोरनालोचने वर्तमानात् त्यदादिषूपपदेषु कञ्प्रत्ययः; चकारात् क्विन् । आसर्वनाम्नः (VI. 3. 91.)—इति सर्वनाम्नः आकारादेशः; **तादृक् तादृशः, यादृक् यादृशः** । टिड्ढाणञिति ङीप्; **तादृशी, यादृशी** । प्रत्ययोत्तरपदयोश्च (VII. 2. 98.)—इति युष्मदस्मदोर्मपर्यन्तस्य त्व मा इत्येतावादेशौ; **त्वादृशः मादृशः, त्वादृक् मादृक्** । **समानान्ययो श्चेति वक्तव्यम्** ( वा. III. 2. 60)—इति कञ् क्विनौ; दृग्दृशवतुषु (VI. 3. 89.)—इति समानस्य सः; **सदृक्, सदृशः; अन्यादृक्, अन्यादृशः** । **दृशेः क्सश्च वक्तव्यः** ( वा. III. 2. 60) इति क्सः; **दृक्षेचेति वक्तव्यम्** (वा. VI. 3. 91.) इत्याकारः; **तादृक्षः, अन्यादृक्षः** । **दृक्षे चेति वक्तव्यम्** (VI. 3. 89.) इति समानस्य सः; **सदृक्षः** । अनालोचने इति किम्? तम्पश्यतीति तद्दर्शः । तादृगादयोरूढशब्दाः प्रकारे वर्तन्ते न चात्र दर्शनाक्रिया वर्तते । **सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्** (III. 2. 61.) सुपीत्यनुवर्तते; कर्मग्रहणन्तु स्पृशोऽनुदके क्विन् इत्यतः प्रभृति न व्याप्रियते; सदादिभ्यो धातुभ्यः सुबन्ते उपपदे उपसर्गेऽप्यनुपसर्गेऽपि क्विप् । उपसर्गग्रहणं ज्ञापनार्थमन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवति इति । सू इति द्विषा साहचर्यात् सूतेरादादिकस्य ग्रहणं न सूयतेः सुवतेर्वा; युजिर्योगे युज- समाधौ द्वयोरपि ग्रहणम्; विद ज्ञाने विद विचारणे विद सत्तायामिति त्रयाणामपि ग्रहणं, न लाभार्थस्य विदेः, अकारस्य विवक्षितत्वात् । सत्— **दिविषत् संसत्**; सू—**वीरसूः प्रसूः**; द्विष—**मित्रद्विट् विद्विट्**; द्रुह— **मित्रध्रुक् प्रध्रुक्**; दुह—**गोधुक् प्रधुक्**; युजि—**अश्वयुक् वियुक्**; विद— **वेदवित् प्रवित्**; भिद—**काष्ठभित् उद्भित्**; छिद—**पापच्छित् परिच्छित्**; जि—**शत्रुजित् पराजित्**; नी—**सेनानीः प्रणीः**; राजृ—**देवराट् विराट्** ।

**भजो ण्विः** (III. 2. 62.)—भजेर्धातोर्ण्विप्रत्ययो भवति सुबन्ते उपपदे; अर्धं भजति **अर्धभाक्** । उपसर्गेऽपि–**प्रभाक्** । **छन्दसि सहः** (III. 2. 63.)—छन्दसि विषये सहेर्धातोः सुबन्ते उपपदे ण्विप्रत्ययो भवति; **तुराषाट् पृतनाषाट्** । अत्र सहेस्साडस्सः (VIII. 3. 56.) इति षत्वम्; अन्येषामपि दृश्यते (VI. 3. 137.) इति दीर्घः । छन्दसीति किम्? बलसहः । **अदोऽनन्ने** (III. 2. 68.)—छन्दसीति निवृत्तम्; अदेर्धातोरनन्ने सुबन्ते उपपदे विट्प्रत्ययो भवति; आममत्ति **आमात्** । अनन्ने इति किम्? अन्नादः । **क्रव्ये च** (III. 2. 69.)—क्रव्यशब्दे उपपदे अदेर्धातोर्विट्प्रत्ययो भवति; **क्रव्यात्** । **दुहः कप् घश्च** (III. 2. 70.)—दुहेर्धातोः सुबन्ते उपपदे कप् प्रत्ययो भवति, घकारश्चान्तादेशः **वर्षदुघः**: **पयोदुघा** । **आतोमनिन्क्वनिब्वनिपश्च** (III. 2. 74.)—छन्दसीति वर्तते, उपसर्गेपीति सुपीति च; आदन्तेभ्यो धातुभ्यश्छन्दसि विषयेमनिन् क्वनिप् वनिप् एते प्रत्यया भवन्ति, चाद्विच्च । मनिन्–**सुदामा अश्वत्थामा**; क्वनिप्–**सुधीवा सुपीवा**, घुमास्थेत्यादिना ईत्वम्: वनिप्–**भूरिदावा**; विच्–**सोमपाः शुभंयाः** । **अन्येभ्योऽपि दृश्यन्ते** (III. 2. 75.)—अन्येभ्यो धातुभ्यः मनिनादयो भवन्ति । मनिन्–**सुशर्मा**; अत्र **नेड्वशि कृति** (VII. 2. 8.)—वशादौ कृत्प्रत्यये परतः इण्ण भवति । क्वनिप्–एतीति **इत्वा** तुगागमः । वनिप्–विजायते इति **विजावा**, अग्रे गच्छतीति **अग्रेगावा**; अत्र **विड्वनोरनुनासिकः स्यात्** (VI. 4. 41.) विट् वन् इत्येतयोः परतः अनुनासिकान्तस्य अङ्गस्य आकारादेशो भवति । **क्विप् च** (III. 2. 76.)—सर्वेभ्यो धातुभ्यः निरुपपदेभ्यः छन्दसि भाषायां च क्विप् प्रत्ययो भवति; **पर्णध्वत्**, **वाहभ्रट्**, **क्षमाभृत्**, **खलपूः**, **जलमुक्**, **बलिभुक्**,

**मधुलिट्** : **रज्जुवृट्** **तत्त्वपृट्** । अक्षैर्दीव्यति **अक्षद्यूः** इत्यत्र **च्छ्वोश्शूडनुनासिके च** (VI. 4. 19.)—च्छ् इत्यस्य सतुक्स्य वकारस्य च क्रमात् श् ऊठ् इत्येतावादेशौ भवतः अनुनासिकादौ प्रत्यये परतः क्वौ झलादौ किति ङिति–इति ऊठ् इत्ययमादेशः । **राल्लोपः** (VI. 4. 21.)—रेफादुत्तरयोश्छ्वोर्लोपो भवति क्वौ झलादौ क्ङिति परतः । वोरुपधाया दीर्घ इकः (VIII. 2. 76.) इति दीर्घः ; मूर्छतीति **मूः मुरौ मुरः** ; धूर्वतीति **धूः धुरौ धुरः** । प्रशान् इत्यत्र **अनुनासिकस्य क्विझलोःक्ङिति** (VI. 4. 15.)—अनुनासिकान्तस्याङ्गस्योपधाया दीर्घो भवति क्वौ झलादौ क्ङिति परतः–इति दीर्घः ; **मो नो धातोः** (VIII. 2. 64.)—मकारान्तस्य धातोः पदान्ते नकारादेशः स्यात्–इति नः, **प्रशान् प्रशामौ प्रशामः** ।

**सुप्यजातौ णिनिस्ताच्छील्ये** (III. 2. 78.)—अजातिवाचिनि सुबन्ते उपपदे ताच्छील्ये गम्यमाने धातोः णिनिप्रत्ययः : **उष्णभोजी, शीतभोजी** । अजाताविति किम् ? ब्राह्मणानामन्वयिता । **साधुकारिणि च** ( वा. ) इति–**साधुकारी, साधुदायी** । अताच्छील्यार्थं वचनम् । **ब्रह्मणि वदः** ( वा. ) इति–ब्रह्मवादी । **कर्तर्युपमाने** (III. 2. 79.)—कर्तृवाचिन्युपमाने उपपदे धातोर्णिनिप्रत्ययो भवति ; उपपदकर्ता प्रत्ययार्थस्य कर्तुरुपमानम् : उष्ट्र इव क्रोशति **उष्ट्रक्रोशी**, हंस इव गच्छति **हंसगामिनी** । अताच्छील्यार्थ आरम्भः । कर्तरीति किम् ? अपूपानिव भक्षयति माषान् । उपमान इति किम् ? उष्ट्रः क्रोशति । **व्रते** (III. 2. 80.)—व्रत इति शास्त्रतो नियमः ; व्रते गम्यमाने सुबन्ते उपपदे धातोर्णिनिप्रत्ययो भवति । समुदायोपाधिश्चायम् ; धातूपपदप्रत्यय-

समुदायेन व्रतं गम्यते; **स्थण्डिलशायी, अश्राद्धभोजी** । सति शयने स्थण्डिले एव शेते नान्यत्र, सति भोजने अश्राद्धमेव भुङ्क्ते न श्राद्धमिति । व्रत इति किम् ? स्थण्डिले शेते देवदत्तः । अताच्छील्यार्थ आरम्भः । **बहुलमाभीक्ष्ण्ये** (III. 2. 81.)—आभीक्ष्ण्ये गम्यमाने सुबन्त उपपदे धातोर्बहुलं णिनिप्रत्ययो भवति । आभीक्ष्ण्यं पौनः पुन्यं तात्पर्यमासेवा ताच्छील्यादन्यदेव : **कषायपायिणः** गान्धाराः, **क्षीरपायिणः** उशीनराः । अत्र **प्रातिपदिकान्तनुम्विभक्तिषु च** (VIII. 4. 11.)—प्रातिपदिकान्ते नुमि विभक्तौ च यो नकारः तस्य पूर्वपदस्थान्निमित्तादुत्तरस्य णकारादेशो वा भवति—इति णकारः । बहुलग्रहणात् **कुल्माषखादः** इत्यत्र न भवति । **मनः** (III. 2. 82.)—मन्यतेर्धातोः सुबन्ते उपपदे णिनि-प्रत्ययो भवति : **शोभनमानी** । **आत्ममाने खश् च** (III. 2. 83.)—मननं मानः : आत्मनो माने वर्तमानान्मन्यतेर्धातोः सुबन्ते उपपदे खश्-प्रत्ययो भवति; चकाराण्णिनिश्च । यदा प्रत्ययार्थः कर्ता आत्मानं दर्शनीय-त्वादिना धर्मेण युक्तं मन्यते तदायं विधिः : **दर्शनीयमात्मानं मन्यते दर्शनीयंमन्यः दर्शनीयमानी : पण्डितम्मन्यः पण्डितमानी** ॥

**भूते** (III. 2. 84.)—इति वर्तमाने, **ब्रह्मभ्रूणवृत्रेषु क्विप्** (III. 2. 87.)—ब्रह्मादिकर्मसूपपदेषु हन्तेः क्विप्प्रत्ययः; **ब्रह्महा, भ्रूणहा, वृत्रहा** । **सुकर्मपापमन्त्रपुण्येषु कृञः** (III. 2. 89)—क्वि-बिति वर्तते ; स्वादिषु कर्मसूपपदेषु करोतेर्धातोः क्विप भवति : **सुकृत्, कर्मकृत्, पापकृत्, मन्त्रकृत्, पुण्यकृत्** । धातोरनियतत्वादन्यस्मिन्नु-पपदेऽपि क्विप् : **शास्त्रकृत्, भाष्यकृत्** । **सोमे सुञः** (III. 2. 90.) क्विबिति वर्तते ; सोमे कर्मण्युपपदे सुनोतेः क्विप् ; **सोमसुत्** । **अग्नौ चेः** (III. 2. 91.)—चिनोतेः क्विप्प्रत्ययो भवति अग्नावुपपदे : **अग्निचित्** ।

**कर्मणीनिर्विक्रियः** (III. 2. 93.)—कर्मण्युपपदे विपूर्वात् क्रीणातेः इनि प्रत्ययो भवति भूतेऽर्थे; **सोमविक्रयी । दृशेः क्वनिप्** (III. 2. 94.)—दृशेर्धातोः कर्मण्युपपदे क्वनिप्प्रत्ययो भवति भूतेऽर्थे; **पारदृश्वा । राजनि युधिकृञः** (III. 2. 95.)—राजन् शब्दे कर्मवाचिन्युपपदे युध्यतेः करोतेश्च क्वनिप् । युध्यतिरकर्मकः; अन्तर्भावितण्यर्थः सकर्मको भवति; **राजयुध्वा**—राजानं योधितवानित्यर्थः—**राजकृत्वा । सहे च** (III. 2. 96.)—सहशब्देचोपपदे युधिकृञोः क्वनिप् । असत्ववाचित्वादुपपदं कर्मणा न विशिष्यते; **सहयुध्वा सहकृत्वा** । सुयजोर्ङ्वनिप् (III. 2. 103.)—सुनोतेर्यजतेश्च ङ्वनिप्प्रत्ययः; **सुत्वा, यज्वा । सप्तम्यां जनेर्डः** (III. 2. 97.)—सप्तम्यन्ते उपपदे जनेर्धातोर्डप्रत्ययो भवति; उपसरे जातवान् **उपसरजः** । पञ्चम्यामजातौ (III. 2. 98.)—जातिवर्जिते पञ्चम्यन्ते उपपदे जनेर्धातोर्डप्रत्ययो भवति; **संस्कारजः, सुखजः** । अजाताविति किम्? अश्वात् जातः । **उपसर्गे च संज्ञायाम्** (III. 2. 99.)—उपसर्गेचोपपदे जनेर्डप्रत्ययो भवति संज्ञायां विषये; समुदायोपाधिः संज्ञा; अथेमा **मानवीः प्रजाः** । अनौ कर्मणि (III. 2. 100.)—अनुपूर्वाज्जनेर्डप्रत्ययो भवति कर्मण्युपपदे; पुमांसमनुजातः **पुमनुजः स्त्र्यनुजः । अन्येष्वपि दृश्यते** (III. 2. 101)—अन्येष्वपि उपपदेषु जनेर्डप्रत्ययो भवति; सप्तम्यामित्युक्तमसप्तम्यामपि दृश्यते; न जायते इति **अजः**, द्विर्जाताः **द्विजाः** । अजातौ इत्युक्तं पञ्चम्याञ्च जातावपि दृश्यते; **ब्राह्मणजो** धर्मः, **क्षत्त्रियजं** युद्धम् । उपसर्गे च संज्ञायाम् इत्युक्तम् असंज्ञायामपि दृश्यते; **अभिजाः परिजाः** केशाः । अनौ कर्मणीत्युक्तम् अकर्मण्यपि दृश्यते; अनुजातः **अनुजः** । अपि शब्दस्सर्वोपाधि

व्यभिचारार्थः तेन धात्वन्तरादपि कारकान्तरेऽपि भवति ; परितः खाता परिखा ॥

**क्तक्तवतू निष्ठा** (I. 1. 26.)—क्त क्तवतु इत्येतौ प्रत्ययौ निष्ठासंज्ञौ भवतः । **निष्ठा** (III. 2. 102.)—निष्ठासंज्ञौ प्रत्ययौ भूतेऽर्थे वर्तमानाद्धातोः भवतः । श्र्युकः किति (VII. 2. 11.)—इति इडभावः ; **भूतः भूतवान्** । **निष्ठायां सेटि** (VI. 4. 52.)—सेटि निष्ठायां परतो णेर्लोपो भवति ; **कारितम् शामितम्** । **श्वीदितो निष्ठायाम्** (VII. 2. 14.)—श्वयतेरीदितश्च निष्ठायामिण्ण भवति । यजादित्वात्संप्रसारणम् ; हलः (VI. 4. 2.) इति दीर्घः । **ओदितश्च** (VIII. 2. 45.)—ओदितो धातोर्निष्ठानकारस्य नकारादेशो भवति ; **शूनः शूनवान्** । ओलस्जी व्रीडने ; चोः कुः ; **लग्नम्** । ओविजी भयचलनयोः ; **उद्विग्नः उद्विग्नवान्** । स्वादय ओदित इत्युक्तत्वात् **सूनः, दूनः, दीनः, डीनः, रीणः, व्रीणः** इति भवन्ति । **यस्य विभाषा** (VII. 2. 15.)—यस्य धातोर्विभाषेड्युक्तः तस्य निष्ठायामिण्ण भवति । स्वरत्यादिना विभाषा ; तेषामिण्ण भवति–**प्रसूतः विधूतः** । कृपो लः ; **क्लृप्तः** । ढ्रलोपे इति दीर्घः ; **गूढः** । उदित्वात् **वृद्धः शान्तः** । **आदितश्च** (VII. 2. 16.)—आदितश्च धातोरिण्ण भवति निष्ठायाम् । **रदाभ्यान्निष्ठातो नः पूर्वस्य च दः** (VIII. 2. 42.)—रेफदाभ्यामुत्तरस्य निष्ठातस्य नादेशो भवति पूर्वस्य दकारस्य च । ञिमिदा–**मिन्नः** ; ञिष्विदा–**स्विन्नः** ; दान्तस्य छिदः –**छिन्नः** ; रेफान्तस्य—**तीर्णः, विगूर्णः** । आदितश्च इति चकारस्यानुक्तसमुच्चयार्थत्वात् इडभावः ; **आश्वस्तः** । **संयोगादेरातो धातोर्यण्वतः** (VIII. 2. 43.)—संयोगादिर्यो धातुः आकारान्तो यण्वान् तस्मादुत्तरस्य

निष्ठा तकारस्य नकारादेशो भवति ; **ग्लानः**, **म्लानः**, **निद्राणः** । संयोगादेरिति किम् ? यातः । आत इति किम् ? च्युतः । धातोरिति किम् ? निर्यातः, निर्वातः । यण्वदिति किम् ? स्नातः । **ल्वादिभ्यश्च** (VIII. 2. 44.)—लूञ् छेदने इत्यतःप्रभृति वॄ वरण इति यावत् वृत्करणेन परिसमापिता ल्वादयः गृह्यन्ते : तेभ्य उत्तरस्य निष्ठातकारस्य नकारादेशो भवति : **लूनः**, **धूनः जीनः** । **दुग्वो दीर्घश्चेति वक्तव्यम्** ( वा. ) इति—**आदूनः**, **विगूनः** । **पूञो विनाश इति वक्तव्यम्** ( वा. ) इति –**पूनाः** यवाः ; विनष्टा इत्यर्थः । विनाश इति किम् ? पूता यजमानाः । **क्षियो दीर्घात्** (VIII. 2. 46.)—क्षिय उत्तरस्य निष्ठातकारस्य नकारादेशो भवति । **क्षियः** (VI. 4. 59.)—इति वर्तमाने, निष्ठायामण्यदर्थे (VI. 4. 60.)—ण्यतः कृत्यस्यार्थः भावकर्मणी : ताभ्यामन्यत्र या निष्ठा तस्यां क्षियो दीर्घो भवति ; **क्षीणः** तपस्वी । **श्योऽस्पर्शे** (VIII. 2. 47.)—श्यायतेरुत्तरस्य निष्ठातकारस्य अस्पर्शेऽर्थे नकारादेशो भवति । **द्रवमूर्तिस्पर्शयोः श्यः** (VI. 1. 24.)—द्रवमूर्तौ द्रवकाठिन्ये स्पर्शे वर्तमानस्य श्यैङ् गतावित्येतस्य धातोर्निष्ठायां परतस्संप्रसारणं भवति ; **शीनम्** घृतम् । अस्पर्शे इति किम् ? **शीतम्** उदकम् । **प्रतेश्च** (VI. 1. 25.)—प्रतेरुत्तरस्य श्यायतेः निष्ठायां संप्रसारणं भवति ; **प्रतिशीनः** । **विभाषाभ्यवपूर्वस्य** (VI. 1. 26.)—अभि अव इत्येवंपूर्वस्य श्य इत्येतस्य निष्ठायां विभाषा संप्रसारणं भवति ; **अभिशीनः अभिश्यानः**, **अवशीनः अवश्यानः** ॥

**शुषः कः** (VIII. 2. 51.)—शुषेर्धातोरुत्तरस्य निष्ठातकारस्य ककारादेशो भवति : **शुष्कः शुष्कवान्** । **पचो वः** (VIII. 2. 52.)

—पचेर्धातोरुत्तरस्य निष्ठातकारस्य वकारादेशो भवति : पक्वः पक्ववान् । क्षायो मः (VIII. 2. 53.)—क्षै इत्येतस्मादुत्तरस्य निष्ठातकारस्य मकारादेशो भवति : क्षामः । प्रस्त्योऽन्यतरस्याम् (VIII. 2. 54.)—प्रपूर्वात् स्त्यायतेरुत्तरस्य निष्ठातकारस्य मकारादेशो भवत्यन्यतरस्याम् : प्रस्तीमः । यदा मत्वं न भवति तदा प्रस्तीतः । अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः (VIII. 2. 55.)—फुल्ल क्षीब कृश उल्लाघ इत्येते शब्दा निपात्यन्ते नचेदुपसर्गादुत्तरे भवन्ति । फुल्लः इति ञि फला विशरण इत्येतस्मात् धातोरुत्तरस्य निष्ठातकारस्य लकारो निपात्यते, उत्वमिडभावश्च । क्तवत्वन्तस्याप्येतल्लत्वमिष्यते (भा. इ.) इति—फुल्लवान् । क्षीबकृशोल्लाघा इति क्षीबकृशाभ्यामुत्पूर्वाल्लघेश्चोत्तरस्य निष्ठातकारस्य न लोपः इडभावश्च निपात्यते : क्षीबः, कृशः, उल्लाघः । अनुपसर्गादिति किम् ? प्रफुल्लाः सुमनसः, प्रक्षीबिताः, प्रकृशिताः प्रोल्लाघिताः । अत्र प्रफुल्लः इत्यत्र आदितश्च (VII. 2. 16.) इति ञिफला इति धातोः इण्णिषेधे, ति च (VII. 4. 89.)—तकारादौ प्रत्यये परतः चरफलोरकारस्य उकारादेशो भवति । प्रफुल्लः इत्यत्र तु फुल्ल विकसनइत्यस्मात् पचाद्यच् । लोपरुदोऽन्य उपसर्गः प्रतिषिध्यते । उत्फुल्लसम्फुल्लयोरुपसंख्यानम् (वा.) इति उत्फुल्लः संफुल्लः । नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् (VIII. 2. 56.)—नुद विद उन्दी त्रा घ्रा ह्री इत्येतेभ्यः परस्य निष्ठातकारस्य नकारादेशो भवत्यन्यतरस्याम् : नुन्नः नुत्तः, विन्नः वित्तः, समुन्नः समुत्तः, त्राणः त्रातः, घ्राणः घ्रातः, ह्रीणः ह्रीतः । विद विचारणे इत्येतस्य विदेरिहाग्रहणमिष्यते ।

वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते । विन्तेर्विन्नश्च वित्तश्च भोगे वित्तस्तु विन्दतेः । न ध्याख्यापृमूर्छिमदाम् (VIII. 2. 57.)–

ध्या ख्या पॄ मूर्छि मद इत्येतेषां निष्ठातकारस्य नकारादेशो न भवति; **ध्यातः, ख्यातः, पूर्तः, मूर्तः, मत्तः ।**

**दिवोऽविजिगीषायाम्** (VIII. 2. 49.)—दिव उत्तरस्य निष्ठातकारस्य नकारादेशो भवति अविजिगीषायामर्थे; **परिद्यूनः** । अविजिगीषायामिति किम्? द्यूतं वर्तते । **निर्वाणोऽवाते** (VIII. 2. 50.)—निर्वाण इति निस्पूर्वाद्वातेरुत्तरस्य निष्ठातकारस्य नकारादेशो भवति, नचेत् वाताधिकरणो वात्यर्थो भवति; निर्वाणः प्रदीपः । अवाते इति किम्? निर्वातो वातः । जनसनखनां सन्झलोः (VI. 4. 42.) इत्येतेषामाकारादेशः सनि झलादौ क्ङिति परतः; **जातः, सातः, खातः** । वचिस्वपीत्यादिना सम्प्रसारणम्; **उक्तः, सुप्तः, इष्टः, ऊढः, गृहीतः, विद्धः, उशितः, विचितः** । **स्फायः स्फी निष्ठायाम्** (VI. 1. 22.)—स्फायी वृद्धौ; अस्य धातोर्निष्ठायां परतः स्फी इत्ययमादेशो भवति; **स्फीतः** । **प्यायः पी** (VI. 1. 28.)–ओप्यायी वृद्धावित्यस्य धातोर्निष्ठायां विभाषा पी इत्ययमादेशो भवति । ओदित्वान्नकारः; **पीनः** । इयं व्यवस्थित विभाषा विज्ञास्यते: तेनानुपसर्गस्य नित्यं भवति सोपसर्गस्य तु नैव–प्रप्यानः शशी । आङ्पूर्वस्यान्धूधसोरिति वक्तव्यम् (वा.); आङ्पूर्वस्य नित्यं भवत्येव–**आपीनः** अन्धुः, **आपीनम्** ऊधः । **वसति क्षुधोरिट्** (VII. 2. 52.)—वसतेः क्षुधेश्च क्त्वानिष्ठयोरिडागमो भवति **उषितः क्षुधितः** । **अञ्चेः पूजायाम्** (VII. 2. 53.)—अञ्चेः पूजायां क्त्वानिष्ठयोरिडागमो भवति । नाञ्चेः पूजायाम् (VI. 4. 30.) इति नलोपो न भवति; **अञ्चितः** । **निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः** (I. 2. 19.)—शीङ् स्विदि मिदि क्ष्विदि धृष् इत्येतेभ्यः सेट् निष्ठान किद्भवति;

शयितः । आदितश्च (VII. 2. 16.)–इत्यनुवर्तमाने, विभाषा भावादिकर्मणोः (VII. 2. 17.)—भावे आदिकर्मणि च आदितोर्धातोः निष्ठायामिडागमो विभाषा न भवति: प्रस्वेदितः प्रस्विन्नः, प्रमेदितः, प्रमिन्नः, प्रक्ष्वेदितः प्रक्ष्विण्णः; प्रधर्षितः प्रधृष्टः । मिन्नम् मेदितम् वा अनेन इति भावे भवति । उदुपधाद्भावादिकर्मणोरन्यतरस्याम् (I. 2. 21.)–उकारोपधाद्धातोः परः भावे आदिकर्मणि च वर्तमानो निष्ठाप्रत्ययस्सेट् न किद्भवति अन्यतरस्याम्: द्युतितम् द्योतितम् वा अनेन: प्रद्युतितः प्रद्योतितः । पूङः क्त्वा च (I. 2. 22.)——अन्यतरस्यामिति न स्वर्यते उत्तरसूत्रे पुनः वा वचनात्: न सेडिति वर्तते: पूङःपरो निष्ठाप्रत्ययः क्त्वा च सेट् न किद्भवति: पवितः । अत्र पूङश्च (VII. 2. 51.)—पूङः परयोः क्त्वानिष्ठयोः वा इडागमः । इति पूतः इत्यपि भवति । दृढः स्थूलबलयोः (VII. 2. 20.)—स्थूले बलवति च दृढ इति निपात्यते । दृंहेः क्तप्रत्यये इडभावः; हकारनकारयोर्लोपः; परस्य च ढत्वम्: दृढः । प्रभौ परिवृढः (VII. 2. 21.)—परिवृढ इति निपात्यते प्रभुश्चेत् भवति; परिवृढः स्वामी । पूर्वेण समानं वृंहेर्निपातनमेतत् । प्रभाविति किम्? परिवृंहितम् परिवृंहितम् । कृच्छ्रगहनयोः कषः (VII. 2. 22.)–कृच्छ्र गहन इत्येतयोरर्थयोः कषेर्धातोः निष्ठायामिडागमो न भवति: कष्टम् व्याकरणम् कष्टानि वनानि । कृच्छ्रगहनयोरिति किम्? कषितं सुवर्णम् । घुषिरविशब्दने (VII. 2. 23.)—घुषेर्धातोरविशब्दनेऽर्थे निष्ठायामिडागमो न भवति; घुष्टा रज्जुः, घुष्टौ पादौ । अविशब्दने इति किम्? अवघुषितं वाक्यमाह । विशब्दनं प्रतिज्ञानम् । अर्देस्संनिविभ्यः (VII. 2. 24.)—सं नि वि इत्येतेभ्य उत्तरस्यार्देर्निष्ठायामिडागमो न भवति: समर्णः न्यर्णः व्यर्णः ।

**अभेश्चाविदूर्ये** (VII. II. 25.)—अभिशब्दादुत्तरस्यार्देराविदूर्ये निष्ठायामिडागमो न भवति : **अभ्यर्णा** सेना । आविदूर्य इति किम्? अभ्यर्दितो वृषलश्शीतेन ; पीडित इत्यर्थः । **वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः** (VII. 2. 27.)—णेरिति वर्तते ; दम् शम् पूरी दस् स्पश् छद् ज्ञप् इत्येतेषां ण्यन्तानामनिट् त्वं वा निपात्यते : **दान्तः, दमितः, शान्तः, शमितः, पूर्णः, पूरितः, दस्तः,** दासितः, **स्पष्टः, स्पाशितः, छन्नः, छादितः, ज्ञप्तः, ज्ञापितः** । इट् प्रतिषेधो णिलुक् च निपात्यते ; ज्ञपेस्तु भरज्ञपिसनामिति विकल्पविधानाद्यस्य विभाषेति नित्यं प्रतिषेधे प्राप्ते विकल्पार्थं निपातनम् । **रुष्यमत्वरसंघुषास्वनाम्** (VII. 2. 28.)—रुषि अम त्वर संघुष आस्वन इत्येतेषां वा निष्ठायामिडागमो न भवति **रुष्टः रुषितः अभ्यान्तः अभ्यमितः** तूर्णः त्वरितः, **संघुष्टम् संघुषितम्, आस्वान्तः आस्वनितः** । **हृषेर्लोमसु** (VII. 2. 29.)—लोमसु वर्तमानस्य हृषेः निष्ठायां वा इडागमो न भवति ; **हृष्टानि हृषितानि** वा लोमानि ; **हृष्टं** लोमभिः **हृषितं** लोमभिः । लोमस्विति किम्? हृष्टो देवदत्तः इत्यलीकार्थस्यानिटः, हृषितो देवदत्त इति तुष्ट्यर्थस्य सेटः । विस्मितप्रतिघातयोश्चेति वक्तव्यम् ( वा. ) इति **हृष्टः** देवदत्तः वा **हृषितः** ; देवदत्तः विस्मित इत्यर्थः । **अपचितश्च** (VII. II. 30.)—अपचित इति निपात्यते : अपपूर्वाच्चायतेर्धातोर्निष्ठायामनिट् त्वं चिभावश्च वा निपात्यते ; **अपचितः** अनेन गुरुः वा **अपचायितः** । **क्तिनिनित्यमिति वक्तव्यम्** ( वा. ) इति—क्तिनिनित्यं चि भावो निपात्यते ; **अपचितिः** ॥

**अदो जग्धिर्ल्यप्ति किति** (II. 4. 36.)—अदेर्जग्धिरादेशो भवति ल्यपि तकारादौ किति च परतः जग्धः । **द्यतिस्यतिमास्थामित्ति**

किति (VII. 4. 40.)—द्यति स्यति मा स्था इत्येतेषामङ्गानां इकारादेशो भवति तकारादौ किति प्रत्यये परतः : **अवदितम्, अवसितम्, प्रमितम्, प्रस्थितम्।** शा छोरन्यतरस्याम् (VII. 4. 41.)—शा छा इत्येतयोः इकारादेशो वा भवति तकारादौ किति प्रत्यये परतः ; **निशितम् निशातम्, अवच्छितम् अवच्छातम्। श्यतेरित्वं व्रते नित्यमिति वक्तव्यम्** (वा.) इति—**संशितः** ब्राह्मणः, संशितव्रत इत्यर्थः । व्यवस्थितविभाषाविज्ञानात्सिद्धम् । **दधातेर्हिः** (VII. 4. 42.)—दधातेरङ्गस्य हि इत्ययमादेशो भवति तकारादौ किति प्रत्यये परतः : **अभिहितम्।** दो दद्घोः (VII. 4. 46.)—दा इत्येतस्य घुसंज्ञकस्य दद् इत्ययमादेशो भवति तकारादौ किति प्रत्यये परतः, दत्तः । घोरिति किम्? अवदातम् मुखम् । अयमादेशस्थान्त एवेष्यते ; एवं ह्युक्तम्—

तान्ते दोषो दीर्घत्वं स्यात् दान्ते दोषो निष्ठानत्वम् ।
धान्ते दोषो धत्वप्राप्तिः थान्तेऽदोषस्तस्मात्थान्तम् ॥
अत्र सूत्रे दथ इत्यस्य दद इति सांहितिको निर्देशः ।

**अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।**
**सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥**

अच उपसर्गात्तः इति तकारे प्राप्ते निपात्यन्ते : अनुपसर्गा वा एते अवादयः क्रियान्तरविषया वेदितव्याः । **अच उपसर्गात्तः** (VII. 4. 47.)—अजन्तादुपसर्गादुत्तरस्य दा इत्येतस्य घुसंज्ञकस्य त इत्ययमादेशो भवति तकारादौ किति प्रत्यये परतः ; **अवत्तम् प्रत्तम् नीत्तम् परीत्तम्। दस्ति** (VI. 3. 124.)—दा इत्येतस्य यस्तकारादेशः तस्मिन् परे इगन्तस्योपसर्गस्य दीर्घो भवति : **वीत्तम्, परीत्तम्।** घुमास्थेत्यादिना

**ईत्वम्**; **गीतम्**, **पीतम्**; होढः; लीढम्, ऊढम्। दादेर्धातोर्घः (VIII. 2. 32.) इति घत्वम्; **दुग्धम्**। वा द्रुहादि; **द्रूढम् द्रुग्धम्**, **मूढम् मुग्धम्**, **स्नूढम् स्नुग्धम्**, **स्नीढम् स्निग्धम्**। नहो धः इति धत्वम्; नद्धम्। व्रश्चेति षत्वम्; मृष्टम्, मृष्टम्। **निष्ठादेशः षत्वस्वरप्रत्ययविधीड्विधिषु सिद्धो वक्तव्यः** (वा. VIII. 2. 3.) कुत्वन्तु प्रत्यसिद्धमेव; **वृक्णः**। झषस्तथोर्धोऽधः इति प्रलुब्धः। इत्याद्यखिलम्बोध्यम् ॥

किञ्च—**तयोरेवकृत्यक्तखलर्थाः** (III. 4. 70.)—तयोरेव भावकर्मणोरेव कृत्यसंज्ञकाः प्रत्ययाः क्तश्च खलर्थाश्च भवन्ति; **कृतः कटो भवता**, **ग्रामं नीता अजाः**, **पृष्टो माणवकः पन्थानं**; आसितं भवता, शयितं भवता। **आदिकर्मणि क्तः कर्तरिच** (III. 4. 71.)—आदिकर्मणि यः क्तो विहितः स कर्तरि भवति; चकाराद्यथा प्राप्तञ्च भावकर्मणोः। आदिभूतः क्रियाक्षणः आदिकर्म; तस्मिन् आदिकर्मणि भूतत्वेन विवक्षितो यः क्तः विहितः तस्यायमर्थनिर्देशः, **प्रसुप्तो भगवान्**, **प्रसुप्तं भगवता**, **प्रकृतः कटं देवदत्तः**, **प्रकृतः कटो देवदत्तेन**। गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च (III. 4. 72.)—गत्यर्थेभ्यो धातुभ्यः अकर्मकेभ्यः श्लिषादिभ्यश्च यः क्तः सकर्तारि भवति, चकाराद्यथाप्राप्तं च भावकर्मणोः। गत्यर्थेभ्यः—**गतो देवदत्तोग्रामम्**; **गतो देवदत्तेन ग्रामः**, **गतं देवदत्तेन**। अकर्मकेभ्यः **ग्लानोभवान्**, **ग्लानं भवता**। श्लिषादिभ्यः—**उपश्लिष्टो गुरुं भवान्**, **उपश्लिष्टो गुरुर्भवता**, **उपश्लिष्टं भवता**; **अतिशयितो गुरुं भवान्**, **अतिशयितो गुरुर्भवता**, **अतिशयितं भवता**; **उपस्थितो गुरुं भवान्**, **उपस्थितो गुरुर्भवता**, **उपस्थितं भवता**; **आस—उपासितो गुरुं भवान्**, **उपासितो गुरुर्भवता**,

उपासितं भवता; अनूषितो गुरुर्भवता, अनूषितो गुरुं भवान्, अनूषितं भवता; अनुजातो माणवको माणविकाम्; अनुजाता माणविका माणवकेन, अनुजातं माणवकेन; आरूढो वृक्षं भवान्, आरूढो वृक्षो भवता, आरूढं भवता; अनुजीर्णो वृषलीं देवदत्तः, अनुजीर्णा वृषली देवदत्तेन, अनुजीर्णं देवदत्तेन। श्लिषादयः सोपसर्गाः सकर्मका भवन्ति; तदर्थमेषामुपादानम्। **क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः** (III. 4. 76.)—ध्रौव्यार्था अकर्मकाः, प्रत्यवसानार्था अभ्यवहारार्थाः इति स्वनिकायप्रसिद्धिः; ध्रौव्यगतिप्रत्यवसानार्थेभ्यो यः क्तः सोऽधिकरणेऽपि भवति, चकाराद्यथाप्राप्तं च। तत्र ध्रौव्यार्थेभ्यः कर्तृभावाधिकरणेषु गत्यर्थेभ्यः कर्तृकर्मभावाधिकरणेषु प्रत्यवसानार्थेभ्यः कर्मभावाधिकरणेषु। ध्रौव्यार्थेभ्यस्तावत्—आसितो देवदत्तः; आसितं देवदत्तेन; अयं ग्रामस्तेषामासितः, इदमेषामासितं। गत्यर्थेभ्यः—यातो देवदत्तः, यातं देवदत्तेन; यातो ग्रामो देवदत्तेन, इदमेषां यातम्। प्रत्यवसानार्थेभ्यः—भुक्त ओदनो देवदत्तेन; भुक्तं देवदत्तेन, इदमेषां भुक्तम्। कथं भुक्ता ब्राह्मणाः पीता गावः इति? अकारो मत्वर्थीयः, भुक्तमेषामस्ति पीतमेषामस्तीति। **ञीतः क्तः** (III. 2. 187.)—ञिशब्दः इत् यस्यासौ ञीत्; तस्माद्धातोर्वर्तमानार्थे क्तप्रत्ययो भवति। भूते निष्ठा विहिता वर्तमाने न प्राप्नोति इति विधीयते; **मिन्नः**, **स्विन्नः**; **क्ष्विण्णः**, इत्यादि। **मतिबुद्धिपूजार्थेभ्यश्च** (III. 2. 188.)—मतिरिच्छा, बुद्धिर्ज्ञानं, पूजा सत्कारः; मत्याद्यर्थेभ्यो धातुभ्यो वर्तमानार्थे क्तप्रत्ययो भवति। क्तस्य च वर्तमाने (II. 3. 67.) इति षष्ठी; क्तेन च पूजायाम् (II. 2. 12.) इति समास प्रतिषेधः; **राज्ञां मतः**, **गुरूणामिष्टः**, **विदुषां बुद्धः ज्ञातः पूजितो वा**। अनुक्तसमुच्चयार्थश्चकारः

शीलितः इत्यादि । **नपुंसके भावे क्तः** (III. 3. 114.)—नपुंसकलिङ्गे भावे धातोः क्तप्रत्ययो भवति; **हसितम् छात्रस्य, शोभनं जल्पितम्, प्रियं पुत्रस्य शयितम्, एधितं राजकुलस्य** ॥

**आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु** (III. 2. 134.)—भ्राजभासेति क्विपं वक्ष्यति (III. 2. 177.); आ एतस्मात् क्विपसंशब्दनात् यानित ऊर्ध्वमनुक्रमिष्यामः तच्छीलादिषु कर्तृषु ते वेदितव्याः । अभिविधौ चायमाङ्; तेन क्विपोऽयमर्थनिर्देशः । **तृन्** (III. 2. 135.)—सर्वेभ्यो धातुभ्यः तृन् प्रत्ययो भवति तच्छीलादिषु कर्तृषु । नकारः स्वरार्थः । ताच्छील्ये तावत्—**कर्ता कटान् वदिता जनापवादान्** । तद्धर्मणि—**अन्नमपहर्तारः आह्वरका भवन्ति श्राद्धे सिद्धे, उन्नेतारस्तौल्वलायना भवन्ति पुत्रे जाते** । तत्साधुकारिणि—**कर्ता कटम्, गन्ताखेटम्,** । **अलङ्कृञ् निराकृञ् प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतु वृधुसहचर इष्णुच्** (III. 2. 136.)—अलङ्कृञ् निराकृञ् प्रजन उत्पच उत्पत उन्मद रुचि अपत्रप वृतु वृधु सहचर इत्येतेभ्यस्ताच्छील्यादिषु इष्णुच् प्रत्ययो भवति; **अलङ्करिष्णुः, निराकरिष्णुः, प्रजनिष्णुः, उत्पचिष्णुः, उत्पतिष्णुः, उन्मदिष्णुः, रोचिष्णुः, अपत्रपिष्णुः, वर्तिष्णुः, वर्धिष्णुः, सहिष्णुः, चरिष्णुः** । **भुवश्च** (III. 2. 138.)—भवतेर्धातोस्तच्छीलादिषु विषये इष्णुच् भवति; **भविष्णुः** । चकारोऽनुक्तसमुच्चयार्थः; क्षयिष्णुः, भ्राजिष्णुः । **ग्लाजिस्थश्च क्स्नुः** (III. 2. 139.)—ग्लै जि स्था इत्येतेभ्यो धातुभ्यः क्स्नुप्रत्ययो भवति; **ग्लास्नुः जिष्णुः स्थास्नुः** । चकारात् भुवश्च; **भूष्णुः** । गिच्चायं प्रत्ययो न कित्; तेन स्थ ईकारादेशो न भवति । क्ङिति च (I. 1. 5.) इत्यत्रापि गकारश्चर्त्वभूतोनिर्दिश्यते; तेन गुणो न भवति ।

क्स्नोर्गित्वान्न स्थ ईकारः क्ङितोरीत्वशासनात् ।
गुणाभावस्त्रिषु स्मार्तः श्र्युकोऽनिट्त्वं गकोरितोः ॥

अन्वार्थः—क्स्नुप्रत्ययस्य गित्वात् गकारस्त्वात् घुमास्थेत्यादिना क्ङिति प्रत्यये परतो विधीयमानमीत्वं तिष्ठतेर्न भवति; जिष्णुरित्यत्र गुणः कस्मान्न भवति इत्यत्राह गुणाभावः त्रिषु स्मार्त इति कित्–गित्–ङित्सु प्रत्ययेषु परतः इत्यर्थः—ननु भूष्णुरित्यत्र कथमिट् प्रतिषेधः? तत्राह श्र्युको निट्त्वं गको रितोरिति ककारगकारयोः प्रत्यययोरितोरित्यर्थः । सर्वत्र गकारस्य प्रश्लिष्ट निर्देशोद्रष्टव्यः । **त्रसि गृधि धृषि क्षिपेः क्नुः** (III. 2. 140.)—त्रस्यादिभ्यस्ताच्छील्यादिषु क्नु प्रत्ययो भवति: **त्रस्नुः गृध्नुः धृष्णुः क्षिप्नुः । शमित्यष्टाभ्यो घिनुण्** (III. 2. 141.)—इति शब्दः आद्यर्थे वर्तते: शमादिभ्योऽष्टाभ्यो धातुभ्यो घिनुण् प्रत्ययो भवति । शम उपशम इत्यतः प्रभृति मदीहर्षे इत्येवमन्तः शमादिः दिवाद्यन्तर्गणः । घकारः उत्तरत्र कुत्वार्थः; उकार उच्चारणार्थः: **शमी दमी** इत्यादि । सम्पृचानुरुधाङ्यमाङ्यस–परिसृ–संसृज–परि–देवि–सञ्ज्वर–परिक्षिप–परिरट–परिवद–परिदह–परिमुह–दुष–द्विष–द्रुह–दुह–युजाक्रीड–विविच–त्यज–रज भजातिचरा पच रामुषाभ्याहनश्च (III. 2. 142.)—घिनुणनुवर्तते; सम्पृचादिभ्यो धातुभ्यो घिनुण् भवति तच्छीलादि विषये; **सम्पर्की, अनुरोधी, आयामी, आयासी, परिसारी, संसर्गी, परिदेवी, सञ्ज्वारी, परिक्षेपी, परिराटी, परिवादी, परिदाही, परिमोही, दोषी, द्वेषी, द्रोही, दोही, योगी, आक्रीडी विवेकी, त्यागी, रागी, भागी, अतिचारी, अपचारी, आमोषी, अभ्याघाती । वौ कष लस कत्थस्रम्भः** (III. 2. 143.)—एभ्यो धातुभ्यो विशब्दे उपपदे घिनुण् भवति; **विकाषी, विलासी, विकत्थी विस्रम्भी ।**

प्रे लप-सृ-द्रु-मथ-वद-वसः (III. 2. 145.)—प्रे उपपदे लपादिभ्यः घिनुण् भवति; **प्रलापी, प्रसारी, प्रद्रावी, प्रमाथी, प्रवादी, प्रवासी**। **निन्द-हिंस-क्लिश-खाद-विनाश-परिक्षिप-परिरट-परिवादि-व्याभाषासूयो वुञ्** (III. 2. 146.)—निन्दादिभ्यो धातुभ्यो वुञ् भवति तच्छीलादिषु; **निन्दकः, हिंसकः, क्लेशकः, खादकः, विनाशकः, परिक्षेपकः, परिराटकः, परिवादकः, व्याभाषकः, असूयकः**। **देविक्रुशोश्चोपसर्गे** (III. 2. 147.)—देवयतेः क्रुशोश्चोपसर्गे उपपदे वुञ् भवति; **आदेवकः, आक्रोशकः**। **चलनशब्दार्थादकर्मकाद्युच्** (III. 2. 148.)—चलनार्थेभ्यः शब्दार्थेभ्यश्चाकर्मकेभ्यो धातुभ्यः युच् प्रत्ययो भवति तच्छीलादिषु; **चलनः, चोपनः**; शब्दार्थेभ्यः—**शब्दनः, रवणः**। अकर्मकादिति किम्? पठिता विद्याम्। **अनुदात्तेतश्चहलादेः** (III. 2. 149.)—अनुदात्तेद्भ्यो धातुभ्यो हलादिभ्यश्च तच्छीलादिष्वर्थेषु युच् प्रत्ययो भवति; वर्तनः, वर्धनः, जुगुप्सनः। अनुदात्तेत इति किम्?—भविता हलादेरिति किम्? एधिता। **जु-चङ्क्रम्य-दन्द्रम्य-सृ-गृधि-ज्वल-शुच-लष-पत-पदः** (III. 2. 150.)—जु-प्रभृतिभ्यो धातुभ्यो युच् प्रत्ययो भवति तच्छीलादिषु विषये; **जवनः, चङ्क्रमणः, दन्द्रमणः, सरणः, गर्धनः, ज्वलनः, शोचनः लषणः, पतनः, पदनः**। **क्रुधमण्डार्थेभ्यश्च** (III. 2. 151.)—क्रुध कोपे मडि भूषायाम् इत्येतदर्थेभ्यो युच् प्रत्ययो भवति; **क्रोधनः, कोपनः, मण्डनः, भूषणः**। **नयः** (III. 2. 152.)—यकारान्ताद्धातोः युच् प्रत्ययो न भवति; **क्नूयिता, क्ष्मायिता**। **सूद-दीप-दीक्षश्च** (III. 2. 153.)—सूदादिभ्यो युच न भवति; **सूदिता, दीपिता, दीक्षिता**। **लष-पत-पद-स्था-भू-वृष-हन-कम-गम-शृभ्य उकञ्**(III. 2. 154.)

—लषादिभ्यो धातुभ्यो उकञ् प्रत्ययो भवति: **अपलाषुकं वृषलसङ्गतम्**: **प्रपातुका** गर्भा भवन्ति: **उपपादुकं** सत्त्वम्: **उपस्थायुका** एनं पशवो भवन्ति: **प्रभावुकम्** अन्नं भवति: **वर्षुकः** पर्जन्यः; **आघातुकं** कापालिकस्य शूलम्: **कामुका** एनं स्त्रियो भवन्ति: **आगामुकं** वाराणसीं रक्ष आहुः: **प्रशारुकं** तीक्ष्णमाहुः । **जल्पभिक्षकुट्टलुण्ठवृङ्ष्षाकन्** (III. 2. 155.)—जल्पादिभ्यः षाकन् प्रत्ययो भवति; **जल्पाकः**, **भिक्षाकः**, **कुट्टाकः**, **लुण्ठाकः**, **वराकः** । **प्रजोरिनिः**, (III. 2. 156.)—प्रपूर्वाज्जवतेः तच्छीलादिषु इनि प्रत्ययो भवति; **प्रजवी** । **जि–दृ–क्षि–विश्र्यर्तीण्वमाव्यथाभ्यम परिभू–प्रसूभ्यश्च** (III. 2. 157.)—जि–प्रभृतिभ्यो धातुभ्यो भवति इनि प्रत्ययः; **जयी**, **दरी**, **क्षयी**, **विश्रयी**, **अत्ययी**, **वमी**, **अव्यथी**, **अभ्यमी**, **परिभवी**, **प्रसवी** । **स्पृहि–गृहि–पति–दयि–निद्रा–तन्द्रा–श्रद्धाभ्य आलुच्** (III. 2. 158.)—एतेभ्यस्तच्छीलादिषु आलुच् प्रत्ययो भवति: **स्पृहयालुः** **गृहयालुः**, **पतयालुः**, **दयालुः**, **निद्रालुः**, **तन्द्रालुः**, **श्रद्धालुः** । आलुचि शीङो ग्रहणं कर्तव्यम् ( वा. )—इति **शयालुः** । **सृघस्यदः क्मरच्** (III. 2. 160.)—सृ घसि अद् इत्येतेभ्यः क्मरच् प्रत्ययोभवति; **सृमरः** **घस्मरः**, **अद्मरः** । **भञ्जभासमिदोघुरच्** (III. 2. 161.)—भञ्ज् भास् मिद् इत्येतेभ्यो घुरच् प्रत्ययो भवति; **भङ्गुरं** काष्ठम्, **भासुरं** ज्योतिः, **मेदुरः** पशुः । **विदिभिदिच्छिदेः कुरच्** (III. 2. 162.) ज्ञानार्थस्य विदेर्ग्रहणं न लाभार्थस्य विदादिभ्यो धातुभ्यः कुरच् प्रत्ययो भवति; **विदुरः** पण्डितः; **भिदुरं** काष्ठम्, **छिदुरा** रज्जुः । **व्यधेः संप्रसारणं कुरच्च वक्तव्यः** ( वा. )—इति **विधुरः** । **इण्नशिजिसर्तिभ्यः क्वरप्** (III. 2. 163.)—इण् णशि जि सर्ति इत्येतेभ्यः क्वरप् प्रत्ययो

भवति; इत्वरः, नश्वरः, जित्वरः, सृत्वरः । **गत्वरश्च** (III. 2. 164.) —गत्वरः इति निपात्यते; गमेरनुनासिकलोपः क्वरप् च; **गत्वरः** । **जागरूकः** (III. 2. 165.)—जागर्तेरूकप्रत्ययो भवति; **जागरूकः** । **यज–जप–दशां यङः** (III. 2. 166.)—यज जप दश इत्येतेषां यङन्तानामूकप्रत्ययो भवति; **यायजूकः**, **जञ्जपूकः**, **दन्दशूकः** । **नमि-कम्पिस्म्यजसकमहिंसदीपो रः** (III. 2. 167.)—नमि कम्पि स्मि अजस कम हिंस दीप इत्येतेभ्योरप्रत्ययो भवति; **नम्रं** काष्ठम्, **कम्प्रा** शाखा, **स्मेरं** मुखम्, **अजस्रं** सन्ततम्, **कम्राः** युवतयः, **हिंस्रं** रक्षः, **दीप्रं** काष्ठम् । अजस्रमिति जसु मोक्षणे इत्येष नञ् पूर्वः क्रियासातत्येवर्तते । **सनाशंस-भिक्ष उः** (III. 2. 168.)—सन् प्रत्ययो गृह्यते न सनिधातुः, अनभिधानात् व्याप्तिन्यायाद्वा; सन्नन्तेभ्यो धातुभ्यः, आशंसेर्भिक्षेश्च उप्रत्ययो भवति ताच्छील्यादिष्वर्थेषु; **चिकीर्षुः**, **आशंसुः**, **भिक्षुः** । आङः शसि इच्छायामित्यस्य ग्रहणं न शंसेः स्तुत्यर्थस्य । **शॄवन्द्योरारुः** (III. 2. 173.)—शॄ हिंसायां, वदि अभिवादनस्तुत्योः; आभ्यां आरुप्रत्ययो भवति; **शरारुः** **वन्दारुः** । **भियः क्रुक्लुकनौ** (III. 2. 174.)—ञिभी भये अस्मात् क्रु क्लुकनौ प्रत्ययौ भवतः **भीरुः** **भीलुकः** । **क्रुकन्नपि वक्तव्यः** ( वा. )—**भीरुकः** । **स्थेश भासपिस कसो वरच्** (III. 2. 175.)—स्था ईश भास पिस कस इत्येतेभ्यः वरच् प्रत्ययो भवति; **स्थावरः** **ईश्वरः** **भास्वरः** **पेस्वरः** **विकस्वरः** । **यश्चयङः** (III. 2. 176.)—या प्रापणे अस्माद्यङन्ता द्वरच् प्रत्ययो भवति; **यायावरः** । **भ्राजभास धुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्** (III. 2. 177.)—भ्राजादिभ्यो धातुभ्यः क्विप् प्रत्ययो भवति ताच्छील्यादिषु; **विभ्राट्** **भाः**, **धूः** **धुरौ**, **विद्युत्**, **ऊर्क्**, **पूः**, जवते दीर्घत्वं च निपात्यते

जूः जुवौ, ग्रावस्तुत् ग्रावस्तुतौ । अन्येभ्योऽपि दृश्यते (III. 2. 178.)—अन्येभ्यो धातुभ्यः क्विप्प्रत्ययो भवति; भित्, छित् । दृशिग्रहणं विध्यन्तरोपसङ्ग्रहणार्थम् । क्वचिद्दीर्घः : क्वचिद्द्विर्वचनं क्वचित्सम्प्रसारणम् । तथाचाह—क्विब्वचि प्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घो ऽसम्प्रसारणञ्च ( वा. ) इति वचि वाक् प्रच्छि शब्दप्राट्, आयतस्तूः, कटप्रूः, जूः, श्रीः । जुग्रहणेन जवनार्थः त्राजादिसूत्र एव गृहीतत्वात् । द्युति गमिजुहोतीनां द्विर्वचनम् ( वा. ) इति—दिद्युत्, जगत्, जुहोतेर्दीर्घत्वञ्च जुहूः । दृ भये इत्येतस्य ह्रस्वश्च द्वेच (वा.)—इति ददृत् । ध्यायतेस्सम्प्रसारणम् ( वा. )—इति धीः । धः कर्मणि ष्ट्रन् (III. 2. 181.)—धयतेर्दधातेश्च कर्मणि कारके ष्ट्रन् प्रत्ययो भवति; धयति दधाति वा तां धात्री । दाम्नी शसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे (III. 2. 182.)—एतेभ्यो धातुभ्यः करणे कारके ष्ट्रन् भवति; दात्रम्, नेत्रम्, शस्त्रम्, योत्रम्, योक्त्रम्, स्तोत्रम्, तोत्रम्, सेत्रम्, सेक्त्रम्, मेढ्रम्, पत्त्रम्, दंष्ट्रा, नद्ध्री । हलसूकरयोः पुवः (III. 2. 183.)—पूधातोः करणे ष्ट्रन्; हलस्य सूकरस्य वा. पोत्रम् । अर्ति लूधूसूखन सहचर इत्रः (III. 2. 184.)—ऋ गतौ, लूञ्, धू, षू, खन, षह, चरतिर्गतिभक्ष्यार्थः इत्येतेभ्यः करणे इत्रप्रत्ययो भवति; अरित्रम्, लवित्रम्, धवित्रम्, सवित्रम्, खनित्रम्; चरित्रम्; पुवस्संज्ञायाम् (III. 2. 185.)—पुवो धातोः करणे इत्रप्रत्ययो भवति समुदायेन चेत् संज्ञा गम्यते; दर्भः पवित्रम् । उणादयो बहुलम् (III. 3. 1.)—वर्तमान इति च संज्ञायामित्येव; उणादयः प्रत्यया भवन्ति वर्तमाने धात्वर्थे संज्ञायां विषये ते च बहुळं भवन्ति; यतो विहितास्ततोऽन्यत्रापि भवन्ति; केचिद्विहिता अपि प्रत्ययाः प्रयोगत

उन्नीयन्ते । **कृ वा पाजिमिस्वदिसाध्यशूभ्य उण्** ( उ. I. 1. )—करोतीति कारुः ; वायुः, पायुः, जायुः, मायुः, स्वादुः, साधुः, आशुः । **गमेर्डोः** ( उ. II. 67. )—गमेर्डोप्रत्ययो भवति ; **गौः** । **सर्वधातुभ्योऽसुन्** ( उ. IV. 188. )—**सरः, तेजः, मनः, तमः** इत्यादि । यदभिधेयव्याप्तमभिधानरत्नजातं तदशेषमुणादिसागरान्तर्गतं बोद्धव्यम् । **तुमुण्वुलौ क्रियायां क्रियार्थायाम्** (III. 3. 10.)—क्रियार्थायां क्रियायां उपपदे धातोर्भविष्यति काले तुमुण्वुलौ प्रत्ययौ भवतः; **भोक्तुं** व्रजति, **भोजको** व्रजति । भुजि क्रियार्थो व्रजिरत्रोपपदम् । क्रियायामिति किम्? भिक्षिष्ये इत्यस्य जटाः । क्रियार्थायामिति किम्? धावतस्ते पतिष्यति दण्डः । **भाववचनाश्च** (III. 3. 11.)—भविष्यतीत्येव ; भावे इति प्रकृत्यर्थे विहिता घञादयस्ते भाववचना भविष्यति काले क्रियायामुपपदे क्रियार्थायां भवन्ति ; **पाकाय** व्रजति, **त्यागाय** व्रजति, इत्यादि । **अण् कर्मणि च** (III. 3. 12.)—भविष्यतीत्येव ; अण् प्रत्ययो भवति धातोः कर्मण्युपपदे क्रियायां क्रियार्थायाञ्च ; कर्मण्यण् (III. 2. 1.) इति सामान्यविहितोऽपि वासरूपविधेरभावात् ण्वुला बाधितः पुनरण्विधीयते ; **काण्डलावो** व्रजति, **कम्बलदायो** व्रजति । **पदरुजविशस्पृशो घञ्** (III. 3. 16.)—भविष्यतीति निवृत्तम् ; इत उत्तरं त्रिषु कालेषु प्रत्ययाभवन्ति ; पदादिभ्यो धातुभ्यो घञ् प्रत्ययो भवति ; पद्यतेऽसाविति **पादः** ; चजोरित्यादिना कुत्वम्, रुजत्यसौ **रोगः** विशत्यसौ **वेशः**, स्पृशतीति **स्पर्शः** । **सृ स्थिरे** (III. 3. 17.)—सर्तेर्धातोः स्थिरे कर्तरि घञ् प्रत्ययो भवति ; स्थिर इति कालान्तरस्थायी पदार्थ उच्यते ; सचिरं तिष्ठन् कालान्तरं सरतीति धात्वर्थस्य कर्ता युज्यते ; **चन्दनसारः** । स्थिर इति किम्? सर्ता सारकः । **व्याधिमत्स्यबलेष्विति वक्तव्यम्**

( वा. ); अतीसारो व्याधिः, विसारो मत्स्यः, सारो बलम् । **भावे** (III. 3. 18.)—भावे वाच्ये धातोर्घञ् प्रत्ययो भवति : पाकः त्यागः । क्रियासामान्यवाची भवति ; तेनार्थनिर्देशः क्रियमाणः सर्वधातुविषयः कृतो भवति ; धात्वर्थश्च धातुनैव उच्यते ; यस्तस्य सिद्धतानामधर्मस्तत्र घञादयः प्रत्यया विधीयन्ते । पुंल्लिङ्गैकवचनञ्चात्र न तन्त्रं लिङ्गान्तरे वचनान्तरे च प्रत्यया भवन्त्येव ; पक्तिः, पचनं, पाकः पाकौ पाकाः, इत्यादि । **अकर्तरि च कारके संज्ञायाम्** (III. 3. 19.)—कर्तृवर्जितेऽन्यस्मिन् कारके संज्ञायां विषये धातो घञ् प्रत्ययो भवति ; प्रास्यति तमिति प्रासः, प्रसीव्यति तमिति प्रसेवः, आहरन्ति तस्मादसमिति आहारः ; प्रतुद्यतेऽनेनेति प्रतोदः ; दीयतेऽस्मै दायः ; प्रपतत्यस्मिन्निति प्रपादः । अकर्तरि इति किम् ? मिषत्यसौ मेषः इत्यत्र पचाद्यच् । संज्ञायामिति किम् ? कर्तव्यः कटः । चकारस्संज्ञाव्यभिचारार्थः को भवतादायो दत्तः, भवतालाभो लब्धः । कारकग्रहणं पर्युदासे न कर्तव्यम् ; तत् क्रियते, प्रसज्यप्रतिषेधेऽपि समासोऽस्तीति ज्ञापनार्थम् । आदेच उपदेशेऽशितीति (VI. 1. 45.) । **इङश्च** (III. 3. 21.)—इङश्चधातोर्घञ् प्रत्ययो भवति : अचोपवादः ; **अध्यायः**, उपेत्य अस्मात् अधीते इति **उपाध्यायः**; **अपादानेस्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्** ( वा. )—**उपाध्याया, उपाध्यायी** । **शॄ वायुवर्णनिवृतेषु** ( वा. )—**शारो** वायुर्वा वर्णो वा निवृतं वा । **उपसर्गे रुवः** (III. 3. 22.)—उपसर्ग उपपदे रौतेर्धातोः घञ् प्रत्ययो भवति ; **संरावः, उपरावः** । उपसर्गे किम् ? रवः । **समि युद्रुदुवः** (III. 3. 23.)—समि उपपदे यु द्रु दु इत्येतेषां घञ् ; **संयावः, सन्द्रावः, सन्दावः** । **श्रिणीभुवोऽनुपसर्गे** (III. 3. 24.)—श्रि णी भू इत्येतेभ्यो धातुभ्यः

अनुपसर्गेभ्यो घञ्: अजपोरपवादः; **श्रायः**, **नायः**, **भावः** । अनुपसर्ग इति किम्? प्रश्रयः, प्रणयः, प्रभवः । **वौ क्षु श्रुवः** (III. 3. 25.)—वावुपपदे क्षु श्रु इत्येतयोः घञ्; **विक्षावः**, **विश्रावः** । वाविति किम्? क्षवः, श्रवः । **अवोदोर्नियः** (III. 3. 26.)—अव उत् इत्यनयोरुपपदयोः नयतेः घञ् भवति; **अवनायः**, **उन्नायः** । **प्रे द्रुस्तुस्रुवः** (III. 3. 27.)—प्रशब्दे उपपदे द्रु स्रु स्तु इत्येतेभ्यः घञ् प्रत्ययो भवति; अपोऽपवादः; **प्रद्रावः**, **प्रस्तावः**, **प्रस्रावः** । प्र इति किम्? द्रवः, स्तवः, स्रवः । **निरभ्योः पूल्वोः** (III. 3. 28.)—इति पूङ् पूञोः सामान्येन ग्रहणम्: लूञ् छेदने: यथासङ्ख्यमुपसर्गसम्बन्धः; निरभिपूर्वयोः पू लू इत्यनयोः घञ्; **निष्पावः**, **अभिलावः** । निरभ्योरिति किम्? पवः, लवः । **उन्योर्ग्रः** (III. 2. 29.)—गॄ निगरणे, गॄशब्दे, द्वयोरपि ग्रहणम्; उत् नि इत्येतयोरुपपदयोः गॄ इत्यस्मात् घञ् प्रत्ययो भवति; **उद्गारः** समुद्रस्य, **निगारो** मत्स्यस्य । उन्योरिति किम्? गरः । **परौ भुवोऽवज्ञाने** (III. 3. 55.)—विभाषेत्येव; परिशब्द उपपदे भवतेः विभाषा घञ् प्रत्ययो भवति अवज्ञाने गम्यमाने: अवज्ञानमसत्कारः; **परिभवः**, **परिभावः** । अवज्ञाने इति किम्? परितो भवनं परिभवः । **एरच्** (III. 3. 56.)—इवर्णान्ताद्धातोर्भावे अकर्तरिच कारके संज्ञायां विषये अच् प्रत्ययो भवति; घञोऽपवादः; **चयः**, **जयः** । **ॠदोरप्** (III. 3. 57.)—ॠकारान्तेभ्यो उवर्णान्तेभ्यो धातुभ्यः अप प्रत्ययो भवति; घञोऽपवादः; पित् करणं स्वरार्थम्; **करः**, **गरः**; **यवः** **पवः** । **ग्रह वृद निश्चिगमश्च** (III. 3. 58.)—ग्रहादिभ्यः अप् प्रत्ययो भवति; **ग्रहः**, **वरः**, **दरः**, **निश्चयः**, **गमः** । **वशिरण्योरूपसंङ्ख्यानम्** ( वा. )—**वशः**, **रणः** । **ड्वितः क्त्रिः** (III. 3. 88.)—

भावे अकर्तरि चेति सर्वमनुवर्तते; ड्डु इत् यस्य तस्मात् ड्वितो धातोः क्त्रिप्रत्ययो भवति; क्त्रेर्मम्नित्यम् (IV. 4. 20.) इति वचनात् क्त्रिप्रत्ययान्तात् मप् प्रत्ययो नित्यं भवति: पक्त्रिमम्, कृत्रिमम्, दत्त्रिमम्, इत्यादि। ट्वितोऽथुच् (III. 3. 89.)—टु इत् यस्य तस्मात् ट्वितो धातोः अथुच् प्रत्ययो भवति; वेपथुः, श्वयथुः, क्षवथुः, वमथुः, इत्यादि। यज–याच–यत–विच्छ–प्रच्छ–रक्षो–नङ् (III. 3. 90.) —यजादिभ्यो नङ् प्रत्ययो भवति; ङकारो गुणवृद्धिप्रतिषेधार्थः; यज्ञः, याच्ञा, यत्नः, विश्नः, प्रश्नः, रक्ष्णः। स्वपो नन् (III. 3. 91.)—स्वपेर्नन् प्रत्ययो भवति: स्वप्नः। उपसर्गे घोः किः (III. 3. 92.)—उपसर्गे उपपदे घुसंज्ञकेभ्यः कि प्रत्ययो भवति; कित्करणमातोलोप इत्यालोपार्थम्: आतो लोप इटि च (VI. 4. 64.) इत्याकारलोपः; आदिः, आधिः, प्रधिः, प्रदिः, उपाधिः, सन्धिः। कर्मण्यधिकरणे च (III. 3. 93.)—कर्मण्युपपदे घुसंज्ञकेभ्योऽधिकरणे कारके किप्रत्ययो भवति: जलं धीयतेऽस्मिन्निति जलधिः, इषुधिः। कर्मव्यतिहारे णच् स्त्रियाम् (III. 3. 43.)—कर्मव्यतिहारः क्रियाव्यतिहारः परस्परकरणम्; कर्मव्यतिहारे गम्यमाने धातोर्णच् प्रत्ययो भवति स्त्रीलिङ्गे भावे: चकारो णच स्त्रियामञिति (V. 4. 14.) विशेषणार्थः। णचः स्त्रियामञ् (V. 4. 14.)—णजन्तात् स्त्रियामञ् प्रत्ययस्स्यात्। तद्धितेष्वचामादेः (VII. 2. 117.) इति वृद्धिः; टिड्ढाणञिति (IV. 1. 15.) ङीप्; व्यावक्रोशी, व्यावलेखी, व्यावभाषी, व्यावहासी। अभिविधौ भाव इनुण् (III. 3. 44.)—अभिविधिः अभिव्याप्तिः क्रियागुणाभ्यां कार्त्स्न्येन सम्बन्धः; अभिविधौ गम्यमाने धातोर्भावे इनुण् प्रत्ययो भवति। अणिनुणः (V. 4. 15.)—इनुण् प्रत्ययान्तादण् प्रत्ययो भवति: सांराविणं

आसना, श्रन्थना । **घट्टिवन्दिविदिभ्य उपसंख्यानम्** (वा.)—इति **घट्टना बन्धना, वेदना । इषेरनिच्छार्थस्य युज्वक्तव्यः** ( वा. )—इति **अध्येषणा, अन्वेषणा । परेर्वा** ( वा. )—इति **पर्येषणा**; पक्षे **परीष्टिः । रोगाख्यायां ण्वुल्बहुळम्** (III. 3. 108.)—रोगाख्यायां गम्यमानायां धातोर्ण्वुल् बहुळं भवति: क्तिनादिनामपवादः; प्रत्ययस्थात्कात्पूर्वस्येति (VII. 3. 44.) ईत्वम्; **प्रच्छर्दिका**; **विचर्चिका** । धात्वर्थनिर्देशेण्वुल्वक्तव्यः (वा.)—इति **आशिका, शायिका, वर्तते** । **इक्श्तिपौ धातुनिर्देशे वक्तव्यौ** (वा.)—इति **भिदिः, छिदिः, पचतिः यजतिः । वर्णात्कारः** (वा.)—इति वर्णनिर्देशे कारप्रत्ययो भवति; **इकारः, ईकारः, उकारः, ऊकारः । रादिफः** ( वा. )—**रेफः । मत्वर्थाच्छः** ( वा. ); आयनेयीत्यादिना (VII. 1. 2.) ईयादादेशः; **मत्वर्थीयः । इञजादिभ्यः** ( वा. )—इति **आजिः, आदिः, आतिः** । **इत् कृष्यादिभ्यः** ( वा. )—इति कृषिः, किरिः, गिरिः । इत्यादयश्च सर्वे बहुळवचनात् सिद्धाः । **संज्ञायाम्** (III. 3. 109.)—संज्ञायां विषये धातोर्ण्वुल्प्रत्ययो भवति; **उद्दालक पुष्पभञ्जिका, वरणपुष्पप्रचायिका, अशोकशाखाभञ्जिका, सालभञ्जिका**, इत्यादि । **विभाषाख्यानपरिप्रश्नयोरिञ्च** (III. 3. 110.)—ण्वुलित्येव; पूर्वम् परिप्रश्नः पश्चादाख्यानम्; सूत्रे त्वल्पाच्तरस्य पूर्वनिपातः; परिप्रश्ने आख्याने गम्यमाने धातोरिञ् प्रत्ययो भवति; चकाराण्ण्वुल्; विभाषाग्रहणादपरोऽपि यः प्राप्नोति सोपि भवति; परिप्रश्ने तावत्—**कां त्वं कारिमकार्षीः, कां कारिकाम्, कां क्रियाम्, कां कृत्याम्, कां कृतिम्**; आख्याने तावत्—**सर्वांकारिमकार्षम्, सर्वां कारिकाम्, सर्वां क्रियाम्, सर्वां कृत्याम्, सर्वां कृतिम्, कां त्वं गणिमजीगणः सर्वां गणिकाम्,**

न्वां गणनाम्, एवं कांपाचिम्, कां पाठिम्, कां याजिमितिद्रष्टव्यम्। आख्यानपरिप्रश्नयोरिति किम्? कृतिः स्तुतिः। **पर्यायार्हर्णोत्पत्तिषु, ण्वुच्** (III. 3. 111.)—पर्यायः परिपाटी अर्हणमर्हः ऋणं तत् यत्परस्मै धार्यते, उत्पत्तिर्जन्म–एतेष्वर्थेषु गम्यमानेषु धातोः ण्वुच् प्रत्ययो भवति; क्तिनादीनामपवादः; पर्याये तावत्–भवत **श्शायिका** भवतः **आसिका**, भवतोऽग्र**ग्रासिका**; अर्हे अर्हति भवान् **इक्षुभक्षिकाम्**; ऋणे **ओदनभोजिकाम्**, पयः **पायिकाम्** वा; मे धारयति; उत्पत्तौ–इक्षु **भक्षिका** मे उदपादि, **ओदनभोजिका**, **पयः पायिका**। विभाषेत्येव–चिकीर्षा उत्पद्यते, जिहीर्षा उत्पद्यते। ण्वुलि प्रकृते प्रत्ययान्तरग्रहणं स्वरार्थम्। **आक्रोशे नञ्यनिः** (III. 3. 112.)—विभाषेति निवृत्तम्; आक्रोशश्शापनम्, आक्रोशे गम्यमाने नञ्युपपदे धातोरनिप्रत्ययो भवति; क्तिन्नादीनामपवादः; **अकरणिर्हन्त**ते वृषलभूयात्; **अजननिः**, **अप्रयाणिः**। आक्रोश इति किम्? अकृतिस्तस्य कटस्य। नञि इति किम्? मृतिस्ते वृषल। **कृत्यल्युटो बहुलम्** (III. 3. 113.)—इति कृत्याः ल्युटश्च बहुलं भवन्ति; बाहुळकात् यत्र विहितास्ततोऽन्यत्रापि भवन्ति; भावकर्मणोः कृत्या उक्ताः कारकान्तरेऽपि भवन्ति; **स्नानीयं चूर्णम्**, **दानीयो** ब्राह्मणः। करणाधिकरणभावेषु ल्युट्, ततोऽन्यत्रापि भवति; कर्मणि **अपसेचनम्**, **अवस्रावणम्**, **राजभोजनाः** शालयः, **राजाच्छादनानि** वस्त्राणि **प्रस्कन्दनम् प्रपतनम्**। बहुळवचनादन्येऽपि कृतः यथा प्राप्तमभिधेयं व्यभिचरन्ति; पादाभ्यां ह्रियते **पादहारकः**, गळे चोप्यत इति **गळेचोपकः**।

**नपुंसके भावे क्तः** (III. 3. 114.) इत्यधिकृत्य, **ल्युट् च** (III.

3. 115.)—नपुंसके भावे धातोर्ल्युट् प्रत्ययो भवति ; **हसनम्** छात्रस्य **शोभनम्, जल्पनम्, श्रयणम्, आसनम्** इत्यादि । **करणाधिकरणयोश्च** (III. 3. 117.)—करणेऽधिकरणे च कारके धातोर्ल्युट् प्रत्ययो भवति ; करणे—**इध्मप्रव्रश्चनः, पलाशशातनः; शदेरगतौ तः** (VII. 3. 42.) इति तकारादेशः ; अधिकरणे—**गोदोहनी, सक्तुधानी** । **पुंसि संज्ञायां घः प्रायेण** (III. 3. 118.)—पुंल्लिंगयोः करणाधिकरणयोः अभिधेययो-र्घप्रत्ययो भवति समुदायेन चेत् संज्ञा गम्यते ः प्रायग्रहणमकात्स्न्यार्थम् ; **च्छादेर्घेऽद्व्युपसर्गस्य** (VI. 4. 96.)—छादेरङ्गस्य अद्व्युपसर्गस्य घ-प्रत्यये परत उपधाह्रस्वो भवति ; णिलोपः; **उरच्छदः** ; अधिकरणे खल्वपि –एत्य तस्मिन् कुर्वन्तीति **आकरः आलयः** इत्यादि । **अवेतॄस्त्रोर्घञ्** (III. 3. 120.)—अव उपपदे तरतेःस्तृणातेश्च घञ् प्रत्ययो भवति ; **अवतारः अवस्तारः** । **हलश्च** (III. 3. 121.)—हलन्ताद्धातोः करणा-धिकरणयोः संज्ञायां प्रायेण घञ् प्रत्ययो भवति : **लेशः, वेदः, वेशः, बन्धः** इत्यादि । उपसर्गस्य घञ्यमनुष्ये बहुळम् (VI. 3. 122.)—उपसर्गस्य घञन्त उत्तरपदे अमनुष्येभिधेये बहुळं दीर्घो भवति ; **अपा-मार्गः वीमार्गः** । **अध्यायन्यायोद्यावसंहाराधारावायाश्च** (III. 3. 122.) अध्यायादयश्शब्दा निपात्यन्ते ; पुंसि संज्ञायां घे प्राप्ते घञ्विधी यते ; अहलन्तार्थ आरम्भः ; अधीयते तस्मिन् **अध्यायः**, नीयतेऽनेनेति **न्यायः**, उद्युवन्त्यस्मिन्निति **उद्यावः**, संह्रियतेनेन **संहारः**, आध्रियन्तेऽस्मिन्नाधारः, अवयन्त्यस्मिन् **आवायः** ; चकारोनुक्तसमुच्चयार्थः ; **अवहारः**

**ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्** (III. 3. 126.)—करणाधिकरणयोः पुंसिसंज्ञायामिति निवृत्तम् ; ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषूपपदेषु धातोः खल्प्रत्ययो भवति ; कृच्छ्रं दुःखम् ; तद्दुरोविशेषणम् ; अकृच्छ्रं सुखं

नदितरयोर्विशेषणम् ; **ईषत्करः** घटो भवता **दुष्करः**, **सुकरः**, **ईषत् भोज** ओदनं भवता **दुर्भोजः**, **सुभोजः** । ईषदादिष्विति किम् ? कृच्छ्रेण कार्यम् : लकारः स्वरार्थः ; खित्करणमुत्तरत्वमुमर्थम् । **कर्तृकर्मणोश्च भूकृञोः** (III. 3. 127.)—भवतेः करोतेश्च कर्तृकर्मणोरुपपदयोः चकारादीष दादिषु च खल्प्रत्ययो भवति ; अरुर्द्विषदजन्तस्येति मुमागमः ; **ईषदाढ्यम्भवं** भवता **दुराढ्यंभवम्**; कृञ्–**ईषदाढ्यङ्करः** देवदत्तो भवता, **दुराढ्यङ्करः**, **स्वाढ्यङ्करः** । **आतो युच्** (III. 3. 128.)—ईषदादिषूपपदेषु आकारान्तेभ्यो धातुभ्यो युच् प्रत्ययो भवति ; खलोऽपवादः **ईषत् पानः** सोमो भवता, **दुष्पानः**, **सुपानः**, **ईषद्दानः** गौर्भवता, **दुर्दानः**, **सुदानः**–इत्यादि सर्वमवगन्तव्यम् । **भाषायां शासि युधि दृशि धृषि मृषिभ्यो युज्वक्तव्यः** (III. 3. 130. वा.) **दुश्शासनः**, **दुर्योधनः**, **दुर्दर्शनः**, **दुर्धर्षणः**, **दुर्मर्षणः** । **अलं खल्वोः प्रतिषेधयोः प्राचां क्त्वा** (III. 4. 18.)—अलं खलु इत्येनयोः प्रतिषेधवाचिनोरुपपदयोः क्त्वा प्रत्ययो भवति प्राचामाचार्याणाम्मतेन : **क्त्वातोसुन्कसुनः** (I. 1. 40.)—क्त्वा, तोसुन्, कसुन्, इत्येवमन्तं शब्दरूपमव्ययसंज्ञं भवति ; **अलङ्कृत्वा**, **खलुकृत्वा**, **अलं बाले रुदित्वा** । अलं खल्वोरिति किम् ? न दातव्यं भवता । प्रतिषेधयोरिति किम ? अलङ्कारः । प्राचांग्रहणं विकल्पार्थम् । **उदीचांमाङोव्यतिहारे** (III. 4. 19.)—क्त्वानुवर्तते माङो धातोर्व्यतीहारे वर्तमानात् उदीचां मते क्त्वा प्रत्ययो भवति : **अपमित्य याचते**, **अपमित्य हरति** : अपूर्वकालत्वादप्राप्तः क्त्वा विधीयते उदीचांग्रहणाद्यथाप्राप्तमपि भवति ; याचित्वा अपमयते ; **समानकर्तृकयोः पूर्वकाले** (III. 4. 21.)—समानः कर्ताययोः धात्वर्थयोः तत्र पूर्वकाले वर्तमानाद्धातोः क्त्वा प्रत्ययो भवति ; शक्तिशक्तिमतोः भेदस्याविवक्षि-

नत्वात् समान कर्तृकता, भुक्त्वा व्रजति, **पीत्वा** व्रजति ; समान कर्तृकयो-रिति द्विवचनस्य अतन्त्रत्वा देव इह बहुष्वपि भवति

"गत्वा स्नात्वा च दध्यन्नं भुक्त्वा पीत्वाम्बु शीतलम् ।
वटे शयित्वा क्रीडित्वा यातो मन्दातपे सुखी ॥"

समानकर्तृकयोरिति किम्? भुक्तवति ब्राह्मणे व्रजति देवदत्तः । पूर्वकाल इति किम्? व्रजति च जल्पति च । **आस्यं व्यादाय स्वपिति सम्मील्यहसतीत्युपसंख्यानमपूर्वकालत्वात्** ( वा. ) **नक्त्वा सेट्** (I. 2. 18.)—क्त्वा प्रत्ययस्सेट् न किद्भवति ; नन्दित्वेत्यत्र इदित्वादनुनासिक लोपाभावः ; शयित्वेत्येवमादौ गुणप्रतिषेधाभावः ; **नन्दित्वा, शयित्वा, कारयित्वा, जारयित्वा, चोरयित्वा** । **उदितो वा** (VII. 2. 56.)—उदितो धातोः क्त्वाप्रत्ययस्य वा इडागमो भवति ; **अनुनासिकस्य क्वि-झलोः क्ङिति** (VI. 4. 15.) इति दीर्घः ; **शान्त्वा, शमित्वा, तान्त्वा, तमित्वा, वृत्वा, वर्तित्वा, वृद्ध्वा, वर्धित्वा, शस्त्वा, शासित्वा** । **च्छ्वोश्शूडनुनासिके च** (VI. 4. 19.) इति ऊठ् ; द्यूत्वा दिवित्वा । **रलो व्युपधाद्धलादेस्संश्च** (I. 2. 26.)—उश्च इश्च वी, वी उपधे यस्यासौ व्युपधः, उकारोपधादिकारोपधाच्च धातोर्हलादेरलन्तात् परौ संश्च क्त्वाच सेटौ वा कितौ भवतः ; **द्युतित्वा द्योतित्वा, लिखित्वा लेखित्वा** । **नोपधात्थफान्ताद्वा** (I. 2. 23.)—नकारोपधाद्धातोः थकारान्तात् फकारान्ताच्च परतः क्त्वा प्रत्ययः सेट् वा नकिद्भवति ; **ग्रथित्वा, ग्रन्थित्वा, गुफित्वा गुम्फित्वा** । **वञ्चिलुञ्च्यृतश्च** (I. 2. 24.)—वञ्चि, लुञ्चि, ऋत् इत्येतेभ्यः परः क्त्वा प्रत्ययः सेड्वा न किद्भवति ; **वचित्वा, वञ्चित्वा, लुचित्वा लुञ्चित्वा, ऋतित्वा अर्तित्वा** । **ऋते**

रीयङ् (III. 1. 29.) इतो यङ् : आयादय आर्धधातुके वा (III. 1. 31.) इति आर्धधातुके विकल्पितः स यत्र पक्षे नास्ति तवैतदुदाहरणम् । **तृषि मृषि कृशेः काश्यपस्य** (I. 2. 25.)—तृषि, मृषि, कृशि इत्येतेभ्यः परः क्त्वाप्रत्ययस्सेड्वा न किद्भवति काश्यपस्याचार्यस्य मतेन : तृषित्वा तर्षित्वा, मृषित्वा मर्षित्वा, कृशित्वा, कर्शित्वा । **मृडमृद गुधकुष क्लिश वदवसः क्त्वा** (I. 2. 7.)—मृडादिभ्यो धातुभ्यः परः क्त्वाप्रत्ययः सेट् किद्भवति : नक्त्वासेडिति प्रतिषेधस्यापवादः : मृडित्वा, मृदित्वा, गुधित्वा, कुषित्वा, क्लिशित्वा, उषित्वा, उदित्वा । **क्त्विस्कन्दिस्यन्दोः** (VI. 4. 31.)—क्त्वाप्रत्यये परतः स्कन्द–स्यन्द–इत्येतयोः नकारस्य लोपो न भवति : स्कन्त्वा, स्यन्त्वा । **जान्तनशां विभाषा** (VI. 4. 32.)—जकारान्तानामङ्गानान्नशेश्च क्त्वाप्रत्यये परतो विभाषा नकारलोपो नस्यात्; रङ्क्त्वा, पक्षे रक्त्वा, भङ्क्त्वा पक्षे भक्त्वा, नंष्ट्वा पक्षे नष्ट्वा, इट् पक्षे नशित्वा । **तनोतेर्विभाषा** (VI. 4. 17.) इत्यधिकृत्य, **क्रमश्चक्त्वि** (VI. 4. 18.)—क्रम उपधाया दीर्घो भवति क्त्वाप्रत्यये झलादौ परतः विभाषा : क्रन्त्वा क्रान्त्वा, झलित्येव क्रमित्वा । **क्लिशः क्त्वानिष्ठयोः** (VII. 2. 50.)—क्लिशेः क्त्वानिष्ठयोः वा इडागमो भवति ; क्लिशित्वा क्लिष्ट्वा । **पूङश्च** (VII. 2. 51.)— इति वेट् : पूत्वा पवित्वा । **वसतिक्षुधोरिट्** (VII. 2. 52.) इति इडागमः उषित्वा, क्षुधित्वा । **अञ्चेः पूजायाम्** (VII. 2. 53.)—अञ्चेः पूजायामर्थे क्त्वानिष्ठयोरिडागमो भवति : अञ्चित्वा । **लुभोविमोहने** (VII. 2. 54.)—लुभेर्धातोः विमोहनेऽर्थे क्त्वानिष्ठयोरिडागमो भवति : लुभित्वा लोभित्वा । विमोहन इति किम् ? लुब्धो वृषलः शीतेन पीडित इत्यर्थः । **जॄव्रश्च्योः क्त्वि** (VII. 2. 55.)—जॄ व्रश्चौ इत्येतयोः क्त्वा

प्रत्यये परतः इडागमो भवति ; **जरित्वा जरीत्वा**, व्रश्चित्वा । **दधातेर्हिः** (VII. 4. 42.)—इत्यधिकृत्य, **जहातेश्च क्त्वि** (VII. 4. 43.)—जहातेरङ्गस्य क्त्वा प्रत्यये परतः हि इत्ययमादेशो भवति । **हित्वा** संङ्गं वनं गतः । **अदोजग्धिर्ल्यप्तिकिति** (II. 4. 36.) इति जग्धिरादेशः **जग्ध्वा, गत्वा, नत्वा, मत्वा** ; अनुनासिकलोपः : घुमास्थेत्यादिना ईत्वम् **पीत्वा** इत्यादि ॥

**समासेऽनञ् पूर्वेक्त्वोल्यप्** (VII. 1. 37.)—अनञ् पूर्वसमासे क्त्वा प्रत्ययस्य ल्यप् इत्ययमादेशो भवति ; **अभिभूयास्थितः**, आदाय गन्ता । **ह्रस्वस्य पिति किति तुक्** (VI. 1. 71.) इति तुगागमः : **विजित्य, प्रनृत्य, अधिकृत्य, किंकृत्य** । समास इति किम् ? कृत्वा, हृत्वा, अनञ् पूर्व इति किम् ? अकृत्वा, अहृत्वा, अजित्वा, अपठित्वा । **वा ल्यपि** (VI. 4. 38.) ल्यपि परतः अनुदात्तोपदेशवनति तनोत्यादीनामनुनासिकलोपो भवति ; व्यवस्थित विभाषाचेयम् ; तेन मकारान्तानामेव विकल्पो भवति , अन्यत्र नित्यमेव ; **प्रणम्य प्रणत्य, आगम्य आगत्य** ; अन्यत्र तु अवमत्य, प्रवत्य, आहत्य इत्यादि । **आदेच उपदेशेऽशिति** (VI. 1. 45.) —इति वर्तमाने: **मीनातिमिनोति दीङां ल्यपिच** (VI. 1. 50.)—मीङ् हिंसायां, डुमिञ् प्रक्षेपणे, दीङ् क्षये इत्येतेषां धातूनां ल्यपि विषये चकारादेज्विषये च उपपदे शे एव प्राक्प्रत्ययोत्पत्तेरेवालोन्त्यस्य विभाषा आकारादेशो भवति **प्रमाय, प्रतिमाय, उपमाय** । **विभाषा लीयतेः** (VI. 1. 51.)—लीयतेर्धातोर्विभाषाल्यब्विषये एचश्च विषये उपदेशे अलोन्त्यस्य स्थाने आकारादेशो भवति ; **विलाय, विलीय** । **नल्यपि** (VI. 4. 69.)—ल्यपि परतो घुमास्थेत्यादिना यदुक्तं तन्न भवति इति

इत्व प्रतिषेधः : निमाय, प्रमाय, उपदाय, सन्दाय, प्रस्थाय, अवसाय, विहाय । मयतेरिदन्यतरस्याम् (VI. 4. 70.)—मयतेरिकारादेशो वा ल्यपि भवति : अपमित्य, पक्षे अपमाय । अदोजग्धिर्ल्यप्तिकिति (II. 4. 36.) अदो जग्धिरादेशो भवति ल्यपि तकारादौ च किति प्रत्ययेपरतः प्रजग्ध्य, विजग्ध्य ;

" जग्धौ सिद्धेऽन्तरङ्गत्वात्तिकितीतिल्यवुच्यते ।
ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् ॥ "

तेन अवदाय, अवसाय इत्यत्र द्यतिस्यति मास्था मित्तिकिति (VII. 4. 40.) इति इत्वं न भवति । ल्यपिलघुपूर्वात् (VI. 4. 56.)—ल्यपि परतो लघुपूर्वादुत्तरस्य णेरयादेशो भवति : प्रशमय्य, गतः विगणय्य, सङ्गमय्य । विभाषापः (VI. 4. 57)—आप उत्तरस्य णेः ल्यपि परतो वा अयादेशो भवति : प्रापय्य, प्राप्य । क्षियः (VI. 4. 59.)—क्षियश्च दीर्घो ल्यपि परतो भवति : प्रक्षीय ॥

आभीक्ष्ण्ये णमुल् च (III. 3. 22.)—समानकर्तृकयोः पूर्व काल इत्येव : आभीक्ष्ण्यं पौनः पुन्यम् प्रकृत्यर्थविशेषणञ्चैतत् : आभीक्ष्ण्य-विशिष्टेऽर्थे वर्तमानाद्धातोर्णमुल् प्रत्ययो भवति : चकारात् क्त्वा च : नित्यवीप्सयोः (VIII. 1. 4.) नित्यार्थे वीप्सायां यद्वर्तते तस्य सर्वस्य द्वे भवतः : आभीक्ष्ण्यमिहनित्यता ;

" ईक्षमीक्षं तदाबाला रोदंरोदं चमूमनु ।
आयमायं निवृत्ताया जीवेदेकाकिनी कथम् ॥

